# संक्षिप्तमहाभारत.



चिंतामण विनायक वैद्य एम्. ए., एल. एल. बी.,
मुंबई येथील युनिव्हर्सिटीचे ऑननरी फेलो,
आणि
ग्वालेर संस्थानचे माजी चीफ-जस्टिस

यांनी तयार केलें

तें

रामचंद्र गोविंद एण्ड सन,
बुकसेलर्स आणि पब्लिशर्स,
काळबादेवी रोड, मुंबई,
यांनी
मुंबईत
मुंबईवैभव छापखान्यात छापिलें.

आवृत्ति चौथी

सन १९२१

# PREFACE.

While reading the Rámáyana and the Mahábhárata the idea struck me that abridged forms of the epics would be useful in more ways than one. They would interest those who knowing Sanskrit like to learn something of the epics at first hand but who have not the patience or the leisure to go through the voluminous originals. Secondly they would be invaluable as text-books in schools and colleges, which are at present compelled to exclude the epics from their curriculum owing to their enormous length Students are thus at present debarred from drinking at the pure fountain-head of Sanskrit poetry with its chaste language and its high ideals, and have to study instead later epic property which, even in Kalidasa, is more artificial and laboured and is certainly more debased in taste. Lastly it would be useful, from a critical point of view to see what the epics might have been in their original unexpanded shape. Very few deny that the epics only assumed their present bulky form sometime before the beginning of the Christian Era. With these three purposes in view, I have abridged the Ramayana and the Mahábhàrata giving the chief story in a connected form and in the very words of the author, and preserving at considerable length, such passages or episodes as constitute the most beautiful portions of the epics, from a poetical or didactic point of view. I have also tried to give what may be supposed to be the original archaic portions of them It is to be hoped that I have succeeded in my attempt and that it is liked by those for whom it is intended

This abridgment of the Mahabhàrata contains about 7500 Shlokàs and is about one twelfth of the original. I have mainly used for this abridgment the Bombay version of the epic. As the work was got through the press hastily, the addition of a corrigenda was found necessary and will, I hope, be tolerated

*31st October 1902* C. V. VAIDYA.

## PREFACE TO THE SECOND EDITION.

I may take this opportunity of thanking the Allahabad University for prescribing this book for rapid reading at its Inter. and B. A. Examinations and thus placing the book in the hands of those for whom it is primarily intended. This has necessitated the issue of this second edition in preparing which I have had valuable suggestions from several persons who have to teach the book. I hope, therefore, that this edition leaves very little to be desired and that the book is more widely appreciated.

BOMBAY,
*May 1909.*

C. V. VAIDYA.

# संक्षिप्तमहाभारतम्.

प्रणिपत्य गिरामीशं पितरं च विनायकम् ।
चिंतामणिः संक्षिपति भारतं भारतीमुदे ॥

## आदिपर्व.

### अथ प्रथमोऽध्यायः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १

लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये सुखासीनानभ्य-
गच्छद्ब्रह्मर्षीन् संशितव्रतान् ॥ २

अथापृच्छदृषिस्तत्र कश्चित्प्रस्तावयन्कथाः ।
कुत आगम्यते सौते क्व कालो विहृतस्त्वया ॥ ३

सौतिरुवाच—जनमेजयस्य राजर्षेः सर्पसत्रे महात्मनः ।
कृष्णद्वैपायनप्रोक्ताः सुपुण्या विविधाः कथाः ॥ ४

कथिताश्चापि विधिवद्या वैशंपायनेन वै ।
श्रुत्वाहं ता विचित्रार्था महाभारतसंश्रिताः ॥ ५

गतवानस्मि तं देशं युद्धं यत्राभवत्पुरा ।
कुरूणां पांडवानां च सर्वेषां च महीक्षिताम् ॥ ६

दिदृक्षुरागतस्तस्मात्समीपं भवतामिह ।

ऋषय ऊचुः—द्वैपायनेन यत्प्रोक्तं पुराणं परमर्षिणा ॥ ७

तस्याख्यानवरिष्ठस्य विचित्रपदपर्वणः ।
संहितां श्रोतुमिच्छामः पुण्यां पापभयापहाम् ॥ ८

सौतिरुवाच—आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ।
प्रवक्ष्यामि मतं पुण्यं व्यासस्याद्भुतकर्मणः ॥ ९

मन्वादि भारतं केचिदास्तिकादि तथापरे ।
तथोपरिचराद्यन्ये विप्राः सम्यगधीयते ॥ १०

तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम् ।
इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः ॥ ११

ततः सस्मार हेरंबं व्यासः सत्यवतीसुतः ।
तत्राजगाम विघ्नेशो वेदव्यासो यतः स्थितः ॥ १२

व्या० उ०—लेखको भारतस्यास्य भव त्व गणनायक ।
मयैव प्रोच्यमानस्य मनसा कल्पितस्य च ॥ १३

श्रुत्वैतत्प्राह विघ्नेशो यदि मे लेखनी क्षणम् ।
लिखतो नावतिष्ठेत तदा स्यां लेखको ह्यहम् ॥ १४

व्यासोऽप्युवाच त देवमबुध्वा मा लिख क्वचित् ।
ओमित्युक्त्वा गणेशोपि बभूव किल लेखकः ॥ १५

ग्रथग्रंथिं तदा चक्रे मुनिर्गूढ कुतूहलात् ।
यस्मिन् प्रतिज्ञया प्राह मुनिर्द्वैपायनस्त्विदम् ॥ १६

अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च ।
अह वेद्मि शुको वेत्ति सजयो वेत्ति वा न वा ॥ १७

सर्वज्ञोपि गणेशो यत् क्षणमास्ते विचारयन् ।
तावच्चकार व्यासोऽपि श्लोकानन्यान्बहूनपि ॥ १८

सग्रहाध्यायबीजो वै पौलोमास्तीकमूलवान् ।
संभवस्कंधविस्तारः सभारण्यविटकवान् ॥ १९

अरणीपर्वरूपाढ्यो विराटोद्योगसारवान् ।
भीष्मपर्वमहाशाखो द्रोणपर्वपलाशवान् ॥ २०

कर्णपर्वसितैः पुष्पैः शल्यपर्वसुगाधिभि. ।
स्त्रीपर्वैषीकविश्रामः शांतिपर्वमहाफलः ॥ २१

अश्वमेधामृतरसस्त्वाश्रमस्थानसश्रयः ।
मौसलश्रुतिसंक्षेपः शिष्टाद्विजनिषेवितः ॥ २२

सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति ।
पर्जन्य इव भूतानामक्षयो भारतद्रुमः ॥ २३

चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् ।
उपाख्यानैर्विना तावद् भारतं प्रोच्यते बुधैः ॥ २४

षष्टि शतसहस्राणि चकारान्यां स संहिताम् ।
एकं शतसहस्रं तु मानुषेषु प्रतिष्ठितम् ॥ २५

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥ २६

अर्थशास्त्रमिद प्रोक्तं धर्मशास्त्रमिद महत् ।
कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ॥ २७
श्रुत्वा त्विदमुपाख्यानं श्राव्यमन्यन्न रोचते ।
पुंस्कोकिलगिरं श्रुत्वा रूक्षा ध्वांक्षस्य वागिव ॥ २८
इतिहासोत्तमादस्माज्जायंते कविबुद्धयः ।
पंचेभ्य इव भूतेभ्यो लोकसंविधयस्त्रय. ॥ २९
क्रियागुणानां सर्वेषामिदमाख्यानमाश्रयः ।
इंद्रियाणा समस्तानां चित्रा इव मनःक्रिया ॥ ३०
अनाश्रित्यैतदाख्यानं कथा भुवि न विद्यते ।
आहारमनपाश्रित्य शरीरस्येव धारणम् ॥ ३१
इदं कविवरैः सर्वैराख्यानमुपजीव्यते ।
उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥ ३२

इति श्रीसंक्षिप्तमहाभारते प्रथमोऽध्याय ॥ १ ॥

## अथ द्वितीयोऽध्यायः ।

सौतिरुवाच—जनमेजयः पारीक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते । तेषु तत्सत्रमुपासीनेष्वागच्छत्सारमेयः । जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत् । त माता रोरूयमाणमुवाच किं रोदिषि केनास्यभिहत इति । स एवमुक्तो मातर प्रत्युवाच जनमेजयस्य भ्रातृभिरभिहतोस्मीति । तं माता प्रत्युवाच व्यक्त त्वया तत्रापराद्धं येनास्यभिहत इति। स ता पुनरुवाच नापराध्यामि किंचिन्नावेक्षे हवींषि नावलिह इति । तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्ता तत्सत्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिर्दीर्घसत्रमुपास्ते। स तया क्रुद्धया तत्रोक्तोऽयं मे पुत्रो न किंचिदपराध्यति नावेक्षते हवीषि नावलेढि किमर्थमभिहत इति । न किंचिदुक्तवंतस्ते । सा तानुवाच यस्मादयमभिहतोऽनपकारी तस्माददृष्टं त्वां भयमागमिष्यतीति । जनमेजय एवमुक्तो देवशुन्या सरमया भृश संभ्रांतो विषण्णश्चासीत् । स तस्मिन्सत्रे समाप्ते हस्तिनापुरं प्रत्येत्य पुरोहितमनुरूपमन्विष्यमासः परं यत्नमकरोत् यो मे पापकृत्यां शमयेदिति । स कदाचिन्मृगयां गतः पारीक्षितो जनमेजयः कस्मिंश्चित्स्वविषय आश्रममपश्यत् । तत्र कश्चिदृषिरासांचक्रे श्रुतश्रवा नाम । तस्य तपस्यभिरत. पुत्र आस्ते

सोमश्रवा नाम । तस्य तं पुत्रमभिगम्य जनमेजयः पारीक्षितः पौरोहित्याय वव्रे । स नमस्कृत्य तमृषिमुवाच भगवन्नयं तव पुत्रो मम पुरोहितोऽस्त्विति। स एवमुक्तः प्रत्युवाच जनमेजयं भो जनमेजय पुत्रोऽयं मम सर्प्यां जातो महातपस्वी स्वाध्यायसंपन्नो मत्तपोवीर्यसंभृतो मच्छुक्रं पीतवत्यास्तस्याः कुक्षौ जातः समर्थोऽयं भवतः सर्वाः पापकृत्याः शमयितुमंतरेण महादेवकृत्याम् । अस्य त्वेकमुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः कंचिदर्थमभियाचेत्त तस्मै दद्यादयं यद्येतदुत्सहसे ततो नयस्वैनमिति । तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच भगवस्तत्तथा भविष्यतीति। स तं पुरोहितमुपादायोपावृत्तो भ्रातॄनुवाच मयाऽयं वृत उपाध्यायो यदयं ब्रूयात्तत्कार्यमविचारयद्भिर्भवद्भिरिति । तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः । स तथा भ्रातॄन् संदिश्य तक्षशिलां प्रत्यभिप्रतस्थे । तं च देशं वशे स्थापयामास ॥ १–२० ॥

इति संक्षिप्तमहाभारते द्वितीयोऽध्यायः ॥ २ ॥

---

## अथ तृतीयोऽध्यायः ।

आस्तीकस्य पिता ह्यासीत् प्रजापतिसमः प्रभुः ।
जरत्कारुरिति ख्यात ऊर्ध्वरेता महातपाः ॥ १
स कदाचिन्महाभागस्तपोबलसमन्वितः ।
चचार पृथिवीं सर्वां यत्र सायंगृहो मुनिः ॥ २
अटमानः कदाचित्स्वान् स ददर्श पितामहान् ।
लंबमानान्महागर्ते पादैरूर्ध्वैरवाङ्मुखान् ॥ ३
जर० उ०—के भवतोऽवलंबंते गर्ते ह्यस्मिन्नधोमुखाः ।
पितर ऊचुः—यायावरा नाम वयमृषयः शंसितव्रताः ॥ ४
संतानप्रक्षयाद्ब्रह्मन्नधो गच्छाम मेदिनीम् ।
अस्माकं संततिस्त्वेको जरत्कारुरिति स्मृतः ॥ ५
न स पुत्रान् जनयितुं दारान्मूढश्चिकीर्षति ।
जर० उ०—मम पूर्वे भवतो वै पितरः सपितामहाः ॥ ६
ब्रूत किं करवाण्यद्य जरत्कारुरहं स्वयम् ।
पितर ऊचुः—यतस्व यत्नवांस्तात संतानाय कुलस्य नः ॥ ७
आत्मनोऽर्थेऽस्मदर्थे च धर्म इत्येव वा विभो ।
न हि धर्मफलैस्तात न तपोभिः सुसंचितैः ॥ ८

तां गतिं प्राप्नुवंतीह पुत्रिणो यां व्रजंति वै ।
जर० उ०—दरिद्राय हि मे भार्या को दास्यति विशेषतः ॥ ९
प्रतिग्रहीष्ये भिक्षा तु यदि कश्चित्प्रदास्यति ।
सौतिरुवाच—ततो निवेशाय तदा स विप्रः शंसितव्रतः ॥ १०
महीं चचार दारार्थी न च दारानविंदत ।
स कदाचिद्वनं गत्वा विप्रः पितृवचः स्मरन् ॥ ११
चुक्रोश कन्याभिक्षार्थी तिस्रो वाचः शनैरिव ।
तं वासुकिः प्रत्यगृह्णादुद्यम्य भगिनीं तदा ॥ १२
तमुवाच महाप्राज्ञो जरत्कारुर्महातपाः ।
किंनाम्नी भगिनीयं ते ब्रूहि सत्यं भुजंगम ॥ १३
वासुकिरुवाच—जरत्कारो जरत्कारुः स्वसेयमनुजा मम ।
त्वदर्थं रक्षिता पूर्वं प्रतीच्छेमां द्विजोत्तम ॥ १४
एवमुक्त्वा ततः प्रादाद्भार्यार्थे वरवर्णिनीम् ।
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ १५
आस्तीको नाम पुत्रश्च तस्यां जज्ञे महामनाः ।
तपस्वी च महात्मा च वेदवेदांगपारगः ॥ १६

इति संक्षिप्तमहाभारते तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः ।

सौतिरुवाच—परीक्षिन्नाम राजासीद्ब्रह्मन् कौरववंशजः ।
यथा पांडुर्महाबाहुर्धनुर्धरवरो युधि ॥ १
स कदाचिन् मृगं विद्ध्वा बाणेनानतपर्वणा ।
पृष्ठतो धनुरादाय ससार गहने वने ॥ २
परिश्रांतः पिपासार्त आससाद मुनिं वने ।
अपृच्छद् धनुरुद्यम्य तं मुनिं क्षुच्छ्रमान्वितः ॥ ३
भो भो ब्रह्मन्नहं राजा परीक्षिदभिमन्युजः ।
मया विद्धो मृगो नष्टः कच्चित्त्वं दृष्टवानसि ॥ ४
स मुनिस्तं तु नोवाच किंचिन्मौनव्रते स्थितः ।
तस्य स्कंधे मृतं सर्पं क्रुद्धो राजा समासजत् ॥ ५

न हि तं राजशार्दूलस्तथा धर्मपरायणम् ।
जानाति भरतश्रेष्ठस्तत एनमधर्षयत् ॥ ६

तरुणस्तस्य पुत्रोऽभूत्तिग्मतेजा महातपाः ।
शृंगी नाम महाक्रोधो दुःप्रसादो महाव्रतः ॥ ७

आविष्टः स हि कोपेन शशाप नृपति तदा ।
योऽसौ वृद्धस्य तातस्य तथा कृच्छ्रगतस्य ह ॥ ८

स्कधे मृत्त समास्राक्षीत्पन्नगं राजाकिल्बिषी ।
त पापमतिसक्रुद्धस्तक्षकः पन्नगेश्वरः ॥ ९

सप्तरात्रादितो नेता यमस्य सदनं प्रति ।
तमब्रवीत् पिता ब्रह्मस्तथा कोपसमन्वितम् ॥ १०

न मे प्रियं कृत तात नैष धर्मस्तपस्विनाम् ।
वय तस्य नरेंद्रस्य विषये निवसामहे ॥ ११

तेनेह क्षुधितेनाद्य श्रातेन च तपस्विना ।
अजानता कृतं मन्ये व्रतमेतादिद मम ॥ १२

जानाम्युग्रप्रभाव त्वां तात सत्यगिर तथा ।
नानृत चोक्तपूर्व ते नैतन्मिथ्या भविष्यति ॥ १३

शम एव यतीना तु क्षमिणा सिद्धिकारकः ।
क्षमावतामय लोकः परश्चैव क्षमावताम् ॥ १४

मया तु शममास्थाय यच्छक्यं कर्तुमद्य वै ।
तत्करिष्याम्यहं तात प्रेषयिष्ये नृपाय वै ॥ १५

सौतिरुवाच—एवमादिश्य शिष्य स प्रेषयामास सुव्रतः ।
परीक्षिते नृपतये दयापन्नो महातपाः ॥ १६

श्रुत्वा शिष्यवचो घोर स राजा कुरुनंदन ।
पर्यतप्यत तत्पाप कृत्वा राजा महातपाः ॥ १७

त च मौनव्रतं श्रुत्वा वने मुनिवरं तदा ।
भूय एवाभवाद्राजा शोकसतप्तमानसः ॥ १८

अनुक्रोशात्मता तस्य शमीकस्यावधार्य च ।
पर्यतप्यत भूयोपि कृत्वा तत्किल्बिषं मुनेः ॥ १९

संमंत्र्य मंत्रिभिश्चैव स तथा मंत्रतत्त्ववित् ।
प्रासादं कारयामास एकस्तंभं सुराक्षितम् ॥ २०

रक्षां च विदधे तत्र भिषजश्चौषधानि च ।
ब्राह्मणान्मंत्रसिद्धांश्च सर्वतो वै न्ययोजयत् ॥ २१
राजकार्याणि तत्रस्थः सर्वाण्येवाकरोच्च सः ।
मंत्रिभिः सह धर्मज्ञः समंतात्परिरक्षितः ॥ २२
न चैनं कश्चिदारूढं लभते राजसत्तमम् ।
वातोऽपि निश्चरंस्तत्र प्रवेशे विनिवार्यते ॥ २३
प्राप्ते च दिवसे तस्मिन् सप्तमे द्विजसत्तमः ।
काश्यपोऽभ्यागमाद्विद्वांस्त राजानं चिकित्सितुम् ॥ २४
त ददर्श स नागेंद्रस्तक्षकः काश्यप पथि ।
गच्छंतमेकमनस द्विजो भूत्वा वयोतिगः ॥ २५
तमब्रवीत् पन्नगेंद्रः काश्यप मुनिपुंगवम् ।
क भवास्त्वरितो याति किं च कार्य चिकीर्षति ॥ २६
का० उ०—नृप कुरुकुलोत्पन्नं परीक्षितमरिंदमम् ।
तक्षक पन्नगश्रेष्ठस्तेजसाऽद्य प्रधक्ष्यति ॥ २७
त दष्टं पन्नगेंद्रेण तेनाग्निसमतेजसम् ।
गच्छामि त्वरित सोम्य सद्यः कर्तुमपज्वरम् ॥ २८
क्षा० उ०—अहं स तक्षको ब्रह्मस्त धक्ष्यामि महीपतिम् ।
निवर्तस्व न शक्यस्त्व मया दष्ट चिकित्सितुम् ॥ २९
पर मत्रबलं यत्ते तद्दर्शय यतस्व च ।
न्यग्रोधमेन धक्ष्यामि पश्यतस्ते द्विजोत्तम ॥ ३०
स वृक्षस्तेन दष्टस्तु पन्नगेन महात्मना ।
आशीविषविषोपेतः प्रजज्वाल समन्ततः ॥ ३१
ततः स भगवान् विद्वान् काश्यपो द्विजसत्तमः ।
भस्मराशीकृत वृक्षं विद्यया समजीवयत् ॥ ३२
त दृष्ट्वा जीवित वृक्षं काश्यपेन महात्मना ।
उवाच तक्षको ब्रह्मन्नेतदत्यद्भुतं त्वयि ।
द्विजेंद्र यद्विषं हन्या मम वा मद्विधस्य वा ॥ ३३
यत्तेभिलषित प्राप्तु फलं तस्मान्नृपोत्तमात् ।
अहमेव प्रदास्यामि तत्ते यद्यपि दुर्लभम् ॥ ३४
विप्रशापाभिभूते च क्षीणायुषि नराधिपे ।
घटमानस्य ते विप्र सिद्धिः संशयिता भवेत् ॥ ३५

सौतिरुवाच—तक्षकस्य वचः श्रुत्वा काश्यपो द्विजसत्तमः ।
दिव्यज्ञानः स तेजस्वी ज्ञात्वा त नृपतिं तदा ॥ ३६
क्षीणायुष पांडवेयमपावर्तत काश्यपः ।
लब्ध्वा वित्तं मुनिवरस्तक्षकाद्यावदीप्सितम् ॥ ३७
निवृत्ते काश्यपे तस्मिन् समयेन महात्मनि ।
जगाम तक्षकस्तूर्ण नगरं नागसाह्वयम् ॥ ३८
अथ शुश्राव गच्छन् स तक्षको जगतीपतिम् ।
मन्त्रैर्गदैर्विषहरै रक्षमाणं प्रयत्नतः ॥ ३९
ततस्तापसरूपेण प्राहिणोत्स भुजगमान् ।
फलदर्भोदकं गृह्य राज्ञे नागोथ तक्षकः ॥ ४०
उपनिन्युस्तथा राज्ञे दर्भानापः फलानि च ।
तच्च सर्व स राजेंद्रः प्रतिजग्राह वीर्यवान् ॥ ४१
गतेषु तेषु नागेषु तापसच्छद्मरूपिषु ।
अमात्यान् सुहृदश्चैव प्रोवाच स नराधिपः ॥ ४२
भक्षयतु भवतो वै स्वादूनीमानि सर्वशः ।
यस्मिन्नेव फले नागस्तमेवाभक्षयत्स्वयम् ॥ ४३
ततो भक्षयतस्तस्य फलात् कृमिरभूदणुः ।
ह्रस्वकः कृष्णनयनस्ताम्रवर्णोथ शौनक ॥ ४४
स त गृह्य नृपश्रेष्ठः सचिवानिदमब्रवीत् ।
अस्तमभ्येति सविता विषादद्य न मे भयम् ॥ ४५
सत्यवागस्तु स मुनिः कृमिर्मा दशतामयम् ।
तक्षको नाम भूत्वा वै तथा परिहृतं भवेत् ॥ ४६
एवमुक्त्वा स राजेंद्रो ग्रीवायां सन्निवेश्य ह ।
कृमिकं प्राहसत्तूर्ण मुमूर्षुर्नष्टचेतनः ॥ ४७
प्राहसन्नेव भोगेन तक्षकेण त्ववेष्ट्यत ।
वेष्टयित्वा च वेगेन विनद्य च महास्वनम् ।
अदशत्पृथिवीपाल तक्षकः पन्नगेश्वरः ॥ ४८
ते तथा मंत्रिणो दृष्ट्वा भोगेन परिवेष्टितम् ।
विषण्णवदनाः सर्वे रुरुदुर्भृशदुःखिताः ॥ ४९
तं तु नादं ततः श्रुत्वा मंत्रिणस्ते प्रदुद्रुवुः ।
अपश्यंत तथा यान्तमाकाशे नागमद्भुतम् ॥ ५०

नृपं शिशुं तस्य ततः प्रचक्रिरे समेत्य सर्वे पुरवासिनो जनाः ।
नृपं यमाहुस्तममित्रघातिनं कुरुप्रवीरं जनमेजयं जनाः ॥ ५१

इति श्रीसंक्षिप्तमहाभारते आदिपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

---

## अथ पंचमोऽध्यायः ।

सौ० उ०—ब्रह्मन्भरतशार्दूलो राजा पारीक्षितस्तदा ।
पुरोहितमथाहूय ऋत्विजो वसुधाधिपः ॥ १
अब्रवीद्वाक्यसंपन्नः कार्यसंपत्करं वचः ।
अपि तत्कर्म विदितं भवतां येन पन्नगम् ॥ २
तक्षकं संप्रदीप्तेऽग्नौ प्रक्षिपेयं सबांधवम् ।
ऋ० उ०—अस्ति राजन्महत्सत्रं त्वदर्थे देवनिर्मितम् ॥ ३
आहर्ता तस्य सत्रस्य त्वन्नान्योऽस्ति नराधिपः ।
सौ० उ०—एवमुक्तः स राजर्षिर्मेने दग्धं हि तक्षकम् ॥ ४
प्रभूतधनधान्याढ्यमृत्विग्भिः सुनिषेवितम् ।
निर्माय चापि विधिवद्यज्ञायतनमीप्सितम् ॥ ५
स्थपतिर्बुद्धिसंपन्नो वास्तुविद्याविशारदः ।
इत्यब्रवीत् सूत्रधारः सूतः पौराणिकस्तदा ॥ ६
यस्मिन्देशे च काले च मापनेयं प्रवर्तिता ।
ब्राह्मणं कारणं कृत्वा नायं संस्थास्यते क्रतुः ॥ ७
राजानं दीक्षयामासुः सर्पसत्राप्तये तदा ।
ततः कर्म प्रववृते सर्पसत्रविधानतः ॥ ८
पर्यक्रामंश्च विधिवत्स्वे स्वे कर्माणि याजकाः ।
प्रावृत्य कृष्णवासांसि धूम्रसंरक्तलोचनाः ॥ ९
जुहुवुर्मन्त्रवच्चैव समिद्धं जातवेदसम् ।
कंपयंतश्च सर्वेषामुरगाणां मनांसि च ॥ १०
सर्पानाजुहुवुस्तत्र सर्वानग्निमुखे तदा ।
ततः सर्पाः समापेतुः प्रदीप्ते हव्यवाहने ॥ ११
विचेष्टमानाः कृपणमाह्वयंतः परस्परम् ।
विस्फुरंतः श्वसंतश्च वेष्टयंतः परस्परम् ॥ १२

पुच्छैः शिरोभिश्च भृशं चित्रभानुं प्रपेदिरे ।
श्वेताः कृष्णाश्च नीलाश्च स्थविराः शिशवस्तथा ॥ १३
नदंतो विविधान्नादान्पेतुर्दीप्ते विभावसौ ।
एव शतसहस्राणि प्रयुतान्यर्बुदानि च ॥ १४
अवशानि विनष्टानि पन्नगानां तु तत्र वै ।
तुरगा इव तत्रान्ये हस्तिहस्ता इवापरे ॥ १५
मत्ता इव च मातंगा महाकाया महाबलाः ।
उच्चावचाश्च बहवो नानावर्णा विषोल्बणा. ॥ १६
घोराश्च परिघप्रख्या दंदशूका महाबलाः ।
प्रपेतुरग्नावुरगा मातृवाग्दडपीडिताः ॥ १७
अजस्र निपतत्स्वग्नौ नागेषु भृशदुःखितः ।
अल्पशेषपरीवारो वासुकिः पर्यतप्यत ॥ १८
कश्मलं चाविशद् घोरं वासुकिं पन्नगोत्तमम् ।
स घूर्णमानहृदयो भगिनीमिदमब्रवीत् ॥ १९
अयं स कालः संप्राप्तो यदर्थमसि मे स्वसा ।
जरत्कारौ मया दत्ता त्रायस्वास्मान् सबांधवान् ॥ २०
तत आहूय पुत्र स्व जरत्कारुर्भुजगमा ।
वासुकेर्नागराजस्य वचनादिदमब्रवीत् ॥ २१
अह तव पितु. पुत्र भ्रात्रा दत्ता निमित्तत. ।
कालः स चाय सप्राप्तस्तत्कुरुष्व यथातथम् ॥ २२
आ० उ०—किंनिमित्त मम पितुर्दत्ता त्व मातुलेन मे ।
तन्ममाचक्ष्व तत्त्वेन श्रुत्वा कर्ताऽस्मि तत्तथा ॥ २३
ज० उ०—पन्नगानामशेषाणां माता कद्रूरिति श्रुता ।
तया शप्ता रुषितया सुता यस्मान्निबोध तत् ॥ २४
उच्चैःश्रवाः सोऽश्वराजो यन्मिथ्या न कृतो मम ।
विनतार्थाय पणित दासभावाय पुत्रकाः ॥ २५
जनमेजयस्य वो यज्ञे धक्षत्यनिलसारथि ।
तत्र पचत्वमापन्नाः प्रेतलोकं गमिष्यथ ॥ २६
ता च शप्तवती देवः साक्षाल्लोकपितामहः ।
एवमस्त्विति तद्वाक्यं प्रोवाचानुममोद च ॥ २७

वासुकिश्चापि तच्छ्रुत्वा पितामहवचस्तदा ।
अमृते मथिते तात देवाञ्छरणमेयिवान् ॥ २८
सिद्धार्थाश्च सुराः सर्वे प्राप्यामृतमनुत्तमम् ।
भ्रातरं मे पुरस्कृत्य पितामहमुपागमन् ॥ २९
ते तं प्रसादयामासु. सुराः सर्व असंभवम् ।
राज्ञा वासुकिना सार्धं शापोऽसौ न भवेदिति ॥ ३०
ब्रह्मोवाच—जरत्कारुर्जरत्कारुं यां भार्यां समवाप्स्यति ।
तत्र जातो द्विज· शापान्मोक्षयिष्यति पन्नगान् ॥ ३१
सो० उ०—एवमुक्तस्तथेत्युक्त्वा सोस्तीको मातर तदा ।
अब्रवीद्दुःखसतप्त वासुकिं जीवयन्निव ॥ ३२
अह त्वा मोक्षयिष्यामि वासुके पन्नगोत्तम ।
तस्माच्छापान्महासत्व सत्यमेतद्ब्रवीमि ते ॥ ३३
ततः स वासुकेर्घोरमपनीय मनोज्वरम् ।
आधाय चात्मनोऽगेषु जगाम त्वरितो भृशम् ॥ ३४
स गत्वाऽपश्यदास्तीको यज्ञायतनमुत्तमम् ।
वृत सदस्यैर्बहुभि· सूर्यवह्निसमप्रभैः ॥ ३५
स तत्र वारितो द्वास्थै. प्रविशन् द्विजसत्तमम् ।
अभितुष्टाव त यज्ञ प्रवेशार्थी परतप ॥ ३६
शक्रस्य यज्ञ. शतसख्य उक्तस्तथा पर तुल्यसंख्य शत वै ।
तथा यज्ञोऽयं तव भारताग्र्य पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्य. ॥ ३७
गयस्य यज्ञो शशबिदोश्च राज्ञो यज्ञस्तथा वैश्रवणस्य राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ३८
इमे च ते सूर्यसमानवर्चसः समासते वृत्रहणः क्रतुं यथा ।
नैषा ज्ञातुं विद्यते ज्ञानमद्य दत्तं येभ्यो न प्रणश्येत् कदाचित् ॥ ३९
ऋत्विक् समो नास्ति लोकेषु चैव द्वैपायनेनेति विनिश्चित मे ।
एतस्य शिष्या हि क्षितिं चरंति सर्वर्त्विजः कर्मसु स्वेषु दक्षाः ॥ ४०
नेह त्वदन्यो विद्यते जीवलोके समो नृपः पालयिता प्रजानाम् ।
धृत्या च ते प्रीतमनाः सदाऽहं त्व वा वरुणो धर्मराजो यमो वा ॥ ४१
यमो यथा धर्मविनिश्चयज्ञः कृष्णो यथा सर्वगुणोपपन्नः ।
श्रियां निवासोऽसि यथा वसूनां निधानभूतोऽसि तथा क्रतूनाम् ॥ ४२

ज० उ०—बालाभिरूपस्य तवाप्रमेय वरं प्रयच्छामि यथानुरूपम् ।
ऋ० ऊ०—अयमायाति तूर्णं स तक्षकस्ते वशं नृप ॥ ४३
श्रूयतेऽस्य महान्नादो नदतो भैरवं रवम् ।
नूनं मुक्तो वज्रभृता स नागो भ्रष्टो नाकान्मन्त्रवित्रस्तकायः ॥ ४४
घूर्णन्नाकाशे नष्टसंज्ञोऽभ्युपैति तीव्रान्निश्वासान्निश्वसन्पन्नगेंद्रः ।
सौ० उ०—पतिष्यमाने नागेंद्रे तक्षके जातवेदसि ॥ ४५
इदमन्तरमित्येव तदास्तीकोऽभ्यचोदयत् ।
आ० उ०—वरं ददासि चेन्मह्यं वृणोमि जनमेजय ॥ ४६
सत्रं ते विरमत्वेतन्न पतेयुरिहोरगाः ।
तमिन्द्रहस्ताद्वित्रस्त विसंज्ञ पन्नगोत्तमम् ॥ ४७
आस्तीकास्तिष्ठ तिष्ठेति वाचास्तिस्रोऽभ्युदीरयत ।
वितस्थे सोऽन्तरिक्षे च हृदयेन विदूयता ॥ ४८
ततो राजाऽब्रवीद्वाक्यं सदस्यैश्चोदितो भृशम् ।
काममेतद् भवत्वेव यथास्तीकस्य भाषितम् ॥ ४९
समाप्यतामिदं कर्म पन्नगाः संत्वनामयाः ।
प्रीयतामयमास्तीकः सत्यं सूतवचोऽस्तु तत् ॥ ५०
ततो हलाहलाशब्दः प्रीतिदः समजायत ।
आस्तीकस्य वरे दत्ते तथैवोपरराम च ॥ ५१
स गत्वा परमप्रीतो मातुलं मातरं च ताम् ।
अभिगम्योपसंगृह्य यथावृत्तं न्यवेदयत् ॥ ५२
बा० ऊ०—सर्पापसर्प भद्रं ते गच्छ सर्प महाविष ।
जनमेजयस्य यज्ञांते आस्तीकवचनं स्मर ॥ ५३
आस्तीकस्य वचः श्रुत्वा यः सर्पो न निवर्तते ।
शतधा भिद्यते मूर्ध्नि शिंशवृक्षफलं यथा ॥ ५४

इति श्रीसंक्षिप्तमहाभारते आदिपर्वणि पंचमोऽध्यायः ॥ ५ ॥

---

## अथ षष्टोऽध्यायः ।

सौ० उ०—श्रुत्वा तु सर्पसत्राय दीक्षितं जनमेजयम् ।
अभ्यगच्छदृषिर्विद्वान् कृष्णद्वैपायनस्तदा ॥ १

जनमेजयस्तु राजर्षिर्दृष्ट्वा तमृषिमागतम् ।
सगणोऽभ्युद्ययौ तूर्णं प्रीत्या भरतसत्तमः ॥ २
कांचनं विष्टरं तस्मै सदस्यानुमतः प्रभुः ।
आसनं कल्पयामास यथा शक्रो बृहस्पतेः ॥ ३
तत्रोपविष्टं वरदं देवर्षिगणपूजितम् ।
उपोपविश्य प्रीतात्मा पर्यपृच्छदनामयम् ॥ ४
ततस्तु सहितः सर्वैः सदस्यैर्जनमेजयः ।
इदं पश्चाद् द्विजश्रेष्ठं पर्यपृच्छत्कृताञ्जलिः ॥ ५
कुरूणां पाण्डवानां च भवान् प्रत्यक्षदर्शिवान् ॥
तेषां चरितमिच्छामि कथ्यमानं त्वया द्विज ॥ ६
कथं समभवद्भेदस्तेषामक्लिष्टकर्मणाम् ।
तच्च युद्धं कथं वृत्तं भूतान्तकरणं महत् ॥ ७
तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा ।
शशास शिष्यमासीनं वैशंपायनमन्तिके ॥ ८
वैश० उ०—गुरवे प्राङ्नमस्कृत्य मनोबुद्धिसमाधिभिः ।
संपूज्य च द्विजान् सर्वांस्तथान्यान् विदुषो जनान् ॥ ९
महर्षेर्विश्रुतस्येह सर्वलोकेषु धीमतः ।
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्याऽस्य महात्मनः ॥ १०
भरतानां महज्जन्म महाभारतमुच्यते ।
त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः ॥ ११
महाभारतमाख्यानं कृतवानिदमद्भुतम् ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥ १२
वैश० उ०—राजोपरिचरो नाम धर्मनित्यो महीपतिः ।
स चेदिविषयं रम्यं वसुः पौरवनन्दनः ॥ १३
इंद्रोपदेशाज्जग्राह रमणीयं महीपतिः ।
पुत्राश्चास्य महावीर्याः पंचासन्नमितौजसः ॥ १४
महारथो मागधानां विश्रुतो यो बृहद्रथः ।
प्रत्यग्रहः कुशांबश्च यमाहुर्मणिवाहनम् ॥ १५
तस्य रेतः प्रचस्कंद चरतो गहने वने ।
तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सरा ॥ १६

मीनभावमनुप्राप्ता बभूव यमुनाचरी ।
श्येनपादपरिभ्रष्टं तद्वीर्यमथ वासवम् ॥ १७
जग्राह तरसोपेत्य साद्रिका मत्स्यरूपिणी ।
कदाचिदपि मत्स्यीं ता बबंधुर्मत्स्यजीविनः ॥ १८
मासे च दशमे प्राप्ते तदा भरतसत्तम ।
उज्जहुरुदरात्तस्याः स्त्रीं पुमांसं च मानुषम् ॥ १९
स मत्स्यो नाम राजासीद्धार्मिकः सत्यसंगरः ।
सा तु सत्यवती नाम मत्स्यजात्यभिसंश्रयात् ॥ २०
आसीत्सा मत्स्यगंधैव कंचित्कालं शुचिस्मिता ।
शुश्रूषार्थं पितुर्नावं वाहयती जले च ताम् ॥ २१
तीर्थयात्रां परिक्रामन्नपश्यद्वै पराशरः ।
दृष्ट्वैव स च ता धीमाश्चकमे चारुहासिनीम् ॥ २२
उवाच मत्प्रिय कृत्वा कन्यैव त्व भविष्यसि ।
स चास्यै भगवान् प्रादान्मनसः काङ्क्षित भुवि ॥ २३
जगाम सह ससर्गमृषिणाद्भुतकर्मणा ।
पराशरेण संयुक्ता सद्यो गर्भ सुषाव सा ॥ २४
जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान् ।
न्यस्तो द्वीपे स यद्बालस्तस्माद्द्वैपायनः स्मृतः ॥ २५
विव्यास वेदान यस्मात्स तस्माद् व्यास इति स्मृत. ।
वेदानध्यापयामास महाभारतपचमान ॥ २६
सुमतुं जैमिनिं पैलं शुकं चैव स्वमात्मजम् ।
प्रभुर्वरिष्ठो वरदो वैशंपायनमेव च ।
संहितास्तैः पृथक्त्वन भारतस्य प्रकाशिता ॥ २७

इति श्रीसंक्षिप्तमहाभारते आदिपर्वणि षष्ठोऽध्याय ॥ ६ ॥

---

## अथ सप्तमोऽध्यायः ।

वैशं० उ०—पौरवाणां वशकरो दुष्यंतो नाम वीर्यवान ।
पृथिव्याश्चतुरंताया गोप्ता भरतसत्तम ॥ १
स कदाचिन्महाबाहुः प्रभूतबलवाहनः ।
निर्ययौ परमप्रीत्या वनं मृगजिघांसया ॥ २

स वनस्यांतमासाद्य महच्छून्यं समासदत् ।
आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥ ३
नदीं चाश्रमसंश्लिष्टां पुण्यतोयां ददर्श ह ।
सामात्यो राजलिंगानि सोपनीय नराधिपः ॥ ४
पुरोहितसहायश्च जगामाश्रममुत्तमम् ।
दिदृक्षुस्तत्र तमृषिं तपोराशिमथाव्ययम् ॥ ५
ऋचो बह्वृचमुख्यैश्च प्रेर्यमाणाः पदक्रमैः ।
शुश्राव मनुजव्याघ्रो विततेष्विह कर्मसु ॥ ६
यज्ञविद्यांगविद्भिश्च यजुर्विद्भिश्च शोभितम् ।
मधुरैः सामगीतैश्च ऋषिभिर्नियतव्रतैः ॥ ७
अथर्ववेदप्रवराः पूगयज्ञियसामगाः ।
संहितामीरयंति स्म पदक्रमयुता तु ते ॥ ८
नानाशास्त्रेषु मुख्यैश्च शुश्राव स्वनमीरितम् ।
लोकायतिकमुख्यैश्च समंतादनुनादितम् ॥ ९
तत्र तत्र च विप्रेन्द्रान् नियतान् शंसितव्रतान् ।
जपहोमपरान् विप्रान् ददर्श परवीरहा ॥ १०
आसनानि विचित्राणि रुचिराणि महीपतिः ।
प्रयत्नोपहितानि स्म दृष्ट्वा विस्मयमागमत् ॥ ११
देवतायतनानां च प्रेक्ष्य पूजा कृता द्विजैः ।
ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः ॥ १२
ततो गच्छन् महाबाहुरेकोऽमात्याम् विसृज्य तान् ।
नापश्यदाश्रमे तस्मिंस्तमृषिं शंसितव्रतम् ॥ १३
उवाच क इहेत्युच्चैर्वनं सन्नादयन्निव ।
श्रुत्वाऽथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी ॥ १४
निश्चक्रामाश्रमात् तस्मात् तापसीवेषधारिणी ।
सा तं दृष्ट्वैव राजानं दुष्यंतमसितेक्षणा ॥ १५
पप्रच्छानामयं राजन् कुशलं च नराधिपम् ।
तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम् ॥ १६
विभ्राजमानां वपुषा तपसा च दमेन च ।
रूपयौवनसंपन्नामित्युवाच महीपतिः ।
का त्वं कस्यासि सुश्रोणि किमर्थं चागता वनम् ॥ १७

शकुं० उ०—तप्यमानः किल पुरा विश्वामित्रो महत्तपः ।
सुभृशं तापयामास शक्रं सुरगणेश्वरम् ॥ १८
प्रातिष्ठत तदा काले मेनका वायुना सह ।
अपोवाह च वासोऽस्या मारुतः शशिसन्निभम् ॥ १९
विश्वामित्रस्ततस्तां तु विषमस्थामनिंदिताम् ।
अनिर्देश्यवयोरूपामपश्यद्विवृतां तदा ॥ २०
तस्या रूपगुणान् दृष्ट्वा स तु विप्रर्षभस्तदा ।
चकार भावं संसर्गात्तया कामवशंगतः ॥ २१
तौ तत्र सुचिरं कालमुभौ व्यहरतां तदा ।
जनयामास स मुनिर्मेनकायां स्वसभवां ।
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ॥ २२
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ।
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम् ॥ २३
तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ।
दृष्ट्वा शयानं शकुनाः समंतात्पर्यवारयन् ॥ २४
पर्यरक्षंत तां तत्र शकुंता मेनकात्मजाम् ।
उपस्प्रष्टुं गतः कण्वोऽह्यपश्यच्छयितामिमाम् ॥ २५
आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयत् ।
एवं दुहितरं विद्धि मां कण्वस्य शकुंतलाम् ॥ २६
दु० उ०—सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे ।
भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते ॥ २७
गांधर्वेण च मां भीरु विवाहेनैहि सुंदरि ।
विवाहानां हि रंभोरु गांधर्वः श्रेष्ठ उच्यते ॥ २८
आत्मनो बंधुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः ॥ २९
शकुं० उ०—यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम ।
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥ ३०
सत्यं मे प्रतिजानीहि यथावक्ष्याम्यहं रहः ।
मयि जायेत यः पुत्रः स भवेत्त्वदनंतरः ।
युवराजो महाराज सत्यमेतद् ब्रवीमि ते ॥ ३१

वै० उ०—एवमस्त्विति ता राजा प्रत्युवाचाविचारयन् ।
अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते ॥ ३२
एवमुक्त्वा स राजर्षिस्तामनिंदितगामिनीम् ।
जग्राह विधिवत्पाणावुवास च तया सह ॥ ३३
विश्वास्य चैनां स प्रायाद्ब्रवीच्च पुनः पुनः ।
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरंगिणीम् ॥ ३४
मुहूर्ते याते तस्मिंस्तु कण्वोऽप्याश्रममागमत् ।
शकुंतला च पितरं ह्रिया नोपजगाम तम् ॥ ३५
विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः ।
उवाच भगवान् प्रीतः पश्यन् दिव्येन चक्षुषा ॥ ३६
त्वयाऽद्य भद्रे रहसि मामनादृत्य यः कृत ।
पुंसा सह समायोगो न स धर्मोपघातकः ॥ ३७
क्षत्रियस्य हि गांधर्वो विवाहः श्रेष्ठ उच्यते ।
सकामायाः सकामेन निर्मंत्रो रहसि स्मृतः ॥ ३८
महात्मा जनिता लोके पुत्रस्तव महाबल ।
य इमां सागरापांगी कृत्स्नां भोक्ष्यति मेदिनीम् ॥ ३९
शकुं० उ०—मया पतिर्वृतो राजा दुष्यंत. पुरुषोत्तम. ।
तस्मै ससचिवाय त्वं प्रसाद कर्तुमर्हसि ॥ ४०
क० उ०—प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि ।
गृहाण च वरं मत्तस्त्वं शुभे यदभीप्सितम् ॥ ४१
ततो धर्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा ।
शकुंतला पौरवाणां दुष्यंतहितकाम्यया ॥ ४२
वै० उ०—प्रतिज्ञाय तु दुष्यते प्रतियाते शकुंतला ।
गर्भं सुषाव वामोरुः कुमारममितौजसम् ॥ ४३
त्रिषु वर्षेषु पूर्णेषु दीप्तानलसमद्युतिम् ।
जातकर्मादि संस्कारं कण्वः पुण्यकृतां वरः ॥ ४४
विधिवत् कारयामास वर्धमानस्य धीमतः ।
कुमारो देवगर्भाभः स तत्राशु व्यवर्द्धत ॥ ४५
षड्वर्ष एव बालः स कण्वाश्रमपदं प्रति ।
सिंहव्याघ्रान् वराहांश्च महिषांश्च गजांस्तथा ॥ ४६

बबंध वृक्षे बलवानाश्रमस्य समीपतः ।
आरोहन् दमयंश्चैव क्रीडंश्च परिधावति ॥ ४७
स सर्वदमनो नाम कुमारः समपद्यत ।
तं कुमारमृषिर्दृष्ट्वा कर्म चास्यातिमानुषम् ॥ ४८
तस्य तद्बलमाज्ञाय कण्वः शिष्यानुवाच ह ।
शकुंतलामिमां शीघ्रं सहपुत्रामितो गृहात् ॥ ४९
भर्तुः प्रापयतागारं सर्वलक्षणपूजिताम् ।
नारीणां चिरवासो हि बांधवेषु न रोचते ॥ ५०
तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठंत महौजसः ।
शकुंतलां पुरस्कृत्य सपुत्रां गजसाह्वयम् ॥ ५१
अभिसृत्य च राजानं विदिता च प्रवेशिता ।
सह तेनैव पुत्रेण बालार्कसमतेजसा ॥ ५२
पूजयित्वा यथान्यायमब्रवीच्च शकुंतला ।
अयं पुत्रस्त्वया राजन् यौवराज्येऽभिषिच्यताम् ॥ ५३
यथा मत्संगमे पूर्वं यः कृतः समयस्तथा ।
तं स्मरस्व महाभाग कण्वाश्रमपदं प्रति ॥ ५४
सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि ।
अब्रवीन्न स्मरामीति कस्य त्वं दुष्टतापसि ॥ ५५
धर्मकामार्थसंबंधं न स्मरामि त्वया सह ।
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु ॥ ५६
सैवमुक्ता वरारोहा व्रीडितेव तपस्विनी ।
निःसंज्ञेव च दुःखेन तस्थौ स्थूणेव निश्चला ॥ ५७
संरभामर्षताम्राक्षी स्फुरमाणौष्ठसंपुटा ।
कटाक्षैर्निर्दहंतीव तिर्यग्राजानमैक्षत ॥ ५८
मुहूर्तमिव च ध्यात्वा दुःखामर्षसमन्विता ।
भर्तारमभिसंप्रेक्ष्य क्रुद्धा वचनमब्रवीत् ॥ ५९
जानन्नपि महाराज कस्मादेवं प्रभाषसे ।
कल्याण वद साक्ष्येण माऽऽत्मानमवमन्यथाः ॥ ६०
मन्यते पातकं कृत्वा न कश्चिद्वेत्ति मामिति ।
विदंति चैनं देवाश्च यश्चैवांतरपूरुषः ॥ ६१

आदित्यचंद्रावनिलानलौ च द्यौर्भूमिरापो हृदय यमश्च ।
अहश्च रात्रिश्च उभे च सध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ ६२
स्वयं प्राप्तेति मामेव माऽवमस्थाः पतिव्रताम् ।
अर्चार्हां नार्चयसि मा स्वयभार्यामुपस्थिताम् ॥ ६३
भार्यायां जनित पुत्रमादर्शष्विव चाननम् ।
ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥ ६४
आत्मनो जन्मन. क्षेत्र पुण्य रामा. सनातनम् ।
ऋषीणामपि का शक्तिः स्रष्टु रामामृते प्रजाम् ॥ ६५
प्रतिपद्य यथा सूनुर्धरणी रेणुगुंठितः ।
पितुराश्लिष्यतेंऽगानि किमस्त्यभ्यधिकं तत. ॥ ६६
स त्वं स्वयमभिप्राप्तं साभिलाषमिम सुतम् ।
प्रेक्षमाणं कटाक्षेण किमर्थमवमन्यसे ॥ ६७
अडानि बिभ्रति स्वानि न भिदन्ति पिपीलिकाः ।
न भरेथा. कथ नु त्व ब्रह्मज्ञ. सन्स्वमात्मजम् ॥ ६८
न वाससा न रामाणा नापा स्पर्शस्तथाविधः ।
शिशोरालिंग्यमानस्य स्पर्शः सूनोर्यथा सुख ॥ ६९
ननु नामाकमारोप्य स्नेहाद्ग्रामान्तर गताः ।
मूर्ध्नि पुत्रानुपाघ्राय प्रतिनदन्ति मानवाः ॥ ७०
त्वदंगेभ्यः प्रसूतोऽय पुरुषात्पुरुषोऽपरः ।
सरसीवामलात्मान द्वितीय पश्य वै सुतम् ॥ ७१
कामं त्वया परित्यक्ता गमिष्यामि स्वमाश्रमम् ।
इमं तु बाल सत्यक्तुं नार्हस्यात्मजमात्मन. ॥ ७२
दुष्य० उ०—न पुत्रमभिजानामि त्वयि जात शकुंतले ।
असत्यवचना नार्य. कस्ते श्रद्धास्यते वचः ॥ ७३
अतिकायश्च ते पुत्रो बालोऽतिबलवानयम् ।
कथमल्पेन कालेन शालस्तंभ इवोद्गतः ॥ ७४
सर्वमेतत्परोक्षं मे यत्त्वं वदसि तापसि ।
नाहं त्वामभिजानामि यथेष्टं गम्यता त्वया ॥ ७५
शकु० उ०—आत्मानं सत्यधर्मौ च पालयन् पृथिवीपते ।
नरेंद्रसिंह कपटं न वोढु त्वमिहार्हसि ॥ ७६

वरं कूपशताद्वापी वरं वापीशतात्क्रतुः ।
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् ॥ ७७
नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् ।
नहि तीव्रतरं किंचिदनृतादिह विद्यते ॥ ७८
अनृते चेत्प्रसङ्गस्ते श्रद्दधासि न चेत्स्वयम् ।
आत्मना हंत गच्छामि त्वादृशे नास्ति संगतम् ॥ ७९
वैश० उ०—एतावदुक्त्वा राजानं प्रातिष्ठत शकुंतला ।
अथांतरिक्षाद्दुष्यंतं वागुवाचाशरीरिणी ॥ ८०
भस्त्रा माता पितुः पुत्रो येन जातः स एव सः ।
भरस्व पुत्रं दुष्यंत मावमंस्थाः शकुंतलाम् ॥ ८१
तच्छ्रुत्वा पौरवो राजा व्याहृतं त्रिदिवौकसाम् ।
पुरोहितममात्यांश्च संप्रहृष्टोऽब्रवीदिदम् ॥ ८२
शृण्वंतु तद्भवतोऽस्य देवदूतस्य भाषितम् ।
अहं चाप्येवमेवैनं जानामि स्वयमात्मजम् ॥ ८३
यद्यहं वचनादेव गृह्णीयामि ममात्मजम् ।
भवेद्धि शक्यो लोकस्य नैव शुद्धो भवेदयम् ॥ ८४
वैश० उ०—तं विशोध्य तदा राजा देवदूतेन भारत ।
हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥ ८५
मूर्ध्नि चैनमुपाघ्राय सस्नेहं परिषस्वजे ।
स मुदं परमां लेभे पुत्रसंस्पर्शजां नृपः ॥ ८६
तां चैव भार्यां दुष्यंतः पूजयामास धर्मतः ।
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत ॥ ८७
तस्य तत्प्रथितं चक्रं प्रावर्तत महात्मनः ।
भास्वरं दिव्यमजितं लोकसन्नादनं महत् ॥ ८८
स विजित्य महीपालांश्चकार वशवर्तिनः ।
चकार च सतां धर्मं प्राप चानुत्तमं यशः ॥ ८९
स राजा चक्रवर्त्यासीत्सार्वभौमः प्रतापवान् ।
ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः ॥ ९०
याजयामास तं कण्वो विधिवद्भूरिदक्षिणम् ।
श्रीमान् गोविततं नाम वाजिमेधमवाप सः ॥ ९१

इति श्रीसंक्षिप्तमहाभारते आदिपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## अथ अष्टमोऽध्यायः ।

वैश० उ०—श्रृणु राजन् पुरा सम्यङ् मया द्वैपायनाच्छ्रुतम् ।
प्रोच्यमानं मया कृत्स्नं स्ववंशजननं शुभम् ॥ १

दक्षाददितिरदितेर्विवस्वान् विवस्वतो मनुर्मनोरिला इलायाः पुरूरवाः पुरूरवस आयुरायुषो नहुषः नहुषाद्ययातिर्ययातेर्द्वे भार्ये बभूवतुः । उशनसो दुहिता देवयानी वृषपर्वणश्च दुहिता शर्मिष्ठा नाम । अत्रानुवंशश्लोको भवति ॥ २–४ ॥

यदुं च तुर्वसुं चैव देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ५

तत्र यदोर्यादवाः पूरोः पौरवाः । पूरोस्तु भार्या कौशल्या नाम तस्यामस्य जज्ञे जनमेजयो नाम यस्त्रीनश्वमेधानाजहार विश्वजिता चेष्ट्वा वनं विवेश । जनमेजयः खल्वनंता नामोपयेमे माधवीं तस्यामस्य जज्ञे प्राचिन्वान् यः प्राचीं दिशं जिगाय यावत् सूर्योदयात् ततस्तस्य प्राचिन्वत्वम् । प्राचिन्वान्खल्वश्मकीमुपयेमे यादवीं तस्यामस्य जज्ञे संयातिः । संयातिः खलु दृषद्वतो दुहितरं वरांगीं नामोपयेमे तस्यामस्य जज्ञे अहंयातिः । अहंयातिः खलु कृतवीर्यदुहितरमुपयेमे भानुमतीं नाम तस्यामस्य जज्ञे सार्वभौमः । सार्वभौमः खलु जित्वा जहार कैकेयीं सुनंदां नाम तामुपयेमे तस्यामस्य जज्ञे जयत्सेनो नाम । जयत्सेनः खलु वैदर्भीमुपयेमे सुश्रवां नाम तस्यामस्य जज्ञे अवाचीनः । अवाचीनोऽपि वैदर्भीमपरामेवोपयेमे मर्यादां नाम तस्यामस्य जज्ञे अरिहः । अरिहः खल्वांगीमुपयेमे तस्यामस्य जज्ञे महाभौमः । महाभौमः खलु प्रासेनजितीमुपयेमे सुयज्ञां नाम तस्यामस्य जज्ञे अयुतनायी यः पुरुषमेधानामयुतमानयत् तेनास्यायुतनायित्वम् । अयुतनायी खलु पृथुश्रवसो दुहितरमुपयेमे कामां नाम तस्यामस्य जज्ञे अक्रोधनः । स खलु कालिंगीं करंभां नामोपयेमे तस्यामस्य जज्ञे देवातिथिः । देवातिथिः खलु वैदेहीमुपयेमे मर्यादां नाम तस्यामस्य जज्ञेऽरिहो नाम । अरिहः खल्वांगेयीमुपयेमे सुदेवां नाम तस्यां पुत्रमजीजनदृक्षम् । ऋक्षः खलु तक्षकदुहितरमुपयेमे ज्वालां नाम तस्यां पुत्रं मतिनारं नामोत्पादयामास । मतिनारः खलु सरस्वत्यां गुणसमन्वितं द्वादशवार्षिकं सत्रमाहरत् । समाप्ते च सत्रे सरस्वत्यभिगम्य तं भर्तारं वरयामास । तस्यां पुत्रमजीजनत्तंसुं नाम । अत्रानुवंशश्लोको भवति ॥ ६–१९ ॥

तंसु सरस्वती पुत्रं मतिनारादजीजनत् ।
ईलिन जनयामास कालिंग्या त सुरात्मजम् ॥ २०

ईलिनस्तु रथतर्या दुष्यताद्यान्पच पुत्रानजीजनत् । दुष्यतः खलु विश्वामित्रदुहितर शकुतला नामोपयेमे तस्यामस्य जज्ञे भरतः । अत्रानुवंशश्लोकौ भवतः ॥ २१–२२ ॥

भस्त्रा माता पितुः पुत्रो येन जात· स एव सः ।
भरस्व पुत्रं दुष्यत माऽवमंस्था शकुंतलाम् ॥ २३
रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।
त्व चास्य धाता गर्भस्य सत्यमाह शकुतला ॥ २४

ततोऽस्य भरतत्वम् । भरत खलु काशेयीमुपयेमे सार्वसेनीं सुनंदा नाम तस्यामस्य जज्ञे भुमन्युः । भुमन्यु. खलु दाशार्हीमुपयेमे विजयां नाम तस्यामस्य जज्ञे सुहोत्रः । सुहोत्रः खल्विक्ष्वाकुकन्यामुपयेमे सुवर्णा नाम तस्यामस्य जज्ञे हस्ती । य इदं हास्तिनपुरं स्थापयामास एतदस्य हास्तिनपरत्व । हस्ती खलु त्रैगर्तीमुपयेमे यशोधरा नाम तस्यामस्य जज्ञे विकुंठनो नाम । विकुठनः खलु दाशार्हीमुपयेमे सुदेवा नाम तस्यामस्य जज्ञे अजमीढो नाम । अजमीढस्थ चतुर्विंशं पुत्रशत बभूव केकेया गाधार्या विशालायामृक्षाया चेति पृथक्पृथग्वंशधरा नृपतयः तत्र वंशकरः सवरण· । संवरणः खलु वैवस्वतीं तपती नामोपयेमे तस्यामस्य जज्ञे कुरुः । कुरुः खलु दाशार्हीमुपयेमे शुभागी नाम तस्यामस्य जज्ञे विदूर । विदूरस्तु माधवीमुपयेमे सप्रिया नाम तस्यामस्य जज्ञे अनश्वा नाम । अनश्वा खलु मागधीमुपयेमे अमृता नाम तस्यामस्य जज्ञे परीक्षित् । परीक्षित्खलु बाहुदामुपयेमे सुयशा नाम तस्यामस्य जज्ञे भीमसेनः । भीमसेनः खलु कैकेयीमुपयेमे कुमारी नाम तस्यामस्य जज्ञे प्रतिश्रवा नाम । प्रतिश्रवसः प्रतीप. खलु शैब्यामुपयेमे सुनदा नाम तस्या पुत्रानुत्पादयामास देवापि शातनुं बाल्हीकं चेति । देवापि· खलु बाल एवारण्यं विवेश शातनुस्तु महीपालो बभव । अत्रानुवंशश्लोको भवति ॥ २५–३८ ॥

यं यं कराभ्या स्पृशति जीर्ण स सुखमश्नुते ।
पुनर्युवा च भवति तस्मात्तं शातनुं विदुः ॥ ३९

इति तदस्य शांतनुत्वत् । शातनुः खलु गंगा भागीरथीमुपयेमे तस्यामस्य जज्ञे देवव्रतो नाम यमाहुर्भीष्ममिति । भीष्म· खलु पितुः प्रियचि-

कीर्षया सत्यवती मातरमुदवाहयत् यामाहुर्गंधकालीमिति। तस्या पूर्वं कानीनो गर्भः पराशराद्द्वैपायनोऽभवत्। तस्यामेव शातनोरन्यौ द्वौ पुत्रौ बभूवतुः। विचित्रवीर्यश्चित्रागदश्च तयोरप्राप्तयौवन एव चित्रागदो गंधर्वेण हतः। विचित्रवीर्यस्तु राजासीत्। विचित्रवीर्यः खलु कौसल्यात्मजेबिका-बालिके काशिराजदुहितरावुपयेमे। विचित्रवीर्यस्त्वनपत्य एव विदेहत्व प्राप्तः। ततः सत्यवत्यचिंतयत् मा दौष्यतो वंश उच्छेदं व्रजेदिति। सा द्वैपायनमृषि मनसा चिंतयामास स तस्या पुरतः स्थितः किं करवाणीति। सा तमुवाच भ्राता तवानपत्य एव स्वर्यातो विचित्रवीर्यः साध्वपत्य तस्यो त्पादयेति। स तथेत्युक्त्वा त्रीन्पुत्रानुत्पादयामास धृतराष्ट्र पाडुं विदुरं चेति। तत्र धृतराष्ट्रराज्ञः पुत्रशत बभूव गाधार्यां वरदानाद्द्वैपायनस्य। तेषां धृतराष्ट्रस्य पुत्राणां चत्वारः प्रधाना बभूवु। दुर्योधनो दुःशासनो विकर्णश्चित्रसेन-श्चेति। पाडोस्तु द्वे भार्ये बभूवतुः कुंती पृथा नाम माद्री चेत्युभे स्त्रीरत्ने। अथ पाडुर्मृगयां चरन् मैथुनगतमृषिमपश्यत् मृग्या वर्तमान तथैवाद्भुतम-नासादितकामरसमतृप्त च बाणेनाजघान। स बाणविद्ध उवाच पाडु चरता धर्ममिमं येन त्वयाभिज्ञेन कामरसस्याहमनवाप्तकामरसो निहतस्तस्मात्त्वम-प्येतामवस्थामासाद्यानवाप्तकामरसः पचत्वमाप्स्यसि क्षिप्रमेवेति। विवर्ण-रूपस्तथा पाडुः शाप परिहरमाणो नोपासर्पत भार्ये वाक्यं चोवाच। स्वचा-पल्यादिदं प्राप्तवानह श्रृणोमि च नानपत्यस्य लोकाः संतीति। सा त्व मदर्थे पुत्रानुत्पादयेति कुंतीमुवाच सा तथोक्ता पुत्रानुत्पादयामास धर्मा-द्युधिष्ठिरं मारुताद्भीमसेनं शक्रादर्जुनमिति। ता संहृष्टः पाडुरुवाच इय त सपत्न्यनपत्या साध्वस्या अपत्यमुत्पाद्यतामिति। एवमस्त्विति कुंती ता विद्या माद्र्याः प्रायच्छत्। माद्र्यामश्विभ्या नकुलसहदेवावुत्पादितौ। माद्री खल्वलंकृता दृष्टा पांडुर्भाव चक्रे स ता स्पृष्ट्वैव विदेहत्व प्राप्तः। तत्रैन चिताग्निस्थं माद्री समन्वारुरोह। उवाच कुंती यमयोरप्रमत्तया त्वया भवि-तव्यमिति। ततस्ते पाडवाः कुत्या सहिता हास्तिनपुरमानीय तापसैर्भी-ष्मस्य विदुरस्य च निवेदिता' सर्ववर्णाना च निवेद्याताहतास्तापसा बभूवु' प्रेक्षमाणाना तेषाम्। तच्च वाक्यमुपश्रुत्य भगवतामतरिक्षात्पुष्पवृष्टिः पपात देवदुंदुभयश्च प्रणेदुः। प्रतिगृहीताश्च पाडवाः पितुर्निधनमावेदयंतस्तस्यौ-र्ध्वदैहिक न्यायतश्च कृतवंतः॥ ४०-६७॥

इति संक्षिप्तमहाभारते आदिपर्वणि अष्टमोऽध्याय॥ ८॥

---

# अथ नवमोऽध्यायः ।

वै० उ०---अथाप्तवतो वेदोक्तान् संस्कारान् पाण्डवास्तदा ।
सव्यवर्धंत भोगांस्ते भुजानाः पितृवेश्मनि ॥ १
धार्तराष्ट्रैश्च सहिताः क्रीडंतो मुदिताः सुखम् ।
बालक्रीडासु सर्वासु विशिष्टास्तेजसाभवन् । २
जवे लक्ष्याभिहरणे भोज्ये पांसुविकर्षणे ।
धार्तराष्ट्रान् भीमसेन सर्वान् स परिमर्दति ॥ ३
शतमेकोत्तर तेषां कुमाराणा महौजसाम् ।
एक एव निगृह्णाति नातिकृच्छ्राद्वृकोदरः ॥ ४
ततो बलमतिख्यातं धार्तराष्ट्र' प्रतापवान् ।
भीमसेनस्य तज्ज्ञात्वा दुष्टभावमदर्शयत् ॥ ५
तस्य धर्मादपेतस्य पापानि परिपश्यतः ।
मोहादैश्वर्यलोभाच्च पापा मतिरजायत ॥ ६
ततो जलविहारार्थं कारयामास भारत ।
चैलकबलवेश्मानि विचित्राणि महाति च ॥ ७
ततो दुर्योधनस्तत्र पांडवानाह दुर्मति. ।
गगा चैवानुयास्याम उद्यानवनशोभिताम् ॥ ८
एवमस्त्विति तं चापि प्रत्युवाच युधिष्ठिर. ।
ते रथैर्नगराकारैर्देशजैश्च गजोत्तमैः ॥ ९
उद्यानमभिपश्यंतो भ्रातरः सर्व एव त ।
उपस्थानगृहैः शुभ्रैर्वलभीभिश्च शोभितम् ॥ १०
गवाक्षकैस्तथा जालैर्यंत्रै साचारिकैरपि ।
दीर्घिकाभिश्च पूर्णाभिस्तथा पुष्करिणीगणैः ॥ ११
अथोद्यानवरे तस्मिंस्तथा क्रीडागताश्च ते ।
परस्परस्य वक्त्रेभ्यो ददुर्भक्ष्यांस्ततस्ततः ॥ १२
ततो दुर्योधन. पापस्तद्भक्ष्ये कालकूटकम् ।
विष प्रक्षेपयामास भीमसेनजिघांसया ॥ १३
स्वयं प्रक्षिपते भक्ष्यं बहु भीमस्य पापकृत् ।
प्रतीक्षित स्म भीमेन तं वै दोषमजानता ॥ १४
पाडवा धार्तराष्ट्राश्च तदा मुदितमानसाः ।
क्रीडावसाने त सर्वे शुचिवस्त्राः स्वलंकृताः ॥ १५

विहारावसथेष्वेव वीरा वासमरोचयन् ।
खिन्नस्तु बलवान् भीमो व्यायम्याभ्यधिकं तदा ॥ १६
शीतं वातं समासाद्य श्रातो मदविमोहित. ।
विषेण च परीतांगो निश्चेष्टः पांडुनंदन. ॥ १७
ततो बध्वा लतापाशैर्भीमं दुर्योधनः स्वयम् ।
मृतकल्प तदा वीरं स्थलाज्जलमपातयत् ॥ १८
स निःसंज्ञो जलस्यातमथ वै पाडवोऽविशत् ।
ततः समेत्य बहुभिस्तदा नागैर्महाविषैः ॥ १९
अदस्यत भृशं भीमो महादंष्ट्रैर्विषोल्बणैः ।
ततोऽस्य दश्यमानस्य तद्विषं कालकूटकम् ॥ २०
हत सर्पविषेणैव स्थावर जंगमेन तु ।
ततस्ते कौरवाः सर्वे विना भीमं च पांडवाः । २१
वृत्तक्रीडाविहारास्तु प्रतस्थुर्गजसाव्हयम् ।
ब्रुवतो भीमसेनस्तु यातो ह्यग्रत एव नः ॥ २२
युधिष्ठिरस्तु धर्मात्मा ह्यविदन्पापमात्मनि ।
अभिवाद्याब्रवीत्कुंतीमंब भीम इहागतः ॥ २३
इत्युक्ता च ततः कुंती धर्मराजेन धीमता ।
हाहेति कृत्वा संभ्राता प्रत्युवाच युधिष्ठिरम् ॥ २४
न पुत्र भीमं पश्यामि न मामभ्येत्यसाविति ।
शीघ्रमन्वेषणे यत्नं कुरु तस्यानुजैः सह ॥ २५
तत उत्थाय कौंतेयो भीमसेनो महाबलः ।
आजगाम महाबाहुर्मातुरतिकमंजसा ॥ २६
नेश्चापि संपरिष्वक्त· सह मात्रा नरर्षभैः ।
अन्योन्यगतसौहार्दाद्दिष्ट्या दिष्ट्येति चाब्रुवन् ॥ २७
स तु सत्सर्वमाचष्ट दुर्योधनविचेष्टितम् ।
वैशं० उ०-- ततः संपूजिते द्रोणे पौत्रानादाय कौरवान् ॥ २८
शिष्यत्वेन ददौ भीष्मो वसूनि विविधानि च ।
स ताञ्शिष्यान्महेष्वासः प्रतिजग्राह कौरवान् ॥ २९
पांडवान् धार्तराष्ट्रांश्च द्रोणो मुदितमानसः ।
सर्वेषामेव शिष्याणां बभूवाभ्यधिकोऽर्जुनः ॥ ३०

अर्जुनः परमं यत्नमातिष्ठद् गुरुपूजने ।
अस्त्रे च परमं योगं प्रियो द्रोणस्य चाभवत् ॥ ३१
तदभ्यासकृतं मत्वा रात्रावपि स पांडवः ।
योग्यां चक्रे महाबाहुर्धनुषा पांडुनंदन. ॥ ३२
ततो द्रोणोऽर्जुनं भूयो हयेषु च गजेषु च ।
रथेषु भूमावपि च रणशिक्षामशिक्षयत् ॥ ३३
गदायुद्धेऽसिचर्यायां तोमरप्रासशक्तिषु ।
द्रोणः संकीर्णयुद्धे च शिक्षयामास कौरवान् ॥ ३४
द्रोणस्य तु तदा शिष्यौ गदायोग्यौ बभूवतुः ।
दुर्योधनश्च भीमश्च सदा संरब्धमानसौ ॥ ३५
अश्वत्थामा रहस्येषु सर्वेष्वभ्यधिकोऽभवत् ।
तथापि पुरुषानन्यान् त्सारुकौ यमजावुभौ । ३६
युधिष्ठिरो रथिश्रेष्ठ' सर्वत्र तु धनंजयः ॥
प्रथितः सागरांतायां रथयूथपयूथपः ॥ ३७
बुद्धियोगबलोत्साहैः सर्वास्त्रेषु च निष्ठितः ।
अस्त्रे गुर्वनुरागे च विशिष्टोऽभवदर्जुनः ॥ ३८
कृतास्त्रान् धार्तराष्ट्रांश्च पांडुपुत्रांश्च भारत ।
दृष्ट्वा द्रोणोऽब्रवीद्राजन् धृतराष्ट्रं जनेश्वरम् ॥ ३९
कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।
गांगेयस्य च सान्निध्ये व्यासस्य विदुरस्य च ॥ ४०
राजन् संप्राप्तविद्यास्ते कुमाराः कुरुसत्तम ।
ते दर्शयेयुः स्वां शिक्षां राजन्ननुमते तव ॥ ४१
धृत० उ०—क्षत्तर्यद्गुराचार्यो ब्रवीति कुरु तत्तथा ।
ततो राजानमामंत्र्य निर्गतो विदुरो बहिः ॥ ४२
भारद्वाजो महाप्राज्ञो मापयामास मेदिनीम् ।
समामवृक्षां निर्गुल्मामुदकप्रस्रवणान्विताम् ॥ ४३
प्रेक्षागारं सुविहितं चक्रुस्ते तस्य शिल्पिनः ।
तस्मिंस्ततोऽहनि प्राप्ते राजा ससचिवस्तदा ॥ ४४
भीष्मं प्रमुखतः कृत्वा कृपं चाचार्यसत्तमम् ।
मुक्ताजालपरिक्षिप्तं वैदूर्यमणिशोभितम् ॥ ४५

शातकुंभमयं दिव्य प्रेक्षागारमुपागमत् ।
गांधारी च महाभागा कुंती च जयतां वर ॥ ४६

स्त्रियश्च राज्ञः सर्वास्ता सप्रेष्याः सपरिच्छदाः ।
हर्षादारुरुहुर्मंचान्मेरुं देवस्त्रियो यथा ॥ ४७

ब्राह्मणक्षत्रियाद्यं च चातुर्वर्ण्यं पुराद्द्रुतम् ।
दर्शनेप्सु समभ्यागात् कुमाराणां कृतास्त्रताम् ॥ ४८

प्रवादितैश्च वादित्रैर्जनकौतूहलेन च ।
महार्णव इव क्षुब्धः समाजः सोऽभवत्तदा ॥ ४९

ततः शुक्लांबरधरः शुक्लयज्ञोपवीतवान् ।
शुक्लकेशः सितश्मश्रुः शुक्लमाल्यानुलेपनः ॥ ५०

रंगमध्यं तदाचार्यः सपुत्रः प्रविवेश ह ।
नभो जलधरैर्हीनं सांगारक इवांशुमान् ॥ ५१

स यथासमयं चक्रे बलिं बलवतां वरः ।
ब्राह्मणांस्तु सुमंत्रज्ञान्कारयामास मंगलम् ॥ ५२

ततो बद्धांगुलित्राणा बद्धकक्षा महारथा. ।
बद्धतूणाः सधनुषो विविशुर्भरतर्षभाः ॥ ५३

अनुज्येष्ठं तु ते तत्र युधिष्ठिरपुरोगमा· ।
चक्रुरस्त्र महावीर्याः कुमाराः परमाद्भुतम् ॥ ५४

केचिच्छराक्षेपभयाच्छिरांस्यवननामिरे ।
मनुजा धृष्टमपरे वीक्षांचक्रुः सुविस्मिताः ॥ ५५

ते स्वलक्ष्याणि बिभिदुर्बाणैर्नामांकशोभितैः ।
विविधैर्लाघवोत्सृष्टैरुह्यंतो वाजिभिर्द्रुतम् ॥ ५६

कृत्वा धनुषि ते मार्गान् रथचर्यासु चासकृत् ।
गजपृष्ठेऽश्वपृष्ठे च नियुद्धे च महाबलाः ॥ ५७

गृहीतखड्गचर्माणस्ततो भूयः प्रहारिणः ।
त्सरुमार्गान् यथोद्दिष्टांश्चेरुः सर्वासु भूमिषु ॥ ५८

लाघवं सौष्ठवं शोभां स्थिरत्वं दृढमुष्टिताम् ।
ददृशुस्तत्र सर्वेषां प्रयोगं खड्गचर्मणोः ॥ ५९

अथ तौ नित्यसंहृष्टौ सुयोधनवृकोदरौ ।
अवतीर्णौ गदाहस्तावेकशृंगाविवाचलौ ॥ ६०

कुरुराजे हि रंगस्थे भीमे च बलिनां वरे ।
पक्षपातकृतस्नेहः स द्विधेवाभवज्जनः ॥ ६१
हा वीर कुरुराजेति हा भीम इतिजल्पताम् ।
पुरुषाणां सुविपुलाः प्रणादाः सहसोत्थिताः ॥ ६२
ततस्तावुद्यतगदौ गुरुपुत्रेण वारितौ ।
युगांतानिलसंक्षुब्धौ महावेलाविवार्णवौ ॥ ६३
ततो रंगांगणगतो द्रोणो वचनमब्रवीत् ।
निवार्य वादित्रगण महामेघनिभस्वनम् ॥ ६४
यो मे पुत्रात्प्रियतरः सर्वशस्त्रविशारदः ।
ऐंद्रिरिंद्रानुजसमः स पार्थो दृश्यतामिति ॥ ६५
आचार्यवचनेनाथ कृतस्वस्त्ययनो युवा ।
बद्धगोधांगुलित्राणः पूर्णतूणः सकार्मुकः ॥ ६६
कांचन कवचं बिभ्रत्प्रत्यदृश्यत फाल्गुनः ।
सार्क सेंद्रायुधतडित्ससंध्य इव तोयदः ॥ ६७
तस्मिन् प्रमुदिते रंगे कथंचित् प्रत्युपस्थिते ।
दर्शयामास बीभत्सुराचार्याय स्वलाघवम् ॥ ६८
आग्नेयेनासृजद्वह्निं वारुणेनासृजत्पयः ।
वायव्येनासृजद्वायुं पार्जन्येनासृजद् घनान् ॥ ६९
भौमेन प्राविशद् भूमिं पार्वतेनाभवद् गिरिः ।
अंतर्धानेन चास्त्रेण पुनरंतर्हितोऽभवत् ॥ ७०
क्षणात्प्रांशुः क्षणाद्ह्रस्व' क्षणाच्च रथधूर्गतः ।
क्षणेन रथमध्यस्थः क्षणेनावतरन्महीम् ॥ ७१
भ्रमतश्च वराहस्य लौहस्य प्रमुखे समम् ।
पंच बाणानसंसक्तान् संमुमोचैकबाणवत् ॥ ७२
गव्ये विषाणकोषे च चले रज्ज्ववलंबिनि ।
निचखान महावीर्य सायकानेकविंशतिम् ॥ ७३
तत' समाप्तभूयिष्ठे तस्मिन् कर्मणि भारत ।
मन्दीभूते समाजे च वादित्रस्य च निःस्वने ॥ ७४
द्वारदेशात्समुद्भूतो माहात्म्यबलसूचकः ।
वज्रनिष्पेषसदृशः शुश्रुवे भुजनिः स्वनः ॥ ७५

द्वारं चाभिमुखाः सर्वे बभूवुः प्रेक्षका तदा ।
दत्तेऽवकाशे पुरुषैर्विस्मयोत्फुल्ललोचनः ॥ ७६
विवेश रंगं विस्तीर्णं कर्णः परपुरंजयः ।
सहजं कवचं बिभ्रत् कुंडलोद्योतिताननः ॥ ७७
सधनुर्बद्धनिस्त्रिंशः पादचारीव पर्वतः ।
प्रांशुः कनकतालाभः सिंहसंहननो युवा ॥ ७८
असंख्येयगुणः श्रीमान् भास्करस्यात्मसंभवः ।
स निरीक्ष्य महाबाहुः सर्वतो रंगमंडलम् ॥ ७९
प्रणामं द्रोणकृपयोर्नात्यादृतमिवाकरोत् ।
स समाजजनः सर्वो निश्चलः स्थिरलोचनः ॥ ८०
कोऽयमित्यागतक्षोभः कौतूहलपरोऽभवत् ।
सोऽब्रवीन्मेघगंभीरस्वरेण वदतां वरः ॥ ८१
भ्राता भ्रातरमज्ञातं सावित्रः पाकशासनिम् ।
पार्थ यत्ते कृतं कर्म विशेषवदहं ततः ॥ ८२
करिष्ये पश्यतां नृणामात्मानं विस्मयं गमः ।
असमाप्ते ततस्तस्य वचने वदतां वरः ॥ ८३
यंत्रोत्क्षिप्त इवोत्तस्थौ क्षिप्रं वै सर्वतो जनः ।
प्रीतिश्च मनुजव्याघ्र दुर्योधनमुपाविशत् ॥ ८४
ह्रीश्च क्रोधश्च बीभत्सुं क्षणेनान्वाविवेश ह ।
ततो द्रोणाभ्यनुज्ञातः कर्णः प्रियरणः सदा ॥ ८५
यत्कृतं तत्र पार्थेन तच्चकार महाबलः ।
अथ दुर्योधनस्तत्र भ्रातृभिः सह भारत ॥ ८६
कर्णं परिष्वज्य मुदा ततो वचनमब्रवीत् ।
दुर्यो० उ०—स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मानद ॥ ८७
अहं च कुरुराज्यं च यथेष्टमुपभुज्यताम् ।
कर्ण० उ०—कृतं सर्वमहं मन्ये सखित्वं च त्वया वृणे ॥ ८८
द्वंद्वयुद्धं च पार्थेन कर्तुमिच्छाम्यहं प्रभो ।
ततः क्षिप्तमिवात्मानं मत्वा पार्थोऽभ्यभाषत ॥ ८९
अर्जु० उ०—अनाहूतोपसृष्टानामनाहूतोपजल्पिनाम् ।
ये लोकास्तान्हतः कर्ण मया त्वं प्रतिपत्स्यसे ॥ ९०

कर्ण० उ०—रंगोऽयं सर्वसामान्यः किमत्र तव फाल्गुन ।
वीर्यज्येष्ठाश्च राजानो बलं धर्मोऽनुवर्तते ॥ ९१
ततो द्रोणाभ्यनुज्ञातः पार्थः परपुरंजयः ।
भ्रातृभिस्त्वरयाश्लिष्टो रणायोपजगाम तम् ॥ ९२
द्विधा रंगः समभवत्स्त्रीणां द्वैधमजायत ।
कुंतिभोजसुता मोहं विज्ञातार्था जगाम ह ॥ ९३
तां तथा मोहमापन्नां विदुरः सर्वधर्मवित् ।
कुंतीमाश्वासयामास प्रेष्याभिश्चंदनोदकैः ॥ ९४
तावुद्यतमहाचापौ कृपः शारद्वतोऽब्रवीत् ।
द्वंद्वयुद्धसमाचारे कुशलः सर्वधर्मवित् ॥ ९५
अयं पृथायास्तनयः कनीयान् पांडुनंदन ।
कौरवो भवता सार्धं द्वंद्वयुद्धं करिष्यति ॥ ९६
त्वमप्येवं महाबाहो मातरं पितरं कुलम् ।
कथयस्व नरेंद्राणां येषां त्वं कुलभूषणः ॥ ९७
ततो विदित्वा पार्थस्त्वां प्रतियोत्स्यति वा न वा ।
वृथाकुलसमाचारैर्न युद्ध्यंते नृपात्मजाः ॥ ९८
एवमुक्तस्य कर्णस्य व्रीडावनतमाननम् ।
बभौ वर्षांबुविक्लिन्नं पद्ममागलितं यथा ॥ ९९
दुर्यो० उ०—आचार्य त्रिविधा योनी राज्ञां शास्त्रविनिश्चये ।
सत्कुलीनश्च शूरश्च यश्च सेनां प्रकर्षति ॥ १००
यद्ययं फाल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति ।
तस्मादेषोऽगाविषये मया राज्येऽभिषिच्यते ॥ १०१
ततस्तस्मिन्क्षणे कर्णः सलाजकुसुमैर्घटैः ।
अभिषिक्तोऽगराज्ये स श्रिया युक्तो महाबलः ॥ १०२
कर्ण० उ०—अस्य राज्यप्रदानस्य सदृशं किं ददामि ते ।
अत्यंतं सख्यमिच्छामीत्याह तं स सुयोधनः ॥ १०३
एवमुक्तस्ततः कर्णस्तथेति प्रत्युवाच तम् ।
ततः स्रस्तोत्तरपटः सप्रस्वेदः सवेपथुः ॥ १०४
विवेशाधिरथो रंगं यष्टिप्राणो ह्वयन्निव ।
तमालोक्य धनुस्त्यक्त्वा पितृगौरवयंत्रितः ॥ १०५

कर्णोऽभिषेकार्द्रशिराः शिरसा समवंदत ।
परिष्वज्य च तस्याथ मूर्धानं स्नेहविक्लवः ॥ १०६
अंगराज्याभिषेकार्द्रमश्रुभिः सिषिचे पुनः ।
तं दृष्ट्वा सूतपुत्रोऽयमिति संचिंत्य पांडवः ॥ १०७
भीमसेनस्तदा वाक्यमब्रवीत्प्रहसन्निव ।
न त्वमर्हसि पार्थेन सूतपुत्र रणे वधम् ॥ १०८
कुलस्य सदृशस्तूर्णं प्रतोदो गृह्यतां त्वया ।
अंगराज्य च नार्हस्त्वमुपभोक्तुं नराधम ॥ १०९
श्वा हुताशसमीपस्थं पुरोडाशमिवाध्वरे ।
एवमुक्तस्ततः कर्ण किंचित्प्रस्फुरिताधरः ॥ ११०
गगनस्थं विनिःश्वस्य दिवाकरमुदैक्षत ।
ततो दुर्योधनः कोपादुत्पपात महाबलः ॥ १११
भ्रातृपद्मवनात्तस्मान्मदोत्कट इव द्विपः ।
सोऽब्रवीद्भीमकर्माणं भीमसेनमवस्थितम् ॥ ११२
वृकोदर न युक्तं ते वचनं वक्तुमीदृशम् ।
क्षत्रियाणां बलं ज्येष्ठ योद्धव्य क्षत्रबधुना ॥ ११३
शूराणां च नदीनां च दुर्विदाः प्रभवाः किल ।
क्षत्रियेभ्यश्च ये जाता ब्राम्हणास्ते च ते श्रुताः ११४
विश्वामित्रप्रभृतयः प्राप्ता ब्रह्मत्वमव्ययम् ।
भवता च यथा जन्म तदप्यागमितं मया ॥ ११५
सकुडलं सकवच सर्वलक्षणलक्षितम् ।
कथमादित्यसदृश मृगी व्याघ्रं जनिष्यति ॥ ११६
पृथिवीराज्यमर्होऽयं नांगराज्यं नरेश्वर ।
अनेन बाहुवीर्येण मया चाज्ञानुवर्तिना ॥ ११७
यस्य वा मनुजस्येदं न क्षांत मद्विचेष्टितम् ।
रथमारुह्य पद्भ्यां स विनामयतु कार्मुकम् ॥ ११८
ततः सर्वस्य रंगस्य हाहाकारो महानभूत् ।
साधुवादानुसंबद्धः सूर्यश्चास्तमुपागमत् ॥ ११९
ततो दुर्योधनः कर्णमालंब्याग्रकरे नृपः ।
दीपिकाग्निकृतालोकस्तस्माद्रंगाद्विनिर्ययौ ॥ १२०

पांडवाश्च सहद्रोणाः सकृपाश्च विशांपते ।
भीष्मेण सहिताः सर्वे ययुः स्वं स्वं निवेशनम् ॥ १२१
अर्जुनेति जनः कश्चित्कश्चित्कर्णेति भारत ।
कश्चिद्दुर्योधनेत्येवं ब्रुवंतः प्रस्थितास्तदा ॥ १२२
कुंत्याश्च प्रत्यभिज्ञाय दिव्यलक्षणसूचितम् ।
पुत्रमंगेश्वरं स्नेहाच्छन्ना प्रीतिरजायत ॥ १२३
दुर्योधनस्यापि तदा कर्णमासाद्य पार्थिव ।
भयमर्जुनसंजातं क्षिप्रमंतरधीयत ॥ १२४

इति श्रीसंक्षिप्तमहाभारते आदिपर्वणि नवमोऽध्यायः ॥ ९ ॥

---

## अथ दशमोऽध्यायः ।

वै० उ०—श्रुत्वा पांडुसुतान् वीरान् बलोद्रिक्तान् महौजसः ।
धृतराष्ट्रो महीपालश्चिंतामगमदातुरः ॥ १
तत आहूय मंत्रज्ञं राजशास्त्रार्थवित्तमम् ।
कणिकं मंत्रिणां श्रेष्ठं धृतराष्ट्रोऽब्रवीद्वचः ॥ २
धृ० उ०—उत्सिक्ताः पांडवा नित्य तेभ्योऽसूये द्विजोत्तम ।
तत्र मे निश्चिततम संधिविग्रहकारणम् ।
कणिक त्वं ममाचक्ष्व करिष्ये वचन तव ॥ ३
कणिक उ०—शृणु राजन्निदं तत्र प्रोच्यमानं मयानघ ।
न मेऽभ्यसूया कर्तव्या श्रुत्वैतत्कुरुसत्तम ॥ ४
नित्यमुद्यतदंडः स्यान्नित्यं विवृतपौरुषः ।
अच्छिद्रश्छिद्रदर्शी स्यात्परेषां विवरानुगः ॥ ५
वधमेव प्रशंसंति शत्रूणामपकारिणाम् ।
नावज्ञेयो रिपुस्तात दुर्बलोऽपि कथंचन ॥ ६
अंधः स्यादंधवेलायां बाधिर्यमपि चाश्रयेत् ।
कुर्यात्तृणमयं चापं शयीत मृगशायिकाम् ॥ ७
वहेदमित्रं स्कंधेन यावत्कालस्य पर्ययः ।
ततः प्रत्यागते काले भिंद्याद्घटमिवाश्मनि ॥ ८
भयेन भेदयेद्भीरुं शूरमंजलिकर्मणा ।
लुब्धमर्थप्रदानेन समं न्यूनं तथौजसा ॥ ९

शपथेनाप्यरिं हन्यादर्थदानेन वा पुन. ।
विषेण मायया वापि नोपेक्षेत कथञ्चन ॥ १०
प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत ।
प्रहृत्य च कृपायीत शोचेत च रुदेत च ॥ ११
आश्वासयेच्चापि परं सांत्वधर्मार्यवृत्तिभिः ।
अथास्य प्रहरेत्काले यदा विचालिते पथि ॥ १२
यः स्यादनुप्राप्तवधस्तस्यागारं प्रदीपयेत् ॥ १३
अशंकितेभ्य. शंकेत शांकितेभ्यश्च सर्वशः ।
अशंक्याद्भयमुत्पन्नमपि मूलं निकृंतति ॥ १४
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृंतति ॥ १५
चारः सुविहितः कार्य आत्मनश्च परस्य वा ।
पाखंडांस्तापसादींश्च परराष्ट्रेषु योजयेत् । १६
वाचा भृशं विनीतः स्याद्धृदयेन तथा क्षुरः ।
स्मितपूर्वाभिभाषी स्यात्सृष्टो रौद्रेण कर्मणा ॥ १७
सुपुष्पित स्यादफलः फलवान्स्याद्दुरारुहः ।
आमः स्यात्पक्वसंकाशो न च जीर्येत कर्हिचित् ॥ १८
न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ १९
यस्य बुद्धिः परिभवेत्तमतीतेन सांत्वयेत् ।
अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पंडितम् ॥ २०
योऽरिणा सह संधाय शयीत कृतकृत्यवत् ।
स वृक्षाग्रे यथा सुप्तः पतित· प्रतिबुध्यते ॥ २१
नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महती श्रियम् ॥ २२
कर्षितं व्याधितं क्लिन्नमपानीयमघासकम् ।
परिविश्वस्तमंदं च प्रहर्तव्यमरेर्बलम् ॥ २३
संग्रहे विग्रहे चैव यत्न· कार्योऽनसूयता ।
उत्साहश्चापि यत्नेन कर्तव्योभूतिमिच्छता ॥ २४
नास्य कृत्यानि बुध्येरन् मित्राणि रिपवस्तथा ।
आरब्धान्येव पश्येरन् सुपर्यवासितान्यपि ॥ २५

भीतवत्संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ २६

तालवत्कुरुते मूलं बालः शत्रुरुपेक्षितः ।
गहनेऽग्निरिवोत्सृष्टः क्षिप्रं संजायते महान् ॥ २७

पाण्डवेषु यथान्यायमन्येषु च कुरूद्वह ।
वर्तमानो न मज्जेस्त्वं तथा कृत्यं समाचर ॥ २८

वै० उ०—ततः सुबलपुत्रस्तु राजा दुर्योधनश्च ह ।
दुःशासनश्च कर्णश्च दुष्टं मन्त्रममंत्रयन् ॥ २९

ते कौरव्यमनुज्ञाप्य धृतराष्ट्रं नराधिपम् ।
दहने तु सपुत्रायाः कुंत्या बुद्धिमकारयन् ॥ ३०

तेषामिङ्गितभावज्ञो विदुरस्तत्त्वदर्शिवान् ।
आकारेण च तं मंत्रं बुबुधे दुष्टचेतसाम् ॥ ३१

प्राज्ञः प्राज्ञप्रलापज्ञः प्रलापज्ञमिदं वचः ।
प्राज्ञं प्राज्ञः प्रलापज्ञः प्रलापज्ञं वचोऽब्रवीत् ॥ ३२

कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः ।
न दहेदिति चात्मानं यो रक्षति स जीवति ॥ ३३

अष्टमेऽहनि रोहिण्यां प्रयाताः फाल्गुनस्य ते ।
वारणावतमासाद्य ददृशुर्नागरं जनम् ॥ ३४

तांस्तु दृष्ट्वा सुमनसः परिसंवत्सरोषितान् ।
विश्वस्तानिव संलक्ष्य हर्षं चक्रे पुरोचनः ॥ ३५

निषादी पञ्चपुत्रा तु जातुषे तत्र वेश्मनि ।
कारणाभ्यागता दग्धा सह पुत्रैरनागसा ॥ ३६

स च म्लेच्छाधमः पापो दग्धस्तत्र पुरोचनः ।
वंचिताश्च दुरात्मानो धार्तराष्ट्राः सहानुगाः ॥ ३७

ततस्तस्मिन् पुरे लोका नगरे वारणावते ।
दृष्ट्वा जतुगृहं दग्धमन्वशोचत दुःखिताः ॥ ३८

अविज्ञाता महात्मानो जनानामक्षतास्तथा ।
जनन्या सह कौन्तेया मुक्ता विदुरमन्त्रिताः ॥ ३९

प्राद्रवन् भयसंविग्ना मात्रा सह परंतपाः ।
ददृशुर्दारुणं रक्षो हिडिंबं वननिर्झरे ॥ ४०

हत्वा च त राक्षसेंद्रं भीताः समवबोधनात् ।
निशि संप्राद्रवन्पार्था धार्तराष्ट्रभयार्दिताः ।
प्राप्ता हिडिंबा भीमेन यत्र जातो घटोत्कचः ॥ ४१
एकचक्रां ततो गत्वा पांडवाः शंसितव्रताः ।
वेदाध्ययनसपन्नास्तेऽभवन् ब्रह्मचारिणः ॥ ४२
ते तत्र नियताः कालं कंचिन्नूषुर्नरर्षभाः ।
तत्र त शुश्रुवुः कृष्णा पांचालेषु स्वयवराम् ॥ ४३

इति श्रीसंक्षिप्तमहाभारते आदिपर्वणि दशमोऽध्यायः ॥ १० ॥

---

## अथ एकादशोऽध्यायः ।

वै० उ०—तच्छ्रुत्वाथ प्रयातास्ते पांडवा जनमेजय ।
राज्ञा दक्षिणपांचालान्द्रुपदेनाभिरक्षितान् ॥ १
पश्यतो रमणीयानि वनानि च सरांसि च ।
तत्र तत्र वसंतश्च शनैर्जग्मुर्महारथाः ॥ २
स्वाध्यायवतः शुचयो मधुराः प्रियवादिनः ।
आनुपूर्व्येण संप्राप्ताः पांचालान् पांडुनंदनाः ॥ ३
ते तु दृष्ट्वा पुर तच्च स्कंधावारं च पाडवाः ।
कुभकारस्य शालायां निवासं चक्रिरे तदा ॥ ४
तत्र भैक्ष्यं समाजन्हुर्ब्राह्मणीं वृत्तिमाश्रिताः ।
तान् संप्राप्तांस्तथा वीरान् जज्ञिरे न नराः क्वचित् ॥ ५
यज्ञसेनस्य कामस्तु पाडवाय किरीटिने ।
कृष्णां दद्यामिति सदा न चैताद्विवृणोति सः ॥ ६
सोऽन्वेषमाणः कौंतेयं पांचाल्यो जनमेजय ।
दृढं धनुरनानम्य कारयामास भारत ॥ ७
यंत्रं वैहायसं चापि कारयामास कृत्रिमम् ।
तेन यत्रेण समितं राजा लक्ष्यं चकार सः ॥ ८
इदं सज्यं धनुः कृत्वा सज्जैरेभिश्च सायकैः ।
अतीत्य लक्ष्यं यो वेद्धा स लब्धा मत्सुतामिमाम् ॥ ९
इति स द्रुपदो राजा स्वयंवरमघोषयत् ।
तच्छ्रुत्वा पार्थिवाः सर्वे समीयुस्तत्र भारत ॥ १०

ऋषयश्च महात्मानः स्वयंवरदिदृक्षवः ।
दुर्योधनपुरोगाश्च सकर्णाः कुरवो नृप ॥ ११
ततोऽर्चिता राजगणा द्रुपदेन महात्मना ।
शिशुमाराशिरः प्राप्य न्यविशन्स्ते स्म पार्थिवाः ॥ १२
प्रागुत्तरेण नगराद्भूमिभागे समे शुभे ।
समाजवाटः शुशुभे भवनैः सर्वतो वृतः ॥ १३
प्राकारपरिखोपेतो द्वारतोरणमंडितः ।
वितानेन विचित्रेण सर्वतः समलंकृतः ॥ १४
तूर्यौघशतसंकीर्णः परार्ध्यागरुधूपितः ।
चंदनोदकसिक्तश्च माल्यदामोपशोभितः ॥ १५
असंबाधशतद्वारैः शयनासनशोभितैः ।
बहुधातुपिनद्धांगैर्हिमवच्छिखरैरिव ।
सर्वतः संवृतः शुभ्रैः प्रासादैः सुकृतोच्छ्रयैः ॥ १६
तत्रोपविष्टान् ददृशुर्महासत्त्वपराक्रमान् ।
राजसिंहान् महाभागान् कृष्णागरुविभूषितान् ॥ १७
मंचेषु च परार्ध्येषु पौरजानपदा जनाः ।
कृष्णादर्शनसिद्ध्यर्थं सर्वतः समुपाविशन् ॥ १८
आप्लुतांगी सुवसना सर्वाभरणभूषिता ।
मालां च समुपादाय कांचनीं समलंकृताम् ।
अवतीर्णा ततो रंगं द्रौपदी भरतर्षभ ॥ १९
पुरोहितः सोमकानां मंत्रविद् ब्राह्मणः शुचिः ।
परिस्तीर्य जुहावाग्निमाज्येन विधिवत्तदा ॥ २०
संतर्पयित्वा ज्वलनं ब्राह्मणान् स्वस्ति वाच्य च ।
वारयामास सर्वाणि वादित्राणि समंततः ॥ २१
निःशब्दे तु कृते तस्मिन् धृष्टद्युम्नो विशांपते ।
कृष्णामादाय विधिवन्मेघदुंदुभिनिःस्वनः ॥ २२
वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ॥ २३

इदं धनुर्लक्ष्यमिमे च बाणाः शृण्वंतु मे भूपतयः समेताः ।
छिद्रेण यंत्रस्य समर्पयध्वं शरैः शितैर्व्योमचरैर्दशार्धैः ॥ २४
एतन्महत्कर्म करोति यो वै कुलेन रूपेण बलेन युक्तः ।
तस्याद्य भार्या भगिनी ममेयं कृष्णा भवित्री न मृषा ब्रवीमि ॥ २५

तेऽलंकृताः कुंडलिनो युवानः परस्परं स्पर्धमाना नरेंद्राः ।
अस्त्रं बलं चात्मनि मन्यमानाः सर्वे समुत्पेतुरुदायुधास्ते ॥ २६
कंदर्पबाणाभिनिपीडितांगाः कृष्णागतैस्ते हृदयैर्नरेंद्राः ।
रंगावतीर्णा द्रुपदात्मजार्थे द्वेषं प्रचक्रुः सुहृदोऽपि तत्र ॥ २७
ततस्तु ते राजगणाः क्रमेण कृष्णानिमित्तं कृतविक्रमाश्च ।
सकर्णदुर्योधनशाल्वशल्यद्रौणायनिक्राथसुनीथवक्राः ॥ २८
कलिंगवंगाधिपपांड्यपौंड्रा विदेहराजो यवनाधिपश्च ।
अन्ये च नानानृपपुत्रपौत्रा राष्ट्राधिपाः पंकजपत्रनेत्राः ॥ २९
तत्कार्मुकं संहननोपपन्नं सज्यं न शेकुर्मनसाऽपि कर्तुम् ।
ते विक्रमंतः स्फुरता दृढेन विक्षिप्यमाणा धनुषा नरेंद्राः ॥ ३०
विचेष्टमाना धरणीतलस्था यथाबलं शैक्ष्यगुणक्रमाश्च ।
गतौजसः स्रस्तकिरीटहारा विनिःश्वसंतः शमयां बभूवुः ॥ ३१
हाहाकृतं तद्धनुषा दृढेन विस्रस्तहारांगदचक्रवालम् ।
कृष्णानिमित्तं विनिवृत्तकामं राज्ञां तदा मंडलमार्तमासीत् ॥ ३२
सर्वान्नृपांस्तान् प्रसमीक्ष्य कर्णो धनुर्धराणां प्रवरो जगाम ।
उद्धृत्य तूर्णं धनुरुद्यतं तत्सज्यं चकाराशु युयोज बाणान् ॥ ३३
दृष्ट्वा तु त द्रौपदी वाक्यमुच्चैर्जगाद नाहं वरयामि सूतम् ।
सामर्षहास प्रसमीक्ष्य सूर्यं तत्याज कर्णः स्फुरितं धनुस्तत् ॥ ३४

यदा निवृत्ता राजानो धनुषः सज्यकर्मणः ।
अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधी ॥ ३५
दृष्ट्वा संप्रस्थितं पार्थमिंद्रकेतुसमप्रभम् ।
केचिदासन् विमनसः केचिदासन् मुदान्विता. ३६
अथ तेषां विलपतां विप्राणां विविधा गिरः ।
अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः ॥ ३७
स तद्धनुः परिक्रम्य प्रदक्षिणमथाकरोत् ।
प्रणम्य शिरसा देवमीशानं वरदं प्रभुम् ।
कृष्णां च मनसा कृत्वा जगृहे चार्जुनो धनुः ॥ ३८

तदर्जुनो वीर्यवतां सदर्पस्तदैंद्रिरिंद्रावरजप्रभावः ।
सज्यं च चक्रे निमिषांतरेण शरांश्च जग्राह दशार्धसंख्यान् ।
विव्याध लक्ष्यं निपपात तच्च छिद्रेण भूमौ सहसातिविद्धम् ॥ ३९

४

ततोऽन्तरिक्षे च बभूव नादः समाजमध्ये च महान्निनादः ।
पुष्पाणि दिव्यानि ववर्ष देवः पार्थस्य मूर्ध्नि द्विषतां निहंतुः ॥ ४०
तस्मिंस्तु शब्दे महति प्रवृद्धे युधिष्ठिरो धर्मभृतां वरिष्ठः ।
आवासमेवोपजगाम शीघ्रं सार्धं यमाभ्यां पुरुषोत्तमाभ्याम् ॥ ४१
विद्धं तु लक्ष्यं प्रसमीक्ष्य कृष्णा पार्थं च शक्रप्रतिमं निरीक्ष्य ।
आदाय शुक्लांबरमाल्यदाम जगाम कुंतीसुतमुत्स्मयंती ॥ ४२
स तामुपादाय विजित्य रंगे द्विजातिभिस्तैरभिपूज्यमानः ।
रंगान्निरक्रामदचिंत्यकर्मा पत्न्या तया चाप्यनुगम्यमानः ॥ ४३
तस्मै दित्सति कन्यां तु ब्राम्हणाय तदा नृपे ।
कोप आसीन्महीपानामालोक्यान्योन्यमंतिकात् ॥ ४४
तान् गृहीतशरावापान् क्रुद्धानापततो बहून् ।
द्रुपदो वीक्ष्य संत्रासाद्ब्राह्मणांञ्शरणं गतः ॥ ४५
वेगेनापततस्तांस्तु प्रभिन्नानिव वारणान् ।
पांडुपुत्रौ महेष्वासौ प्रतियातावरिंदमौ ॥ ४६
ततः कर्णो महातेजा जिष्णुं प्रति ययौ रणे ।
युद्धार्थी वासिताहेतोर्गजः प्रतिगजं यथा ॥ ४७
भीमसेनं ययौ शल्यो मद्राणामीश्वरो बली ॥ ४८
ततोऽर्जुनः प्रत्यविध्यदापतंतं शितैः शरैः ।
कर्णं वैकर्तनं श्रीमान् विकृष्य बलवद्धनुः ॥ ४९
तावुभावप्यनिर्देश्यौ लाघवाज्जयतां वरौ ।
अयुध्येतां सुसंरब्धावन्योन्यविजिगीषिणौ ॥ ५०
कर्ण उवाच—तुष्यामि ते विप्रमुख्य भुजवीर्यस्य संयुगे ।
अविषादस्य चैवास्य शस्त्रास्त्रविजयस्य च ॥ ५१
किं त्वं साक्षाद्धनुर्वेदो रामो वा विप्रसत्तम ।
अथ साक्षाद्धरिहयः साक्षाद्वा विष्णुरच्युतः ॥ ५२
तमेवंवादिनं तत्र फाल्गुनः प्रत्यभाषत ।
नास्मि कर्ण धनुर्वेदो नास्मि रामः प्रतापवान् ।
ब्राह्मणोऽस्मि युधांश्रेष्ठः सर्वशस्त्रभृतां वरः ॥ ५३
एवमुक्तस्तु राधेयो युद्धात्कर्णो न्यवर्तत ।
ब्राह्मं तेजस्तदाजय्यं मन्यमानो महारथः ॥ ५४

अपरस्मिन्वनोद्देशे वीरौ शल्यवृकोदरौ ।
बलिनौ युद्धसंपन्नौ विद्यया च बलेन च ॥ ५५
मुहूर्तं तौ तदाऽन्योन्यं समरे पर्यकर्षताम् ।
ततो भीमः समुत्क्षिप्य बाहुभ्यां शल्यमाहवे ॥ ५६
अपातयत्कुरुश्रेष्ठो ब्राह्मणा जहसुस्तदा ।
पातिते भीमसेनेन शल्ये कर्णे च शंकिते ॥ ५७
शंकिताः सर्वराजानः परिवव्रुर्वृकोदरम् ।
ऊचुश्च सहितास्तत्र साध्विमौ ब्राम्हणर्षभौ ॥ ५८
विज्ञायेतां क्वजन्मानौ क्वनिवासौ तथैव च ।
अथैतानुपलभ्यैव पुनर्योत्स्याम हृष्टवत् ॥ ५९
तत्कर्म भीमस्य समीक्ष्य कृष्णः कुंतीसुतौ तौ परिशंकमानः ।
निवारयामास महीपतींस्तान् धर्मेण लब्धेत्यनुनीय सर्वान् ॥ ६०
एवं ते विनिवृत्तास्तु युद्धाद्युद्धविशारदाः ।
यथावास ययुः सर्वे विस्मिता राजसत्तमाः ॥ ६१
वृत्तो ब्रम्होत्तरो रंगः पांचाली ब्राम्हणैर्वृता ।
इति ब्रुवंतः प्रययुर्ये तत्रासन् समागताः ॥ ६२
ब्राह्मणैस्तु प्रतिच्छन्नौ रौरवाजिनवासिभिः ।
कृच्छ्रेण जग्मतुस्तौ तु भीमसेनधनंजयौ ॥ ६३
विमुक्तौ जनसंबाधाच्छत्रुभिः परिविक्षतौ ।
कृष्णयानुगतौ तत्र नृवीरा तौ विरेजतुः ॥ ६४
गत्वा तु तां भार्गवकर्मशालां पार्थौ पृथां प्राप्य महानुभावौ ।
तां याज्ञसेनीं परमप्रतीतौ भिक्षेत्यथावेदयतां नराग्र्यौ ॥ ६५
कुटीगता सा त्वनवेक्ष्य पुत्रौ प्रोवाच भुंक्तेति समेत्य सर्वे ।
पश्चाच्च कुंती प्रसमीक्ष्य कृष्णां कष्टं मया भाषितमित्युवाच ॥ ६६
स एवमुक्तो मतिमान्नृवीरो मात्रा मुहूर्तं त्ववचिंत्य राजा ।
कुंतीं समाश्वास्य कुरुप्रवीरो धनंजयं वाक्यमिदं बभाषे । ६७
त्वया जिता फाल्गुन याज्ञसेनी त्वयैव शोभिष्यति राजपुत्री ।
प्रज्वाल्यतामग्निरमित्रसाह गृहाण पाणिं विधिवत्त्वमस्याः ॥ ६८
अर्जु० उ०—मा मां नरेंद्र त्वमधर्मभाजं कृथा न धर्मोऽयमशिष्टदृष्टः ।
भवान्निवेश्यः प्रथमं ततोऽयं भीमो महाबाहुराचिंत्यकर्मा ॥ ६९

अह ततो नकुलोनंतर मे पश्चादयं सहदेवस्तरस्वी ।
वृकोदरोहं च यमौ च राजन्नियं च कन्या भवतो नियोज्याः ॥ ७०
जिष्णोर्वचनमाज्ञाय भक्तिस्नेहसमन्वितम् ।
दृष्टिं निवेशयामासु. पांचाल्यां पांडुनंदनाः ॥ ७१
तेषां तु द्रौपदी दृष्ट्वा सर्वेषाममितौजसाम् ।
संप्रमथ्येंद्रियग्राम प्रादुरासीन्मनोभवः ॥ ७२
तेषामाकारभावज्ञः कुंतीपुत्रो युधिष्ठिर. ।
अब्रवीत्संहितान् भ्रातॄन् मिथो भेदभयान्नृपः ॥ ७३
सर्वेषां द्रौपदी भार्या भविष्यति हि नः शुभा ॥ ७४
तत आहूय पांचाल्यो राजपुत्रं युधिष्ठिरम् ।
परिग्रहेण ब्राह्मेण परिगृह्य महाद्युति' ॥ ७५
पर्यपृच्छत दीनात्मा कुंतीपुत्रं सुवर्चसम् ।
कथं जानीम भवतः क्षत्रियान् ब्राह्मणानुत ॥ ७६
अपि नः संशयस्यांते मनः संतुष्टिमावहेत् ।
अपि नो भागधेयानि शुभानि स्युः परंतप ॥ ७७
युधि० उ०—मा राजन् विमना भूस्त्वं पांचाल्यै प्रीतिरस्तुते ।
ईप्सितस्ते ध्रुवः कामः स वृत्तोऽयमसंशयम् ॥ ७८
वयं हि क्षत्रिया राजन् पांडोः पुत्रा महात्मनः ।
ज्येष्ठं मां विद्धि कौंतेयं भीमसेनार्जुनाविमौ ॥ ७९
व्येतु ते मानसं दुःखं क्षत्रियाः स्मो नरर्षभ ।
पद्मिनीव सुतेयं ते ह्रदादन्यह्रदं गता ॥ ८०
ततः स द्रुपदो राजा हर्षव्याकुललोचनः ।
प्रतिवक्तुं मुदा युक्तो नाशकत्तं युधिष्ठिरम् ॥ ८१
यत्नेन तु स तं हर्षं सन्निगृह्य परंतपः ।
अनुरूप तदा वाचा प्रत्युवाच युधिष्ठिरम् ।
पप्रच्छ चैनं धर्मात्मा यथा ते प्रद्रुताः पुरात् ॥ ८२
स तस्मै सर्वमाचख्यावानुपूर्व्येण पांडवः ।
तच्छ्रुत्वा द्रुपदो राजा कुंतीपुत्रस्य भाषितम् ॥ ८३
विगर्हयामास तदा धृतराष्ट्रं नरेश्वरम् ।
आश्वासयामास च तं कुंतिपुत्रं युधिष्ठिरम् ।
प्रतिजज्ञे च राज्याय द्रुपदो वदतां वरः ॥ ८४

ततः कुंती च कृष्णा च भीमसेनार्जुनावपि ।
यमौ च राज्ञा संदिष्टं विविशुर्भवनं महत् ॥ ८५
तत्र ते न्यवसन् राजन् यज्ञसेनेन पूजिताः ।
प्रत्याश्वस्तस्ततो राजा सह पुत्रैरुवाच तम् ॥ ८६
गृह्णातु विधिवत्पाणिमद्यायं कुरुनंदनः ।
पुण्येऽहनि महाबाहुरर्जुनः कुरुतां क्षणम् ॥ ८७

युधि० उ०—सर्वेषां महिषी राजन् द्रौपदी नो भविष्यति ।
एव हि व्याहृतं पूर्व मम मात्रा विशांपते ॥ ८८
पार्थेन विजिता चैषा रत्नभूता सुता तव ।
एष नः समयो राजन् रत्नस्य सहभोजनम् ॥ ८९
सर्वेषां धर्मतः कृष्णा महिषी नो भविष्यति ।
आनुपूर्व्येण सर्वेषां गृह्णातु ज्वलने करान् ॥ ९०

द्रुप० उ०—एकस्य बह्व्यो विहिता महिष्यः कुरुनंदन ।
नैकस्या बहवः पुंसः श्रूयते पतयः क्वचित् ॥ ९१
लोकवेदविरुद्धं त्वं नाधर्मं धर्मविच्छुचिः ।
कर्तुमर्हसि कौंतेय कस्मात्ते बुद्धिरीदृशी ॥ ९२

धर्म० उ०—सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम् ।
पूर्वेषामानुपूर्व्येण यातं वर्त्मानुयामहे ॥ ९३
न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
एवं चैव वदत्यंबा मम चैतन्मनोगतम् ॥ ९४
एष धर्मो ध्रुवो राजंश्चरैनमविचारयन् ।
मा च शंका तत्र ते स्यात्कथंचिदपि पार्थिव ॥ ९५

ततोऽब्रवीद्भगवान् धर्मराजमद्यैव पुण्याहमुत वः पांडवेयाः ।
अद्य पौष्यं योगमुपैति चंद्रमाः पाणिं कृष्णायास्त्वं गृहाणाद्य पूर्वम् ॥ ९६

ततो राजा यज्ञसेनः सपुत्रो जन्यार्थमुक्तं बहु तत्तद्ग्र्यम् ।
समानयामास सुतां च कृष्णामाप्लाव्य रत्नैर्बहुभिर्विभूष्य ॥ ९७

ततस्तु ते कौरवराजपुत्रा विभूषिताः कुंडलिनो युवानः ।
महार्हवस्त्रांबरचंदनोक्षिताः कृताभिषेकाः कृतमंगलक्रियाः ॥ ९८

पुरोहितेनाग्निसमानवर्चसा सदैव धौम्येन यथाविधि प्रभो ।
क्रमेण सर्वे विविशुस्ततः सदो महर्षभा गोष्ठमिवाभिनंदिनः ॥ ९९

क्रमेण चानेन नराधिपात्मजा वरस्त्रियस्ते जगृहुस्तदा करम् ।
अहन्यहन्युत्तमरूपधारिणो महारथाः कौरववंशवर्धनाः ॥ १००
कृते विवाहे द्रुपदो धनं ददौ महारथेभ्यो बहुरूपमुत्तमम् ।
शतं रथाना वरहेममालिनां चतुर्युजां हेमखलीनमालिनाम् ॥ १०१
शतं गजानामपि पद्मिनां तथा शतं गिरीणामिव हेमशृंगिणाम् ।
तथैव दासीशतमग्र्ययौवनं महार्हवेषाभरणांबरस्रजम् ॥ १०२
पृथक् पृथक् दिव्यदृशां पुनर्ददौ तदा धनं सौमकिरग्निसाक्षिकम् ।
तथैव वस्त्राणि विभूषणानि प्रभावयुक्तानि महानुभावः ॥ १०३

इति श्रीसंक्षिप्तमहाभारते आदिपर्वणि एकादशोऽध्यायः ॥ ११ ॥

---

## अथ द्वादशोऽध्यायः ।

पाडवैः सह संयोगं गतस्य द्रुपदस्य ह ।
न बभूव भयं किंचिद्देवेभ्योऽपि कथचन ॥ १
कुंतीमासाद्य ता नार्यो द्रुपदस्य महात्मन ।
नाम संकीर्तयंत्योऽस्या जग्मुः पादौ स्वमूर्धभिः ॥ २
कृष्णा च क्षौमसंवीता कृतकौतुकमगला ।
कृताभिवादना श्वश्र्वा तस्थौ प्रह्वा कृताजलिः ॥ ३
रूपलक्षणसंपन्नां शीलाचारसमन्विताम् ।
द्रौपदीमवदत्प्रेम्णा पृथाऽऽशीर्वचन स्नुषाम् ॥ ४
यथेंद्राणी हरिहये स्वाहा चैव विभावसौ ।
रोहिणी च यथा सोमे दमयंती यथा नले ॥ ५
यथा वैश्रवणे भद्रा वसिष्ठे चाप्यरुंधती ।
यथा नारायणे लक्ष्मीस्तथा त्वं भव भर्तृषु ॥ ६
जीवसूर्वीरसूर्भद्रे बहुसौख्यसमन्विता ।
सुभगा भोगसंपन्ना यज्ञपत्नी पतिव्रता ॥ ७
अतिथीनागतान्साधून् वृद्धान् बालांस्तथा गुरून् ।
पूजयंत्या यथान्यायं शश्वद्गच्छंतु ते समाः ॥ ८
कुरुजांगलमुख्येषु राष्ट्रेषु नगरेषु च ।
अनु त्वमभिषिच्यस्व नृपतिं धर्मवत्सला ॥ ९

पतिभिर्निर्जितामुर्वीं विक्रमेण महाबलैः ।
कुरु ब्राह्मणसात्सर्वामश्वमेधे महाक्रतौ ॥ १०
ततस्तु कृतदारेभ्यः पांडुभ्यः प्राहिणोद्धरिः ।
वैडूर्यमणिचित्राणि हैमान्याभरणानि च ॥ ११
वासांसि च महार्हाणि नानादेश्यानि माधवः ।
कंबलाजिनरत्नानि स्पर्शवंति शुभानि च ॥ १२
रूपयौवनदाक्षिण्यैरुपेताश्च स्वलंकृताः ।
प्रेष्याः संप्रददौ कृष्णो नानादेश्याः स्वलंकृताः ॥ १३
गजान् विनीतान् भद्रांश्च सदश्वांश्च स्वलंकृतान् ।
रथांश्च दांतान् सौवर्णैः शुभ्रैः पट्टैरलंकृतान् ॥ १४
कोटिशश्च सुवर्णं च तेषामकृतकं तथा ।
वीथीकृतममेयात्मा प्राहिणोन्मधुसूदनः ॥ १५
तत्सर्वं प्रतिजग्राह धर्मराजो युधिष्ठिरः ।
मुदा परमया युक्तो गोविंदप्रियकाम्यया ॥ १६
ततो राज्ञां चरैराप्तैः प्रवृत्तिरुपनीयत ।
पांडवैरुपसंपन्ना द्रौपदी पतिभिः शुभा ॥ १७
येन तद्धनुरादाय लक्ष्यं विद्धं महात्मना ।
सोऽर्जुनो जयतां श्रेष्ठो महाबाणधनुर्धरः ॥ १८
यः शल्यं मद्रराजं वै प्रोत्क्षिप्यापातयद्बली ।
स भीमो भीमसंस्पर्शः शत्रुसेनांगपातनः ॥ १९
ब्रह्मरूपधरान् श्रुत्वा प्रशांतान्पांडुनंदनान् ।
कौंतेयान्मनुजेंद्राणां विस्मयः समजायत ॥ २०
सपुत्रा हि पुरा कुंती दग्धा जतुगृहे श्रुता ।
पुनर्जातानिव च तांस्तेऽमन्यंत नराधिपाः ॥ २१
अथ दुर्योधनो राजा विमना भ्रातृभिः सह ।
अश्वत्थाम्ना मातुलेन कर्णेन च कृपेण च ।
विनिवृत्तो वृतं दृष्ट्वा द्रौपद्या श्वेतवाहनम् ॥ २२
वैचित्रवीर्यस्तु नृपो निशम्य विदुरस्य तत् ।
अब्रवीत्परमप्रीतो दिष्ट्या दिष्ट्येति भारत ॥ २३
यथैव पांडोः पुत्रास्तु तथैवाभ्यधिका मम ।
यथा चाभ्यधिका बुद्धिर्मम तान्प्रति तच्छृणु ॥ २४

ततो जगाम विदुरो धृतराष्ट्रस्य शासनात् ।
सकाशं यज्ञसेनस्य पांडवानां च भारत ॥ २५
समुपादाय रत्नानि वसूनि विविधानि च ।
द्रौपद्याः पांडवानां च यज्ञसेनस्य चैव ह ॥ २६
ददर्श पांडवांस्तत्र वासुदेवं च भारत ।
स्नेहात् परिष्वज्य स तान् पप्रच्छानामयं ततः ॥ २७
प्रददौ चापि रत्नानि विविधानि वसूनि च ।
पांडवाना च कुंत्याश्च द्रौपद्याश्च विशांपते ॥ २८
ततस्ते समनुज्ञाता द्रुपदेन महात्मना ।
पांडवाश्चैव कृष्णश्च विदुरश्च महीपते ॥ २९
आदाय द्रौपदीं कृष्णां कुंतीं चैव यशस्विनीम् ।
सविहारं सुखं जग्मुर्नगर नागसाह्वयम् ॥ ३०
नगरं हास्तिनपुरं शनैः प्रविविशुस्तदा ।
कौतूहलेन नगरं दीप्यमानामिवाभवत् ॥ ३१
ततस्ते धृतराष्ट्रस्य भीष्मस्य च महात्मनः ।
अन्येषां च तदर्हाणां चक्रुः पादाभिवंदनम् ॥ ३२
विश्रांतास्ते महात्मानः कंचित्कालं महाबला ।
आहूता धृतराष्ट्रेण राज्ञा शांतनवेन च ॥ ३३
धृत० उ०—भ्रातृभिः सह कौंतेय निबोध गदतो मम ।
पुनर्नो विग्रहो माभूत्खांडवप्रस्थमाविश ॥ ३४
न च वो वसतस्तत्र कश्चिच्छक्तः प्रबाधितुम् ।
संरक्ष्यमाणान्पार्थेन त्रिदशानिव वज्रिणा ॥ ३५
प्रतिगृह्य तु तद्वाक्यं नृपं सर्वे प्रणम्य च ।
प्रतास्थिरे ततो घोरं वनं तन्मनुजर्षभाः ॥ ३६
अर्धं राज्यस्य संप्राप्य खांडवप्रस्थमाविशन् ॥ ३७
ततः पुण्ये शिवे देशे शांतिं कृत्वा महारथाः ।
नगरं मापयामासुर्द्वैपायनपुरोगमाः ॥ ३८
सागरप्रतिरूपाभिः परिखाभिरलंकृतम् ।
प्राकारेण च संपन्न दिवमावृत्य तिष्ठता ॥ ३९
पांडुराभ्रप्रकाशेन हिमरश्मिनिभेन च ।
द्विपक्षगरुडप्रख्यैर्द्वारैः सौधैश्च शोभितम् ॥ ४०

गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मंदरोपमैः ।
तीक्ष्णांकुशशतघ्नीभिर्यन्त्रजालैश्च शोभितम् ॥ ४१
सुविभक्तमहारथ्यं देवताबाधवर्जितम् ।
विरोचमानं विविधैः पांडुरैर्भवनोत्तमैः ॥ ४२
तत्रागच्छन् द्विजा राजन् सर्ववेदविदां वराः ।
निवासं रोचयंति स्म सर्वभाषाविदस्तथा ॥ ४३
वणिजश्चाययुस्तत्र नाना दिग्भ्यो धनार्थिनः ।
सर्वशिल्पविदस्तत्र वासायाभ्यागमंस्तदा ॥ ४४
उद्यानानि च रम्याणि नगरस्य समंतत. ।
आम्रैराम्रातकैर्नीपैरशोकैश्चंपकैस्तथा ॥ ४५
नित्यपुष्पफलोपेतैर्नानाद्विजगणायुतैः ।
मत्तबर्हिणसंघुष्टकोकिलैश्च सदामदैः ॥ ४६
गृहैरादर्शविमलैर्विविधैश्च लतागृहैः ।
मनोहरैश्चित्रगृहैस्तथाजगतिपर्वतैः ॥ ४७
तेषां पुण्यजनोपेतं राष्ट्रमाविशतां महत् ।
पाडवानां महाराज शश्वत्प्रीतिरवर्धत ॥ ४८
पंचभिस्तैर्महेष्वासैरिंद्रकल्पैः समन्वितम् ।
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ॥ ४९
समयं चक्रिरे राजंस्तेऽन्योन्यवशमागताः ।
द्रौपद्या नः सहासीनानन्योऽन्यं योऽभिदर्शयेत् ।
स नो द्वादश वर्षाणि ब्रह्मचारी वने वसेत् ॥ ५०
एव तैः समयः पूर्व कृतो नारदचोदितैः ।
न चाभियंत ते सर्वे तदाऽन्योन्येन भारत ॥ ५१
तेषां मनुजसिंहानां पंचानाममितौजसाम् ।
बभूव कृष्णा सर्वेषां पार्थानां वशवर्तिनी ॥ ५२
ते तया तैश्च सा वीरैः पतिभिः सह पंचभिः ।
बभूव परमप्रीता नागैरिव सरस्वती ॥ ५३
अनंतरं च द्रौपद्या सहासीनं युधिष्ठिरम् ।
अनुप्रविश्य विप्रार्थे फाल्गुनो गृह्य चायुधम् ॥ ५४
मोक्षयित्वा गृहं गत्वा विप्रार्थे कृतनिश्चयः ।
समयं पालयन्वीरो वनं यत्र जगाम ह ॥ ५५

पार्थस्य वनवासे च उलूप्या पथि संगमः ।
पुण्यतीर्थानुसंयातः बभ्रुवाहनजन्म च ॥ ५९

इति श्रीसंक्षिप्तमहाभारते आदिपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

---

## अथ त्रयोदशोऽध्यायः ।

प्रभासदेशं संप्राप्तं बीभत्सुमपराजितम् ।
सुपुण्यं रमणीयं च शुश्राव मधुसूदनः ॥ १
ततोऽभ्यगच्छत् कौंतेयं सखायं तत्र माधवः ।
तावन्योऽन्यं समाश्लिष्य पृष्ट्वा च कुशलं वने ।
आस्तां प्रियसखायौ तौ नरनारायणावृषी ॥ २
तौ विहृत्य यथाकामं प्रभासे कृष्णपांडवौ ।
महीधरं रैवतकं वासायैवाभिजग्मतुः ॥ ३
स कृत्वाऽवश्यकार्याणि वार्ष्णेयेनाभिनंदितः ।
रथेन कांचनांगेन द्वारकामभिजग्मिवान् ॥ ४
कृष्णस्य भवने रम्ये रत्नभोज्यासमावृते ।
उवास सह कृष्णेन बहुलास्तत्र शर्वरीः ॥ ५
ततः कतिपयाहस्य तस्मिन्रैवतके गिरौ ।
वृष्ण्यंधकानामभवदुत्सवो नृपसत्तम ॥ ६
अलंकृताः कुमाराश्च वृष्णीनां सुमहौजसाम् ।
यानैर्हाटकचित्रैश्च चंचूर्यंते स्म सर्वशः ॥ ७
पौराश्च पादचारेण यानैरुच्चावचैस्तथा ।
सदाराः सानुयात्राश्च शतशोथ सहस्रशः ॥ ८
ततो हलधरः क्षीबो रेवतीसहितः प्रभुः ।
अनुगम्यमानो गंधर्वैरचरत्तत्र भारत ॥ ९
तत्र चंक्रममाणौ तौ वसुदेवसुतां शुभाम् ।
अलंकृतां सखीमध्ये सुभद्रां ददृशुस्तदा ॥ १०
दृष्ट्वैव तामर्जुनस्य कंदर्पः समजायत ।
तं तदैकाग्रमनसं कृष्णः पार्थमलक्षयत् ॥ ११
अब्रवीत्पुरुषव्याघ्रः प्रहसन्निव भारत ।
वनेचरस्य किमिदं कामेनालोड्यते मनः ॥ १२

ममैषा भगिनी पार्थ सारणस्य सहोदरा ।
सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता ॥ १३

अर्जु० उ०—दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेण चैषा संपन्ना कमिवैषा न मोहयेत् ॥ १४

वासु० उ०—स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ ।
स च संशयितः पार्थ स्वभावस्यानिमित्ततः ॥ १५
प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते ।
विवाहहेतुः शूराणामिति धर्मविदो विदुः ॥ १६
स त्वमर्जुन कल्याणीं प्रसह्य भगिनीं मम ।
हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥ १७
ततः संवादिते तस्मिन्ननुज्ञातो धनंजयः ॥ १८
गतां रैवतके कन्यां विदित्वा जनमेजय ।
मृगयाव्यपदेशेन प्रययौ पुरुषर्षभः ॥ १९
सुभद्रा त्वथ शैलेंद्रमभ्यर्च्यैव हि रैवतम् ।
प्रदक्षिणं गिरेः कृत्वा प्रययौ द्वारकां प्रति ॥ २०
तामभिद्रुत्य कौंतेयः प्रसह्यारोपयद्रथम् ।
सुभद्रां चारुसर्वांगीं कामबाणप्रपीडितः ॥ २१
ह्रियमाणां तु तां दृष्ट्वा सुभद्रां सैनिका जनाः
विक्रोशंतोऽद्रवन् सर्वे द्वारकामभितः पुरीम् ॥ २२
तच्छ्रुत्वा वृष्णिवीरास्ते मदसंरक्तलोचनाः ।
अमृष्यमाणाः पार्थस्य समुत्पेतुरहंकृताः ॥ २३
उक्तवंतो यथावीर्यमसकृत्सर्ववृष्णयः ।
ततोऽब्रवीद्वासुदेवो वाक्यं धर्मार्थसंयुतम् ॥ २४
नावमानं कुलस्यास्य गुडाकेशः प्रयुक्तवान् ।
संमानोऽभ्यधिकस्तेन प्रयुक्तोऽयं न संशयः॥ २५
अर्थलुब्धान्न वः पार्थो मन्यते सात्वतान्सदा ।
स्वयंवरमनाधृष्यं मन्यते चापि पांडवः ॥ २६
प्रदानमपि कन्यायाः पशुत्वकोनुमन्यते ।
विक्रयं चाप्यपत्यस्य कः कुर्यात् पुरुषो भुवि ॥ २७
भरतस्यान्वये जातं शांतनोश्च यशस्विनः ।
कुंतिभोजात्मजं पुत्रं को बुभूषेत नार्जुनम् ॥ २८

न च पश्यामि यः पार्थं विजयेत रणे बलात् ।
वर्जयित्वा विरूपाक्षं भगनेत्रहरं हरम् ॥ २९
तच्छ्रुत्वा वासुदेवस्य तथा चक्रुर्जनाधिप ।
निवृत्तश्चार्जुनस्तत्र विवाहं कृतवान्प्रभुः ॥ ३०
उषित्वा तत्र कौंतेयः संवत्सरपराः क्षपाः ।
पूर्णे तु द्वादशे वर्षे खांडवप्रस्थमागतः ॥ ३१
अभिगम्य च राजानं नियमेन समाहितः ।
अभ्यर्च्य ब्राह्मणान् पार्थो द्रौपदीमभिजग्मिवान् ॥ ३२
तं द्रौपदी प्रत्युवाच प्रणयात् कुरुनंदनम् ।
तत्रैव गच्छ कौंतेय यत्र सा सात्वतात्मजा ।
सुबद्धस्यापि भारस्य पूर्वबंधः श्लथायते ॥ ३३
तथा बहुविधं कृष्णां विलपंती धनंजयः ।
सांत्वयामास भूयश्च क्षमयामास चासकृत् ॥ ३४
सुभद्रां त्वरमाणश्च रक्तकौशेयवासिनीम् ।
पार्थः प्रस्थापयामास कृत्वा गोपालिकावपुः ॥ ३५
साऽधिकं तेन रूपेण शोभमाना यशस्विनी ।
ववंदे पृथुताम्राक्षी पृथां भद्रा यशस्विनी ॥ ३६
ततोऽभिगम्य त्वरिता पूर्णेंदुसदृशानना ।
ववंदे द्रौपदीं भद्रा प्रेष्योऽहमिति चाब्रवीत् ॥ ३७
प्रत्युत्थाय तदा कृष्णा स्वसारं माधवस्य च ।
परिष्वज्यावदत्प्रीत्या निःसपत्नोऽस्तु ते पतिः ॥ ३८
अर्जुनं पांडवश्रेष्ठमिंद्रप्रस्थगतं तदा ।
आजगाम विशुद्धात्मा सह रामेण केशवः ॥ ३९
तांश्च वृष्ण्यंधकश्रेष्ठान् कुंतीपुत्रो युधिष्ठिरः ।
प्रतिजग्राह सत्कारैर्यथाविधि यथागतम् ॥ ४०
तेषां ददौ हृषीकेशो जन्यार्थे धनमुत्तमम् ।
हरणे वै सुभद्राया ज्ञातिदेयं महायशाः ॥ ४१
रथानां कांचनांगानां किंकिणीजालमालिनाम् ।
सहस्रं प्रददौ कृष्णो गवामयुतमेव च ॥ ४२
श्रीमन्माथुरदेश्यानां दोग्ध्रीणां पुण्यवर्चसाम् ॥ ४३

वडवाना च शुद्धानां चंद्रांशुसमवर्चसाम् ।
तथैवाश्वतरीणां च दांतानां वातरंहसाम् ॥ ४४
शतान्यंजनकेशीनां श्वेतानां पंच पंच च ।
स्नानपानोत्सवे चैव प्रयुक्तं वयसान्वितम् ॥ ४५
स्त्रीणां सहस्रं गौरीणां सुवेषाणां सुवर्चसाम् ।
पृष्ठ्यानामपि चाश्वानां बाह्लिकानां जनार्दनः ॥ ४६
स महाधनरत्नौघो वस्त्रकंबलफेनवान् ।
महागजमहाग्राहः पताकाशैवलाकुलः ॥ ४७
पांडुसागरमाविद्धः प्रविवेश महाधनः ।
प्रतिजग्राह तत्सर्वं धर्मराजो युधिष्ठिरः ॥ ४८
एवमुत्तमवीर्यास्ते विहृत्य दिवसान् बहून् ।
पूजिताः कुरुभिर्जग्मुः पुनर्द्वारवतीं प्रति ॥ ४९
वासुदेवस्तु पार्थेन तत्रैव सह भारत ।
उवास नगरे रम्ये शक्रप्रस्थे महात्मना ॥ ५०
ततः सुभद्रा सौभद्रं केशवस्य प्रिया स्वसा ।
जयंतमिव पौलोमी ख्यातिमंतमजीजनत् ॥ ५१
दीर्घबाहुं महोरस्कं वृषभाक्षमरिंदमम् ।
सुभद्रा सुषुवे वीरमभिमन्युं नरर्षभम् ॥ ५२
यस्मिन् जाते महातेजाः कुंतीपुत्रो युधिष्ठिरः ।
अयुतं गा द्विजातिभ्यः प्रादान्निष्कांश्च भारत ॥ ५३
दयितो वासुदेवस्य बाल्यात्प्रभृति चाभवत् ।
जन्मप्रभृति कृष्णश्च चक्रे तस्य क्रियाः शुभाः ॥ ५४
वेदज्ञानेष्वपि चास्त्राणां सोऽत्र च महाबलः ।
क्रियास्वपि च सर्वासु विशेषानभ्यशिक्षयत् ॥ ५५
आगमे च प्रयोगे च चक्रे तुल्यमिवात्मना ।
तुतोष पुत्रं सौभद्रं प्रेक्षमाणो धनंजयः ॥ ५६
पांचाल्यपि तु पंचभ्यः पतिभ्यः शुभलक्षणा ।
लेभे पंच सुतान् वीरान् श्रेष्ठान् पंचाचलानिव ॥ ५७
युधिष्ठिरात्प्रतिविंध्यं सुतसोमं वृकोदरात् ।
अर्जुनाच्छ्रुतकर्माणं शतानीकं च नाकुलिम् ।
सहदेवाच्छ्रुतसेनमेतान् पंच महारथान् ॥ ५८

इति श्रीसंक्षिप्तमहाभारते आदिपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

## अथ चतुर्दशोऽध्यायः ।

तस्मिंस्तदा वर्तमाने कुरुदाशार्हनंदनौ ।
समीपं जग्मतुः कंचिदुद्देशं सुमनोहरम् ॥ १
अभ्यागच्छत्तदा विप्रो वासुदेवधनंजयौ ।
बृहच्छालप्रतीकाशः प्रतप्तकनकप्रभः ॥ २
हरिपिंगोज्ज्वलश्मश्रुः प्रमाणायामतः समः ।
सोऽब्रवीदर्जुनं चैव वासुदेवं च सात्वतम् ॥ ३
ब्राह्मणो बहुभोक्ताऽस्मि भुञ्जेऽपरिमितं सदा ।
एवमुक्तौ तदा ब्रूतां ततस्तौ कृष्णपाण्डवौ ॥ ४
केनान्नेन भवांस्तुष्येत्तस्यान्नस्य यतामहे ।
ब्राह्म० उ०—नाहमन्नं बुभुक्षे वै पावकं मां निबोधतम् ॥ ५
इदमिंद्रः सदा दावं खाण्डवं परिरक्षति ।
न च शक्नोम्यहं दग्धुं रक्ष्यमाणं महात्मना ॥ ६
स युवाभ्यां सहायाभ्यामस्त्रविद्भ्यां समागतः ।
दहेयं खाण्डवं दावमेतदन्नं वृतं मया ॥ ७
अ० उ०—उत्तमास्त्राणि मे संति दिव्यानि च बहूनि च ।
धनुर्मे नास्ति सदृशं बाहुवीर्येण संमितम् ॥ ८
एवमुक्तः स भगवान् धूमकेतुर्हुताशनः ।
चिंतयामास वरुणं लोकपालं दिदृक्षया ॥ ९
स च तच्चिंतितं ज्ञात्वा दर्शयामास पावकम् ।
तमब्रवीद्धूमकेतुः प्रतिगृह्य जलेश्वरम् ॥ १०
सोमेन राज्ञा यद्दत्तं धनुश्चैवेषुधी च ते ।
तत्प्रयच्छोभयं शीघ्रं रथं च कपिलक्षणम् ॥ ११
ददानीत्येव वरुणः पावकं प्रत्यभाषत ॥ १२
तच्च दिव्यं धनुःश्रेष्ठं ब्रह्मणा निर्मितं पुरा ।
गांडीवमुखसंगृह्य बभूव मुदितोऽर्जुनः ॥ १३
अर्जु० उ०—सर्वतः परिवार्यैव दावमेतन्महत् प्रभो ।
कामं संप्रज्वलयेत्र कल्पौ स्वः साह्यकर्मणि ॥ १४
एवमुक्तः स भगवान् दाशार्हेणार्जुनेन च ।
तैजसं रूपमास्थाय दावं दग्धुं प्रचक्रमे ॥ १५

तौ रथाभ्यां रथिश्रेष्ठौ दावस्योभयतः स्थितौ ।
दिक्षु सर्वासु भूतानां चक्राते कदनं महत् ॥ १६

न च स्म किंचिच्छक्नोति भूतं निश्चरितुं तत ।
संछिद्यमानमिषुभिरस्यता सव्यसाचिना ॥ १७

भूतसंघाश्च बहवो दीनाश्चक्रुर्महास्वनम् ।
रुरुदुर्वारणाश्चैव तथा मृगतरक्षव. ॥ १८

न त्वर्जुन महाबाहो नापि कृष्ण जनार्दनम् ।
निरीक्षितुं वै शक्नोति कश्चिद्योद्धुं कुन' पुनः ॥ १९

पेतुर्भिन्नशिरोदेहाश्चक्रवेगाद्गतासवः ।
पेतुरन्ये महाकायाः प्रदीप्ते वसुरेतसि ॥ २०

समांसरुधिरौघैश्च वसाभिश्चापि तर्पित ।
उपर्याकाशगोभूत्वाविधूमःसमपद्यत ॥ २१

तद्वनं पावको धीमान् दिनानि दश पच च ।
ददाह कृष्णपार्थाभ्यां रक्षितः पाकशासनात् ॥ २२

तस्मिन्वने दह्यमाने षडग्निर्न ददाह च ।
अश्वसेन मयं चैव चतुरः शार्ङ्गकास्तथा ॥ २३

इति श्रीसंक्षिप्तमहाभारते आदिपर्वणि चतुर्दशो याय ॥ १४ ॥

**समाप्तमादिपर्व ॥ पर्वश्लोकसंख्या ॥ ७६८ ॥**



# २ सभापर्व

## १

वै० उ०—ततोऽब्रवीन्मयः पार्थं वासुदेवस्य सन्निधौ ।
त्वया त्रातोस्मि कौंतेय ब्रूहि किं करवाणि ते ॥ १
चोदयामास तं कृष्णः सभा वै क्रियतामिति ।
प्रतिगृह्य तु तद्वाक्यं संप्रहृष्टो मयस्तदा ॥ २
विमानप्रतिमां चक्रे पांडवस्य शुभां सभाम्
सर्वर्तुगुणसंपन्नां दिव्यरूपां मनोरमाम् ॥ ३
दशकिष्कुसहस्रां तां मापयामास सर्वतः ।
अथाब्रवीन्मयः पार्थमर्जुनं जयतां वरम् ॥ ४
सभायां सत्यसंधस्य यदासीद्वृषपर्वणः ।
चित्रं मणिमयं भाण्डं तदानेष्यामि पांडव ॥ ५
अस्ति बिंदुसरस्युग्रा गदा च कुरुनंदन ।
अनुरूपा च भीमस्य गांडीवं भवतो तथा ॥ ६
वारुणश्च महाशंखो देवदत्तः सुघोषवान् ।
इत्युक्त्वा सोऽसुरः पार्थं प्रागुदीचीं दिशं गतः ॥ ७
अथोत्तरेण कैलासान्मैनाकं पर्वतं प्रति ।
हिरण्यशृंगः सुमहान् महामणिमयो गिरिः ॥ ८
रम्यं बिंदुसरो नाम यत्र राजा भगीरथः ।
द्रष्टुं भागीरथीं गंगामुवास बहुलाः समाः ॥ ९
तत्र गत्वा स जग्राह गदां शंखं च भारत ।
स्फाटिकं च सभाद्रव्यं यदासीद्वृषपर्वणः ॥ १०
तदाहृत्य च तां चक्रे सोऽसुरोऽप्रतिमां सभाम् ।
विश्रुतां त्रिषु लोकेषु दिव्यां मणिमयीं शुभाम् ॥ ११
गदां च भीमसेनाय प्रवरां प्रददौ तदा ।
देवदत्तं चार्जुनाय शंखप्रवरमुत्तमम् ॥ १२
सभा च सा महाराज शातकुंभमयद्रुमा ।
प्रबभौ ज्वलमानेव दिव्या दिव्येन तेजसा ॥ १३
उत्तमद्रव्यसंपन्ना रत्नप्राकारमालिनी ।
तस्यां सभायां नलिनीं चकाराप्रतिमां मयः ॥ १४

वैडूर्यपत्रविततां मणिनालोज्ज्वलाबुजाम् ।
हैमसौगंधिकवती नानाद्विजगणायुताम् ॥ १५
चित्रस्फटिकसोपानां निष्पंकसलिला शुभाम् ।
महामणिशिलापट्टबद्धपर्यंतवेदिकाम् ॥ १६
अभ्येत्य मानवा. केचिद्दृष्ट्वापि न विजानते ।
तेऽज्ञानात्प्रपतंति स्म नरा विभ्रांतचेतस' ॥ १७
ईदृशीं तां सभां कृत्वा मासैः परिचतुर्दशैः ।
निष्ठिता धर्मराजाय मयो राज्ञे न्यवेदयत् ॥ १८
तथा स कृत्वा पूजा ता भ्रातृभि सह पाडवः ।
तस्या सभाया रम्यायां रेमे शक्रो यथा दिवि ॥ १९
सभायामृषयस्तस्या पाडवैः सह आसते ।
आसांचक्रुर्नरेंद्राश्च नानादेशसमागता ॥ २०
धनंजयसखा चात्र नित्यमास्ते स्म तुंबरु ।
चित्रसेन सहामात्यो गधर्वाप्सरसस्तथा ॥ २१

## २

अथ तत्रोपविष्टेषु पाडवेषु महात्मसु ।
धर्मार्थकाममोक्षेषु यथावत्कृतनिश्चयः ॥ २२
युद्धगाधर्वसेवी च सर्वत्राप्रतिघस्तथा ।
लोकाननुचरन्सर्वानगमत्तां सभा नृप ।
नारद सुमहातेजा ऋषिभिः सहितस्तदा ॥ २३
तुतोष च यथावच्च पूजा प्राप्य युधिष्ठिरात् ।
धर्मकामार्थसंयुक्तं पप्रच्छेद युधिष्ठिरम् ॥ २४

ना० उ०—कच्चिदर्थाश्च कल्पंते धर्मे च रमते मनः ।
सुखानि चानुभूयंते मनश्च न विहन्यते ॥ २५
कच्चिदर्थं च धर्मं च कामं च जयतांवर ।
विभज्य काले कालज्ञ सम वरद सेवसे ॥ २६
मित्रोदासीनशत्रूणां कच्चिद्वेत्सि चिकीर्षितम् ॥ २७
कच्चित्संवृतमंत्रैस्ते अमात्यैः शास्त्रकोविदैः ।
राष्ट्रं सुरक्षितं तात शत्रुभिर्नावलुप्यते ॥ २८

कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पंडितम् ।
पंडितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं परम् ॥ २९
कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः ।
यंत्रैश्च परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥ ३०
कच्चिन्नोग्रेण दंडेन भृशमुद्विजसे प्रजाः ।
कच्चिद्धृष्टश्च शूरश्च मतिमान् धृतिमान् शुचिः ।
कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तव ॥ ३१
कच्चिद्बलस्य भक्तं च वेतन च यथोचितम् ।
संप्राप्तकाले दातव्यं ददासि न विकर्षसि ॥ ३२
कालातिक्रमणादेते भक्तवेतनयोर्भृताः ।
भर्तुः कुर्वंति यद्भृत्या· सोनर्थः सुमहान्स्मृतः ॥ ३३
कच्चिद्दारान् मनुष्याणा तवार्थमृत्युमीयुषा ।
व्यसन चाभ्युपेतानां बिभर्षि भरतर्षभ ॥ ३४
कच्चिदात्मानमेवाग्रे विजित्य विजितेंद्रियः ।
परान् जिगीषसे पार्थ प्रमत्तानजितेंद्रियान् ॥ ३५
कच्चिदायस्य चार्धेन चतुर्भागेन वा पुन· ।
पादभागैस्त्रिभिर्वापि व्ययः सशोध्यते तव ॥ ३६
कच्चिच्चायव्यये युक्ताः सर्वे गणकलेखकाः ।
अनुतिष्ठंति पूर्वाह्णे नित्यमाय व्ययं तव ॥ ३७
कच्चिदर्थेषु सप्रौढान् हितकामाननुप्रियान् ।
नापकर्षसि कर्मभ्यः पूर्वमप्राप्य किल्बिषम् ॥ ३८
कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशांपते ।
अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः ॥ ३९
कच्चिन्न चौरैर्लुब्धैर्वा कुमारैः स्त्रीबलेन वा ।
त्वया वा पीड्यते राष्ट्रं कच्चित्तुष्टाः कृषीवलाः ॥ ४०
कच्चिद्राष्ट्रे तडागानि पूर्णानि च बृहंति च ।
भागशो विनिविष्टानि न कृषिर्देवमातृका ॥ ४१
कच्चिन्न बीजं भक्तं च कर्षकस्यावसीदति ।
प्रत्येकं च शतं वृद्ध्या ददास्यृणमनुग्रहम् ॥ ४२
कच्चिच्छूराः कृतप्रज्ञाः पंच पंच स्वनुष्ठिताः ।
क्षेमं कुर्वंति संहत्य राजन् जनपदे तव ॥ ४३

कच्चिद्बलेनानुगताः समेषु विषमेषु च ।
पुराणि चौर निघ्नतश्चरंति विषये तव ॥ ४४
कच्चित्स्त्रियः सांत्वयसि कच्चित्ताश्च सुरक्षिताः ।
कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ॥ ४५
कच्चिद्दर्शयसे नित्यं मनुष्यान्समलंकृतः ।
उत्थाय काले कालज्ञैः सह पांडव मंत्रिभिः ॥ ४६
कच्चिद्रक्तांबरधराः खड्गहस्ताः स्वलंकृताः ।
उपासते त्वामभितो रक्षणार्थमरिंदम ॥ ४७
कच्चिच्छारीरमाबाधमौषधैर्नियमेन वा ।
मानसं वृद्धसेवाभिः सदा पार्थापकर्षसि ॥ ४८
कच्चित्ते सफला वेदाः कच्चित्ते सफलं धनम् ।
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥ ४९
अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् ।
रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् ॥ ५०
कच्चित्सूत्राणि गृह्णासि सर्वाणि भरतर्षभ ।
हस्तिसूत्राश्वसूत्राणि रथसूत्राणि वा विभो ॥ ५१
कच्चिदभ्यस्यते नित्यं गृहे ते भरतर्षभ ।
धनुर्वेदस्य सूत्रं वै यंत्रसूत्रं च नागरम् ॥ ५२
कच्चिदस्त्राणि सर्वाणि ब्रह्मदण्डश्च तेऽनघ ।
विषयोगास्तथा सर्वे विदिताः शत्रुनाशनाः ॥ ५३
कच्चिदग्निभयाच्चैव सर्पव्यालभयात्तथा ।
रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि ॥ ५४
कच्चिदंधांश्च मूकांश्च पंगून् व्यंगानबांधवान् ।
पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि ॥ ५५
षडनर्था महाराज कच्चित्ते पृष्ठतः कृताः ।
निद्रालस्यं भयं क्रोधो मार्दवं दीर्घसूत्रता ॥ ५६
एवं यो वर्तते राजा चातुर्वर्ण्यस्य रक्षणे ।
स विहृत्येह सुसुखी शक्रस्यैति सलोकताम् ॥ ५७

३

यु० उ०—भवान्सचरते लोकान्सदा नानाविधान् बहून् ।
ईदृशी भवता कच्चिद् दृष्टपूर्वा सभा क्वचित् ॥ ५८

नार० उ०—मानुषेषु न मे तात दृष्टपूर्वा न च श्रुता ।
सभा मणिमयी राजन् यथेयं तव भारत ॥ ५९
शक्रस्य तु सभा दिव्या भास्वरा कर्मनिर्मिता ।
स्वयं शक्रेण कौरव्य निर्जितार्कसमप्रभा ॥ ६०
एषा सभा मया राजन् दृष्टा पुष्करमालिनी ।
तथा च सा सभा राजन् पितृराज्ञो महात्मनः ।
वरुणस्य सभा दृष्टा कुबेरस्य तथैव च ॥ ६१
पितामहसभां द्रष्टुं व्रतं वर्षसहस्रिकम् ।
ब्रह्मव्रतमुपास्याहं प्रयतेनान्तरात्मना ॥ ६२
न वेद परिमाणं वा संस्थानं वापि भारत ।
न च रूपं मया तादृक् दृष्टपूर्वं कदाचन ॥ ६३
पितृलोकगतस्त्वाह पाण्डुस्ते पाण्डुनंदन ।
समर्थोऽसि महीं जेतुं भ्रातरस्ते वशे स्थिताः ॥ ६४
राजसूयं क्रतुश्रेष्ठमाहरस्वेति भारत ॥ ६५
त्वय्यीष्टवति पुत्रेऽहं हरिश्चंद्रवदाशु वै ।
मोदिष्ये बहुलाः शश्वत्समाः शक्रस्य संसदि ॥ ६६
तस्य त्वं पुरुषव्याघ्र संकल्पं कुरु पाण्डव ।
गन्तासि त्वं महेन्द्रस्य पूर्वैः सह सलोकताम् ॥ ६७
एवमाख्याय पार्थेभ्यो नारदो जनमेजय ।
जगाम तैर्वृतो राजन्नृषिभिर्यैः समागतः ॥ ६८
वै० उ०—ऋषेस्तद्वचनं श्रुत्वा निशश्वास युधिष्ठिरः ।
चिंतयन्राजसूयेष्टिं न लेभे शर्म भारत ॥ ६९
स निश्चयार्थं कार्यस्य कृष्णमेव जनार्दनम् ।
सर्वलोकात्परं मत्वा जगाम मनसा हरिम् ।
गुरुवद्भूतगुरवे प्राहिणोद्दूतमञ्जसा ॥ ७०
दर्शनाकाङ्क्षिणं पार्थं दर्शनाकाङ्क्षयाच्युतः ।
इंद्रसेनेन सहित इंद्रप्रस्थमगात्तदा ॥ ७१
युधि० उ०—प्रार्थितो राजसूयो मे न चासौ केवलेप्सया ।
प्राप्यते येन तत्तर्हि विदितं कृष्ण सर्वशः ॥ ७२
केचिद्धि सौहृदादेव न दोषं परिचक्षते ।
स्वार्थहेतोस्तथैवान्ये प्रियमेव वदंत्युत ॥ ७३

त्वं तु हेतूनतीत्यैतान् कामक्रोधौ व्युदस्य च ।
परमं यत्क्षमं लोके यथावद्वक्तुमर्हसि ॥ ७४

श्रीकृ० उ०—सर्वैर्गुणैर्महाराज राजसूयं त्वमर्हसि ।
जानतस्त्वेव ते सर्वं किंचिद्वक्ष्यामि भारत ॥ ७५
जामदग्न्येन रामेण क्षत्रं यदवशेषितम् ।
तस्मादवरजं लोके यदिदं क्षत्रसंज्ञितम् ॥ ७६
कृतोऽयं कुलसंकल्पः क्षत्रियैर्वसुधाधिप ।
निदेशवाग्भिस्तत्तेह विदितं भरतर्षभ ॥ ७७
इदानीमेव वै राजन् जरासंधो महीपतिः ।
साम्राज्यं हि महाराज प्राप्तो भवति योगतः ॥ ७८
न च शक्यं जरासंधे जीवमाने महाबले ।
राजसूयं त्वया प्राप्तुमेषा राजन्मतिर्मम ॥ ७९
स हि राजा जरासंधो यियक्षुर्वसुधाधिपैः ॥ ८०
महादेवं महात्मानमुमापतिमरिंदम ।
आराध्य तपसोग्रेण निर्जितास्तेन पार्थिवाः ॥ ८१
स हि निर्जित्य निर्जित्य पार्थिवान्पृतनागतान् ।
पुरमानीय बध्वा च चकार पुरुषव्रतम् ॥ ८२
वयं चैव महाराज जरासंधभयात्तदा ।
मथुरां संपरित्यज्य गता द्वारवतीं पुरीम् ॥ ८३
यदि त्वेतं महाराज यज्ञं प्राप्तमभीप्स्यसि ।
यतस्व तेषां मोक्षाय जरासंधवधाय च ॥ ८४
पातितौ हंसडिभकौ कंसश्च सगणो हतः ।
जरासंधस्य निधने कालोऽयं समुपागतः ॥ ८५
न शक्योऽसौ रणे जेतुं सर्वैरपि सुरासुरैः ।
प्राणयुद्धेन जेतव्यः स इत्युपलभामहे ॥ ८६
मयि नीतिर्बलं भीमे रक्षिता चावयोर्जयः ।
मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः ॥ ८७
अवमानाच्च लोभाच्च बाहुवीर्याच्च दर्पितः ।
भीमसेनेन युद्धाय ध्रुवमप्युपयास्यति ॥ ८८
यदि मे हृदयं वेत्सि यदि ते प्रत्ययो मयि ।
भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे । ८९

युधि० उ०—यथा वदसि गोविंद सर्वं तदुपपद्यते ।
न हि त्वमग्रतस्तेषां येषां लक्ष्मीः पराङ्मुखी ॥ ९०
निहतश्च जरासंधो मोक्षिताश्च महीक्षितः ।
राजसूयश्च मे लब्धो निदेशे तव तिष्ठतः ॥ ९१
त्रिभिर्भवद्भिर्हि विना नाहं जीवितुमुत्सहे ।
धर्मकामार्थरहितो रोगार्त इव दुःखितः ॥ ९२
एवमेव यदुश्रेष्ठ यावत्कार्यार्थसिद्धये ।
अर्जुनः कृष्णमन्वेतु भीमोऽन्वेतु धनंजयम् ।
नयो जयो बलं चैव विक्रमे सिद्धिमेष्यति ॥ ९३

---

४

वै० उ०—एवमुक्त्वा ततः सर्वे भ्रातरो विपुलौजसः ।
वार्ष्णेयः पाण्डवेयौ च प्रतस्थुर्मगधं प्रति ॥ ९४
कुरुभ्यः प्रस्थितास्ते तु मध्येन कुरुजाङ्गलम् ।
रम्यं पद्मसरो गत्वा कालकूटमतीत्य च ॥ ९५
गंडकीं च महाशोणं सदानीरां तथैव च ।
उत्तीर्य सरयूं रम्यां दृष्ट्वा पूर्वांश्च कोशलान् ॥ ९६
अतीत्य जग्मुर्मिथिलां मालां चर्मण्वतीं नदीम् ।
अतीत्य गंगां शोणं च त्रयस्तेऽप्राङ्मुखास्तदा ॥ ९७
कुशचीरच्छदा जग्मुर्मागधं क्षेत्रमच्युताः ॥ ९८
ते शश्वद्गोधनाकीर्णमम्बुमंतं शुभद्रुमम् ।
गोरथं गिरिमासाद्य ददृशुर्मागधं पुरम् ॥ ९९
ततो द्वारमनासाद्य पुरस्य गिरिमुच्छ्रितम् ।
मागधानां तु रुचिरं चैत्यकांतरमाद्रवन् ।
यत्र मांसादमृषभमाससाद बृहद्रथः ॥ १००
तं हत्वा मासतालाभिस्तिस्रो भेरीरकारयत् ।
भंक्त्वा भेरीत्रयं तेपि चैत्यप्राकारमाद्रवन् ॥ १०१
स्थिरं सुविपुलं शृंगं सुमहत्तत्पुरातनम् ।
विपुलैर्बाहुभिर्वीरास्तेऽभिहत्याभ्यपातयन् ॥ १०२
ततस्ते मागधं द्रष्टुं पुरं प्रविविशुस्तदा ॥ १०३

विरागवसनाः सर्वे स्रग्विणो मृष्टकुंडलाः ।
निवेशनमथाजग्मुर्जरासंधस्य धीमतः ॥ १०४
तान् दृष्ट्वा द्विरदप्रख्यान् शालस्कंधानिवोद्गतान् ।
व्यूढोरस्कान्मागधानां विस्मयः समपद्यत ॥ १०५
ते त्वतीत्य जनाकीर्णाः कक्षास्तिस्रो नरर्षभाः ।
अहंकारेण राजानमुपतस्थुर्गतव्यथाः ॥ १०६
तान्पाद्यमधुपर्कार्हान् गवार्हान् सत्कृति गतान् ।
प्रत्युत्थाय जरासंध उपतस्थे यथाविधि ॥ १०७
उवाच चैतान्राजासौ स्वागतं वोऽस्त्विति प्रभुः ।
मौनमासीत्तदा पार्थभीमयोर्जनमेजय ॥ १०८
तेषां मध्ये महाबुद्धिः कृष्णो वचनमब्रवीत् ।
वक्तुं नायाति राजेंद्र एतयोर्नियमस्तथा ॥ १०९
तानुवाच जरासंधः सत्यसंधो नराधिपः ।
विगर्हमाणः कौरव्य वेशग्रहणवैकृतान् ॥ ११०
न स्नातकव्रता विप्रा बहिर्माल्यानुलेपनाः ।
भवंतीति नृलोकेस्मिन्विदितं मम सर्वशः ॥ १११
के यूयं पुष्पवतश्च भुजैर्ज्याकृतलक्षणैः ।
बिभ्रतः क्षात्रमोजश्च ब्राह्मण्यं प्रतिजानथ ॥ ११२
चैत्यकस्य गिरेः शृंगं भित्वा किमिह छद्मना ।
अद्वारेण प्रविष्टाः स्थ निर्भया राजकिल्बिषात् ॥ ११३
एवं च मामुपास्थाय कस्माच्च विधिनार्हणाम् ।
प्रणीतान्नानुगृह्णीत कार्यं किंवास्मदागमे ॥ ११४
श्रीकृ० उ—स्नातकान्ब्राह्मणान्राजन्विद्ध्यस्मांस्त्वं नराधिप ।
पुष्पवत्सु ध्रुवा श्रीश्च पुष्पवतस्ततो वयम् ॥ ११५
स्ववीर्यं क्षत्रियाणां तु बाह्वोर्धाता न्यवेशयत् ।
तद्दिदृक्षसि चेद्राजन्द्रष्टास्यद्य न संशयः ॥ ११६
अद्वारेण रिपोर्गेहं द्वारेण सुहृदो गृहान् ।
प्रविशंति नरा धीरा द्वाराण्येतानि धर्मतः ॥ ११७
कार्यवंतो गृहानेत्य शत्रुतो नार्हणां वयम् ।
प्रतिगृह्णीम तद्विद्धि एतन्नः शाश्वतं व्रतम् ॥ ११८
जरा० उ०—न स्मरामि कदा वैरं कृतं युष्माभिरित्युत ।
अरिं वै ब्रूत हे विप्राः सतां समय एष हि ॥ ११९

योऽनागसि प्रसजति क्षत्रियो हि न संशयः ।
वृजिनां गतिमाप्नोति श्रेयसोप्युपहन्ति च ॥ १२०
त्रैलोक्ये क्षत्रधर्मा हि श्रेयान्वै साधुचारिणाम् ।
नान्यं धर्मं प्रशंसन्ति ये च धर्मविदो जनाः ॥ १२१
तस्य मेद्य स्थितस्येह स्वधर्मनियतात्मनः ।
अनागतः प्रजानां च प्रमादादिव जल्पथ ॥ १२२
श्रीकृ० उ०—कुलकार्यं महाबाहो कश्चिदेकः कुलोद्वहः ।
वहते यस्तन्नियोगाद्वयमभ्युद्यतास्त्वयि ॥ १२३
त्वया चोपहृता राजन् क्षत्रिया लोकवासिनः ।
तदागः क्रूरमुत्पाद्य मन्यसे किमनागसम् ॥ १२४
राजा राज्ञः कथं साधून् हिंस्यान्नृपतिसत्तम ।
तद्राज्ञः संनिगृह्य त्वं रुद्रायोपजिहीर्षसि ॥ १२५
अस्मांस्तदेनो गच्छेद्धि कृतं बार्हद्रथ त्वया ।
वयं हि शक्ता धर्मस्य रक्षणे धर्मचारिणः ॥ १२६
मनुष्याणां समालम्भो न च दृष्टः कथंचन ।
स कथं मानुषैर्देवं यष्टुमिच्छसि शंकरम् ॥ १२७
ते त्वां ज्ञातिक्षयकरं वयमार्तानुसारिणः ।
ज्ञातिवृद्धिनिमित्तार्थं विनिहन्तुमिहागताः ॥ १२८
युयुक्षमाणास्त्वत्तो हि न वयं ब्राह्मणा ध्रुवम् ।
शौरिरस्मि हृषीकेशो नृवीरो पांडवाविमौ ॥ १२९
त्वामाह्वयामहे राजन् स्थिरो युद्ध्यस्व मागध ।
मुंच वा नृपतीन् सर्वान्गच्छ वा त्वं यमक्षयम् ॥ १३०
त्रयाणां केन ते राजन् योद्धुमुत्सहते मनः ।
अस्मादन्यतमेनेह सज्जीभवतु को युधि ॥ १३१
वै० उ०—एवमुक्तः स नृपतिर्युद्धं वव्रे महाद्युतिः ।
जरासंधस्ततो राजा भीमसेनेन मागधः ॥ १३२
आदाय रोचनां माल्यं मंगल्यान्यपराणि च ।
धारयन्नगदान्मुख्यान्निर्वृतीर्वेदनानि च ॥ १३३
उपतस्थे जरासंधं युयुत्सुं वै पुरोहितः ।
कृतस्वस्त्ययनो राजा ब्राह्मणेन यशस्विना ।
समनह्यज्जरासंधः क्षात्रं धर्ममनुस्मरन् ॥ १३४

अवमुच्य किरीटं स केशान्समनुगृह्य च ।
उदतिष्ठज्जरासंधो वेलातिग इवार्णवः ॥ १३५
उवाच मतिमान् राजा भीमं भीमपराक्रमम् ।
भीम योत्स्ये त्वया सार्धं श्रेयसा निर्जितं वरम् ॥ १३६
ततस्ते नरशार्दूलौ बाहुशस्त्रौ समीयतुः ।
करग्रहणपूर्वं तु कृत्वा पादाभिवंदनम् ॥ १३७
कक्षैः कक्षा विधुन्वानावास्फोटं तत्र चक्रतुः ।
स्कंधे दोर्भ्यां समाहत्य च निहत्य च मुहुर्मुहुः ॥ १३८
अगमगैः समाश्लिष्य पुनरास्फालनं विभो ।
चित्रहस्तादिकं कृत्वा कक्षाबद्धं च चक्रतुः ॥ १३९
बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ ।
उरोहस्तं ततश्चक्रे पूर्णकुंभौ प्रयुज्य तौ ॥ १४०
सर्वातिक्रांतमर्यादं पृष्ठभंगं च चक्रतु· ॥
संपूर्णमूर्च्छां बाहुभ्यां पूर्णकुंभं प्रचक्रतुः ॥ १४१
तृणपीडं कथाकामं पूर्णयोगं समुष्टिकम् ।
एवमादीनि युद्धानि प्रकुर्वंतौ परस्परम् ॥ १४२
तयोर्युद्धं ततो द्रष्टुं समेताः पुरवासिनः ।
ब्राह्मणा वणिजश्चैव क्षत्रियाश्च सहस्रशः ॥ १४३
तयोरथ भुजाघातान्निग्रहात्प्रग्रहात्तथा ।
आसीत्सुभीमः संपातो वज्रपर्वतयोरिव ॥ १४४
कार्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि ।
अनाहारं दिवारात्रमविश्रांतमवर्तत ॥ १४५
चतुर्दश्यां निशायां तु निवृत्तो मागधः क्लमात् ॥ १४६
तं राजानं तथा क्लांतं दृष्ट्वा राजन् जनार्दनः ।
उवाच भीमकर्माणं भीमं संबोधयन्निव ॥ १४७
क्लांतः शत्रुर्न कौंतेय लभ्यः पीडयितुं रणे ।
पीड्यमानो हि कार्त्स्न्येन जह्याज्जीवितमात्मन ॥ १४८
एवमुक्तः स कृष्णेन पांडवः परवीरहा ।
जरासंधस्य तद्रूपं ज्ञात्वा चक्रे मतिं वधे ॥ १४९
उत्क्षिप्य भ्रामयामास बलवंतं महाबलः ।
भ्रामयित्वा शतगुणं जानुभ्यां भरतर्षभ ॥ १५०

बभञ्ज पृष्ठं संक्षिप्य निष्पिष्य विननाद च ।
करे गृहीत्वा चरणं द्वेधा चक्रे महाबलः ॥ १५१
तस्य निष्पिष्यमाणस्य पांडवस्य च गर्जतः ।
अभवत्तुमुलो नादः सर्वप्राणिभयंकरः ।
वित्रेसुर्मागधाः सर्वे स्त्रीणां गर्भाश्च सुस्रुवुः ॥ १५२
ततो राज्ञः कुलद्वारि प्रसुप्तमिव तं नृपम् ।
रात्रौ गतासुमुत्सृज्य निश्चक्रमुररिंदमाः ॥ १५३
जरासंधरथं कृष्णो योजयित्वा पताकिनम् ।
आरोप्य भ्रातरौ चैव मोक्षयामास बान्धवान् ॥ १५४
इंद्रप्रस्थमुपागम्य पांडवाभ्यां सहाच्युतः ॥
धर्मराजमनुज्ञाप्य प्रययौ स्वां पुरीं प्रति ॥ १५५

---

## ५

स० उ०—पार्थः प्राप्य धनुः श्रेष्ठमक्षय्यौ च तथेषुधी ।
विजयायाथ प्रययौ करस्याहरणाय च ॥ १५६
तथैव भीमसेनोपि यमौ च पुरुषर्षभौ ।
ससैन्याः प्रययुः सर्वे धर्मराजेन पूजिताः ॥ १५७
दिशं धनपतेरिष्टामजयत्पाकशासनिः ।
भीमसेनस्तथा प्राचीं सहदेवस्तु दक्षिणाम् ।
प्रतीचीं नकुलो राजन् दिशं व्यजयतास्त्रवित् ॥ १५८
खाण्डवप्रस्थमध्यस्थो धर्मराजो युधिष्ठिरः ।
आसीत्परमया लक्ष्म्या सुहृद्गणवृतः प्रभुः ॥ १५९
रक्षणाद्धर्मराजस्य सत्यस्य परिपालनात् ।
शत्रूणां क्षपणाच्चैव स्वधर्मनिरताः प्रजाः ॥ १६०
बलीनां सम्यगादानाद्धर्मतश्चानुशासनात् ।
निकामवर्षी पर्जन्यः स्फीतो जनपदोऽभवत् ॥ १६१
सर्वारंभाः सुप्रवृत्ता गोरक्षाकर्षणं वणिक् ।
विशेषात्सर्वमेवैतत्संजज्ञे राजकर्मणा ॥ १६२
अवर्षं चातिवर्षं च व्याधिपावकमूर्च्छनम् ।
सर्वमेतत्तदा नासीद्धर्मनित्ये युधिष्ठिरे ॥ १६३

स्वकोष्टस्य परीमाणं कोशस्य च महीपति ।
विज्ञाय राजा कौंतेयो यज्ञायैव मनो दधे ॥ १६४
उच्चावचमुपादाय धर्मराजाय माधवः ।
धनौघं पुरुषव्याघ्रः प्रविवेश पुरोत्तमम् ॥ १६५
असूर्यमिव सूर्येण निवातमिव वायुना ।
कृष्णेन समुपेतेन जहृषे भारतं पुरम् ॥ १६६
श्रीकृ० उ०—यजस्वाभीप्सितं यज्ञं मयि श्रेयस्यवस्थिते ।
नियुंक्ष्व त्व च मां कृत्ये सर्वं कर्तास्मि ते वचः ॥ १६७
ततो द्वैपायनो राजन्नृत्विजः समुपानयत् ।
वेदानिव महाभागान् साक्षान्मूर्तिमतो द्विजान् ॥ १६८
स्वयं ब्रह्मत्वमकरोत्तस्य सत्यवतीसुतः ॥
धनंजयानामृषभः सुसामा सामगोऽभवत् ॥ १६९
याज्ञवल्क्यो बभूवाथ ब्रह्मिष्ठोऽध्वर्युसत्तमः ।
पैलो होता वसो. पुत्रो धौम्येन सहितोऽभवत् ॥ १७०
ते वाचयित्वा पुण्याहं कल्पयित्वा च त विधिम् ।
शास्त्रोक्तं पूजयामासुस्तद्देवयजनं महत् ॥ १७१
तत्र चक्रुरनुज्ञाताः शरणान्युत शिल्पिनः ।
गंधवंति विशालानि वेश्मानीव दिवौकसाम् ॥ १७२
ततस्ते तु यथाकालं कुंतीपुत्रं युधिष्ठिरम् ।
दीक्षयांचक्रिरे विप्रा राजसूयाय भारत ॥ १७३
दीक्षितः स तु धर्मात्मा धर्मराजो युधिष्ठिर ।
जगाम यज्ञायतनं वृतो विप्रैः सहस्रश. ॥ १७४
समाज्ञप्तास्ततो दूताः पांडवेयस्य शासनात् ।
आमंत्रयंत राष्ट्रेषु ब्राह्मणान् भूमिपानपि ॥ १७५
विशश्च मान्यान् शूद्रांश्च आनयंश्चापरानपि ॥ १७६
नकुलश्चापि धर्मस्य शासनात्समितिंजय ।
भीष्ममामंत्रयांचक्रे धृतराष्ट्रं च बांधवान् ॥ १७७
द्रष्टुकामाः सभां चैव धर्मराज महाक्रतुम् ।
दिग्भ्यः सर्वे समापेतुः क्षत्रियाश्च तथापरे ॥ १७८
समुपादाय रत्नानि विविधानि महांति च ।
धृतराष्ट्रश्च भीष्मश्च विदुरश्चापि बांधवा ॥ १७९

सत्कृताश्च यथोद्दिष्टाञ् जग्मुरावसथान्नृपाः ।
कैलासशिखरप्रख्यान् मनोज्ञान् द्रव्यभूषितान् ॥ १८०
सर्वतः सुकृतानुच्चैः प्रकारैः सुकृतैः सितैः ।
सुवर्णजालसंवीतान् मणिकुट्टिमभूषितान् ॥ १८१
सुखारोहणसोपानान् महासनपरिच्छदान् ।
स्रग्दामसमवच्छन्नानुत्तमागरुगंधिनः ॥ १८२
हंसेंदुवर्णसदृशानायोजनसुदर्शनान् ।
असंबाधान् समद्वारान् युतानुच्चावचैर्गुणैः ॥ १८३
पितामहं गुरुं चैव प्रत्युद्गम्य युधिष्ठिरः ।
अभिवाद्य ततो राजन्निदं वचनमब्रवीत् ।
भीष्मं द्रोणं कृपं द्रौणिं दुर्योधनविविंशती ॥ १८४
अस्मिन्यज्ञे भवंतो मामनुगृह्णंतु सर्वशः ।
इदं वः सुमहच्चैव यदिहास्ति धनं मम ॥ १८५
एवमुक्तः स तान् सर्वान् दीक्षितः पांडवाग्रजः ।
युयोज स यथायोग्यमधिकारेष्वनंतरम् ॥ १८६
भक्ष्यभोज्याधिकारेषु दुःशासनमयोजयत् ।
परिग्रहे ब्राह्मणानामश्वत्थामानमुक्तवान् ॥ १८७
राज्ञस्तु प्रतिपूजार्थं संजयं स न्ययोजयत् ।
कृताकृतपरिज्ञाने भीष्मद्रोणौ महामती ॥ १८८
हिरण्यस्य सुवर्णस्य रत्नानां चान्ववेक्षणे ।
दक्षिणानां च वै दाने कृपं राजा न्ययोजयत् ॥ १८९
क्षत्ता व्ययकरस्त्वासीद्विदुरः सर्वधर्मवित् ॥
दुर्योधनस्त्वर्हणानि प्रतिजग्राह सर्वशः ॥ १९०
चरणक्षालने कृष्णो ब्राह्मणानां स्वयं ह्यभूत् ।
सर्वलोकसमावृत्तः पिप्रीषुः फलमुत्तमम् ॥ १९१
राजभिश्च समावृत्तैरतीवश्रीसमृद्धिभिः ।
अशोभत सदो राजन् कौंतेयस्य महात्मनः ॥ १९२
षडग्निनाऽथ यज्ञेन सोऽयजद्दक्षिणावता ।
सर्वाञ् जनान् सर्वकामैः समृद्धैः समतर्पयत् ॥ १९३
अन्नवान् बहुभक्ष्यश्च भुक्तवज्जनसंवृतः ।
रत्नोपहारसंपन्नो बभूव स समागमः ॥ १९४

इडाज्यहोमाहुतिभिर्मंत्रशिक्षाविशारदैः ।
तस्मिन् हि ततृपुर्देवास्ततो यज्ञे महर्षिभिः ॥ १५५
यथा देवास्तथा विप्रा दक्षिणान्नमहाधनैः ।
ततृपुः सर्ववर्णाश्च तस्मिन् यज्ञे मुदान्विताः ॥ १५६

---

## ६

वै० उ०—ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह ।
अंतर्वेदीं प्रविविशुः सत्कारार्हा महर्षयः ॥ १५७
ततो भीष्मोऽब्रवीद् राजन् धर्मराजं युधिष्ठिरम् ।
क्रियतामर्हणं राज्ञां यथार्हमिति भारत ॥ १५८
युधि०उ०—कस्मै भवान् मन्यतेऽर्घमेकस्मै कुरुनंदन ।
उपनीयमानं युक्तं च तन्मे ब्रूहि पितामह ॥ १५९
वैशं० उ०—ततो भीष्मः शांतनवो बुद्ध्या निश्चित्य वीर्यवान् ।
वार्ष्णेयं मन्यते कृष्णं पूजनीयतमं भुवि ॥ २००
तस्मै भीष्माभ्यनुज्ञातः सहदेवः प्रतापवान् ।
उपजह्रेऽथ विधिवद्वार्ष्णेयायार्घमुत्तमम् ॥ २०१
प्रतिजग्राह तत्कृष्णः शास्त्रदृष्टेन कर्मणा ।
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥ २०२
स उपालभ्य भीष्मं च धर्मराजं च संसदि ।
अथाक्षिपद्वासुदेवं चेदिराजो महाबलः ॥ २०३
शिशु० उ०—नायमर्हति वार्ष्णेयस्तिष्ठत्स्विह महात्मसु ।
महीपतिषु कौरव्य राजवत्पार्थिवार्हणाम् ॥ २०४
बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पांडवाः ।
अयं च स्मृत्यतिक्रांतो ह्यापगेयोऽल्पदर्शनः ॥ २०५
त्वादृशो धर्मयुक्तो हि कुर्वाणः प्रियकाम्यया ।
भवत्यभ्यधिकं भीष्म लोकेष्ववमतः सताम् ॥ २०६
अथवा मन्यसे कृष्णं स्थविरं कुरुपुंगव ।
वसुदेवे स्थिते वृद्धे कथमर्हति तत्सुतः ॥ २०७
आचार्यं मन्यसे कृष्णमथवा कुरुनंदन ।
द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि ॥ २०८

ऋत्विजं मन्यसे कृष्णमथवा कुरुनंदन ।
द्वैपायने स्थिते वृद्धे कथ कृष्णोऽर्चितस्त्वया ॥ २०९
दुर्योधने च राजेंद्रे स्थिते पुरुषसत्तमे ।
कृपे च भारताचार्ये कथं कृष्णस्त्वयार्चितः ॥ २१०
भीष्मके च दुराधर्षे पांड्ये च कृतलक्षणे ।
नृपे च रुक्मिणि श्रेष्ठे एकलव्ये तथैव च ॥ २११
शल्ये मद्राधिपे चैव कथं कृष्णस्त्वयार्चितः ॥ २१२
नैवर्त्विङ्नैव चाचार्यो न राजा मधुसूदनः ।
अर्चितश्च कुरुश्रेष्ठ किमन्यत्प्रियकाम्यया ॥ २१३
अथवाभ्यर्चनीयोयं युष्माकं मधुसूदनः ।
किं राजभिरिहानीतैरवमानाय भारत ॥ २१४
वयं तु न भयादस्य कौंतेयस्य महात्मनः ।
प्रयच्छामः करान्सर्वे न लोभान्न च सात्वनात् ॥ २१५
अस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
करानस्मै प्रयच्छाम' सोयमस्मान्न मन्यते ॥ २१६
अथवा कृपणैरेतामुपनीतां जनार्दन ।
पूजामनर्ह' कस्मात्त्वमभ्यनुज्ञातवानसि ॥ २१७
क्लीबे दारक्रिया यादृगन्धे वा रूपदर्शनम् ।
अराज्ञो राजवत्पूजा तथा ते मधुसूदन ॥ २१८
दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः ।
वासुदेवोप्ययं दृष्टः सर्वमेतद्यथातथम् ॥ २१९
भीष्म० उ०—क्षत्रियः क्षत्रियं जित्वा रणे रणकृता वर ।
यो मुंचति वशे कृत्वा गुरुर्भवति तस्य सः ॥ २२०
अस्या हि समितौ राज्ञामेकमप्यजित युधि ।
न पश्यामि महीपाल सात्वतीपुत्रतेजसा ॥ २२१
न हि केवलमस्माकमयमर्च्यतमोऽच्युतः ।
त्रयाणामपि लोकानामर्चनीयो महाभुजः ॥ २२२
ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः ।
वैश्यानां धान्यधनवान् शूद्राणामेव जन्मतः ॥ २२३
पूज्यतायाश्च गोविंदे हेतू द्वावपि संस्थितौ ।
वेदवेदांगविज्ञानं बलं चाभ्यधिकं तथा ॥ २२४

तमिमं सत्वसंपन्नमाचार्यं पितरं गुरुम् ।
अर्घ्यमर्चितमर्चार्हं सर्वे संक्षंतुमर्हथ ॥ २२५
अयं तु पुरुषो बालः शिशुपालो न बुध्यते ।
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते ॥ २२६
शि० उ०—विभीषिकाभिर्बह्वीभिर्भीषयन्सर्वपार्थिवान् ।
न व्यपत्रपसे कस्माद्वृद्धः सन्कुलपांसनः ॥ २२७
नावि नौरिव संबद्धा यथांधो वान्धमन्वियात् ।
तथाभूता हि कौरव्या येषां भीष्म त्वमग्रणीः ॥ २२८
अवलिप्तस्य मूर्खस्य केशवं स्तोतुमिच्छतः ।
कथं भीष्म न ते जिह्वा शतधेयं विदीर्यते ॥ २२९
न ते श्रुतमिदं भीष्म नूनं कथयतां सताम् ।
यद्वक्ष्ये त्वामधर्मज्ञ वाक्यं कुरुकुलाधम ॥ २३०
स्त्रीषु गोषु न शस्त्राणि पातयेद्ब्राह्मणेषु च ।
यस्य चान्नानि भुंजीत यत्र च स्यात्प्रतिश्रयः ॥ २३१
गोघ्नः स्त्रीघ्नश्च सन् भीष्म त्वद्वाक्याद्यदि पूज्यते ।
एवंभूतश्च यो भीष्म कथं स स्तवमर्हति ॥ २३२
असौ मतिमतां श्रेष्ठ य एष जगतः प्रभुः ।
जनार्दनः सर्वमिति तत्सर्वं वितथं ध्रुवम् ॥ २३३
न गाथा गाथिनं शास्ति बहु चेदपि गायति ।
प्रकृतिं याति भूतानि भूलिंगशकुनिर्यथा ।
मा साहसमितीदं सा सततं वाशते किल ॥ २३४
गाथामप्यत्र गायंति ये पुराणविदो जनाः ।
अंतरात्मन्यभिहते रौपि पत्ररथाशुचि ।
अंडभक्षणकर्मैतत्तव वाचमतीयते ॥ २३५
ते त्वां हंससधर्माणमपीमे वसुधाधिपाः ।
निहन्युर्भीष्म संक्रुद्धाः पक्षिणस्तं यथांडजम् ॥
इच्छतां भूमिपालाना भीष्म जीवस्यसंशयम् ॥ २३६
भी० उ०—इच्छतां किल नामाहं जीवाम्येषां महीक्षिताम् ।
सोहं न गणयाम्येतांस्तृणेनापि नराधिपान् ॥ २३७
एवमुक्ते तु भीष्मेण ततः संचुक्रुशुर्नृपाः ।
केचिज्जहृषिरे तत्र केचिद्भीष्मं जगर्हिरे ॥ २३८

केचिदूचुर्महेष्वासाः श्रुत्वा भीष्मस्य तद्वचः ।
पापोऽवलिप्तो वृद्धश्च नायं भीष्मोऽर्हति क्षमाम् ॥ २३९
हन्यतां दुर्मतिर्भीष्मः पशुवत्साध्वयं नृपाः ।
सर्वैः समेत्य संरब्धो दह्यतां वा कटाग्निना ॥ २४०

भी० उ०—उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये ।
पशुवद्घातनं वा मे दहनं वा कटाग्निना ।
क्रियतां मूर्ध्नि वो न्यस्तं मयेदं सकलं पदम् ॥ २४१
एष तिष्ठति गोविंदः पूजितोऽस्माभिरच्युतः ।
यस्य वा त्वरते बुद्धिर्मरणाय स माधवम् ।
कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम् ॥ २४२

शि० उ०—आह्वये त्वां रणं गच्छ मया सार्द्धं जनार्दन ।
यावदद्य निहन्मि त्वा सहितं सर्वपाडवैः ॥ २४३

कृ० उ०—शृण्वन्तु मे महीपाला येनैतत्क्षमितं मया ।
अपराधशतं क्षाम्यं मातुरस्यैव याचने ॥ २४४
दत्तं मया याचितं च तद्वै पूर्णं हि पार्थिवाः ।
अधुना मारयिष्यामि पश्यतां वो महीक्षिताम् ॥ २४५

व० उ—एवमुक्त्वा यदुश्रेष्ठश्चेदिराजस्य तत्क्षणात् ।
अपाहरच्छिरः क्रुद्धश्चक्रेणामित्रकर्षण. ॥ २४६
अनभ्रे प्रववर्ष द्यौ. पपात ज्वलिताशनिः ।
कृष्णेन निहते चैद्ये चचाल च वसुंधरा ॥ २४७
ततः केचिन्महीपाला नाब्रुवस्तत्र किंचन ।
अतीतवाक्पथे काले प्रेक्षमाणा जनार्दनम् ॥ २४८
हस्तैर्हस्ताग्रमपरे प्रत्यपिषन्नमर्षिताः ।
अपरे दशनैरोष्ठानदशन् क्रोधमूर्च्छिताः ॥ २४९
रहश्च केचिद्वार्ष्णेयं प्रशशंसुर्जनाधिपम् ।
प्रहृष्टाः केशवं जग्मु संस्तुवंतो महर्षयः ॥ २५०

---

७.

ततस्त्ववभृथस्नातं धर्मात्मानं युधिष्ठिरम् ।
समस्त पार्थिवं क्षत्रमुपागम्येदमब्रवीत् ॥ २५१

दिष्ट्या वर्धसि धर्मज्ञ साम्राज्यं प्राप्तवानसि ।
आपृच्छामो नरव्याघ्र सर्वैः कामैः सुपूजिता ॥ २५२
वसन् दुर्योधनस्तस्यां सभायां पुरुषर्षभ ।
शनैर्ददर्श तां सर्वां सभां शकुनिना सह ॥ २५३
तस्यां दिव्यानाभिप्रायान् ददर्श कुरुनंदनः ।
न दृष्टपूर्वा ये तेन नगरे नागसाह्वये ॥ २५४
स कदाचित् सभामध्ये धार्तराष्ट्रो महीपतिः ।
स्फाटिकं स्थलमासाद्य जलमित्यभिशंकया ॥ २५५
स्ववस्त्रोत्कर्षणं राजा कृतवान् बुद्धिमोहितः ।
ततः स्थले निपतितो दुर्मना व्रीडितो नृप ॥ २५६
ततः स्फाटिकतोयां वै स्फाटिकांबुजशोभिताम् ।
वापी मत्वा स्थलमिव सवासाः प्रापतज्जले ॥ २५७
जले निपतितं दृष्ट्वा भीमसेनो महाबलः ।
जहास जहसुश्चैव किंकराश्च सुयोधनम् ।
नामर्षयत् ततस्तेषामवहासममर्षण ॥ २५८
अनेकाग्रं तु तं दृष्ट्वा शकुनि प्रत्यभाषत ।
दुर्योधन कुतोऽमूलं निःश्वसन्निव गच्छसि ॥ २५९
दुर्यो० उ०—दृष्ट्वेमां पृथिवीं कृत्स्ना युधिष्ठिरवशानुगाम् ।
त च यज्ञं यथाभूतं दृष्ट्वा पार्थस्य मातुल ।
शुचिशुक्रागमे काले शुष्ये तोयमिवाल्पकम् ॥ २६०
पश्य सात्वतमुख्येन शिशुपालो निपातित ।
न च तत्र पुमानासीत् कश्चित्तस्य पदानुग ॥ २६१
दह्यमाना हि राजानः पांडवोत्थेन वह्निना ।
क्षातवतोऽपराधं ते को हि तत् क्षंतुमर्हति ॥ २६२
सोऽहं श्रिय च तां दृष्ट्वा सभां तां च तथविधाम् ।
रक्षिभिश्चावहासं त परितप्ये यथाग्निना ॥ २६३
शकु० उ०—धनंजयो वासुदेवो भीमसेनो युधिष्ठिर ।
नकुलः सहदेवश्च द्रुपदश्च सहात्मजैः ॥ २६४
नैते युधि पराजेतु शक्या देवगणैरपि ॥ २६५
अहं तु तद्विजानामि विजेतुं येन शक्यते ।
द्यूतप्रियो हि कौंतेयो न स जानाति देवितुम् ॥ २६६

समाहूतश्च राजेंद्रो न शक्ष्यति निवर्तितुम् ।
देवेन कुशलश्चाहं न मेऽस्ति सदृशो भुवि ॥ २६७
तस्याक्षकुशलो राजन्नादास्येऽहमसंशयम् ।
राज्यं श्रियं च तां दीप्तां त्वदर्थं पुरुषर्षभ ॥ २६८
इदं तु सर्वं त्वं राज्ञे दुर्योधन निवेदय ।
अनुज्ञातस्तु ते पित्रा विजेष्ये तान्न संशयः ॥ २६९
एवमुक्तः शकुनिना राजा दुर्योधनस्तदा ।
धृतराष्ट्रमिदं वाक्यमपदान्तरमब्रवीत् ॥ २७०
दुर्यो० उ०—अश्नाम्याच्छादये चाहं यथा कुपुरुषस्तथा ।
अमर्षं धारये चोग्रं निनीषु कालपर्ययम् ।
तस्मादहं विवर्णश्च दीनश्च हरिणः कृशः ॥ २७१
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान् बिभर्ति युधिष्ठिरः ॥ २७२
दशान्यानि सहस्राणि नित्यं तत्रान्नमुत्तमम् ।
भुंजते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥ २७३
कदलीमृगमोकानि कृष्णश्यामारुणानि च ।
काम्बोजः प्राहिणोत् तस्मै परार्ध्यानपि कंबलान् ॥ २७४
पृथग्विधानि रत्नानि पार्थिवाः पृथिवीपते ।
आहरन् क्रतुमुख्येऽस्मिन् कुंतिपुत्राय भूरिशः ॥ २७५
पूर्णे शतसहस्रे तु विप्राणां परिवेष्यताम् ।
स्थापिता तत्र संज्ञा भूच्छंखो ध्मायति नित्यशः २७६
मुहुर्मुहुः प्रणदतस्तस्य शंखस्य भारत ।
अनिशं शब्दमश्रौषं ततो रोमाणि मेऽहृषन् ॥ २७७
अयमुत्सहते राजन् श्रियमाहर्तुमक्षवित् ।
द्यूतेन पांडुपुत्रस्य तदनुज्ञातुमर्हसि ॥ २७८
धृत० उ०—क्षत्ता मंत्री महाप्राज्ञः स्थितो यस्यास्मि शासने ।
तेन संगम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम् ॥ २७९
दु० उ०—निवर्तयिष्यति त्वासौ यदि क्षत्ता समेष्यति ।
निवृत्ते त्वयि राजेंद्र मरिष्येऽहमसंशयम् ॥ २८०
स त्वं मयि मृते राजन् विदुरेण सुखी भव ।
भोक्ष्यसे पृथिवीं कृत्स्नां किं मया त्वं करिष्यसि ॥ २८१

वैशं० उ०—आर्तवाक्य तु तत् तस्य प्रणयोक्तं निशम्य सः ।
धृतराष्ट्रोऽब्रवीत् प्रेष्यान् दुर्योधनमते स्थितः ॥ २८२
स्थूणासहस्रैर्बृहतीं शतद्वारां सभां मम ।
मनोरमां दर्शनीयामाशु कुर्वंतु शिल्पिनः ॥ २८३
ततः संस्तीर्य रत्नैस्ता तक्ष्ण आनाय्य सर्वशः ।
सुकृतां सुप्रवेशां च निवेदयत मे शनैः ॥ २८४
तच्छ्रुत्वा विदुरो धीमान् कलिद्वारमुपस्थितम् ।
विनाशमुखमुत्पन्नं धृतराष्ट्रमुपाद्रवत् ॥ २८५
सोऽभिगम्य महात्मानं भ्राता भ्रातरमग्रजम् ।
मूर्ध्ना प्रणम्य चरणाविद वचनमब्रवीत् ॥ २८६
वि० उ०—नाभिनंदामि ते राजन् व्यवसायमिम प्रभो ।
पुत्रैर्भेदो यथा न स्यात् द्यूतहेतोस्तथा कुरु ॥ २८७
धृत० उ०—क्षत्तः पुत्रेषु पुत्रैर्मे कलहो न भविष्यति ।
यदि देवाः प्रसादं न करिष्यंति न संशयः ॥ २८८
अशुभं वा शुभं वापि हित वा यदि वाऽहितम् ।
प्रवर्तता सुहृद्द्यूतं दिष्टमेतन्न सशयः ॥ २८९
मयि सन्निहिते द्रोणे भीष्मे त्वयि च भारत ।
अनयो दैवविहितो न कथंचिद्भविष्यति ॥ २९०
गच्छ त्वं रथमास्थाय हयैर्वातसमैर्जवे ।
खाडवप्रस्थमद्यैव समानय युधिष्ठिरम् ॥ २९१
न वाच्यो व्यवसायो मे विदुरैतद ब्रवीमि ते ।
दैवमेव पर मन्ये येनैतदुपपद्यते ॥ २९२

---

## ८.

वै० उ०—ततः प्रायाद्विदुरोऽश्वैरुदारैर्महाजवैर्बलिभिः साधुदातैः ।
बलान्नियुक्तो धृतराष्ट्रेण राज्ञा मनीषिणा पांडवाना सकाशे ॥ २९३
सोऽभिपत्य तमध्वानमासाद्य नृपतेः पुरम् ।
अभ्यागच्छत धर्मात्मा धर्मपुत्रं युधिष्ठिरम् ॥ २९४ ॥
वि० उ०—राजा महात्मा कुशली सपुत्र आस्ते वृतो ज्ञातिभिरिद्रकल्पः ।
इदं तु त्वां कुरुराजोऽभ्युवाच पूर्वं पृष्ट्वा कुशलं चाव्यय च ॥ २९५ ॥

इयं सभा त्वत्सभातुल्यरूपा भ्रातॄणां ते दृश्यतामेत्य पुत्र ।
समागम्य भ्रातृभिः पार्थ तस्या सुहृद्द्यूतं क्रियतां रम्यतां च ॥ २९६
जानाम्यहं द्यूतमनर्थमूलं कृतश्च यत्नोऽस्य मया निवारणे ।
राजा च मां प्राहिणोत्त्वत्सकाश श्रुत्वा विद्वन् श्रेय इहाचरस्व ॥ २९७
यु० उ०—महाभयाः कितवाः सन्निविष्टा मायोपधा देवितारोऽत्र संति ।
धात्रा तु दिष्टस्य वशे किलेदं सर्वं जगत्तिष्ठति न स्वतन्त्रम् ॥ २९८
न चाकामः शकुनिना देविताहं न चेन्मां धृष्ट आह्वयिता सभायां ।
आहूतोऽहं न निवर्ते कदाचित्तदाहितं शाश्वतं वै व्रतं मे ॥ २९९
वै० उ०—एवमुक्त्वा विदुरं धर्मराज प्रायात्रिकं सर्वमाज्ञाप्य तूर्णम् ।
प्रायाच्छ्वोभूते सगणः सानुयात्रः सह स्त्रीभिर्द्रौपदीमादिकृत्वा ॥ ३००
दैवं हि प्रज्ञां मुष्णाति चक्षुस्तेज इवापतत् ।
धातुश्च वशमन्वेति पाशैरिव नरः सितः ॥ ३०१
इत्युक्त्वा प्रययौ राजा सह क्षत्रा युधिष्ठिरः ॥ ३०२
स हास्तिनपुरं गत्वा धृतराष्ट्रगृहं ययौ ।
समियाय च धर्मात्मा धृतराष्ट्रेण पाण्डवः ॥ ३०३
ततस्ते पुरुषव्याघ्रा गत्वा स्त्रीभिस्तु संविदम् ।
कृत्वा व्यायामपूर्वाणि कृत्यानि प्रतिकर्म च ॥ ३०४
सुखोषितास्ते रजनीं प्रातः सर्वे कृताह्निकाः ।
सभां रम्यां प्रविविशुः कितवैरभिनन्दिताः ॥ ३०५
तेषु तत्रोपविष्टेषु सर्वेष्वथ नृपेषु च ।
शकुनिः सौबलस्तत्र युधिष्ठिरमभाषत ॥ ३०६
श० उ०—उपास्तीर्णा सभा राजन् सर्वे त्वयि कृतक्षणाः ।
अक्षानुप्त्वा देवनस्य समयोऽस्तु युधिष्ठिर ॥ ३०७
यु० उ०—निकृतिर्देवनं पापं न क्षात्रोऽत्र पराक्रमः ।
न च नीतिर्ध्रुवा राजन् किं त्वं द्यूतं प्रशंससि ॥ ३०८
न हि मानं प्रशंसंति निकृतौ कितवस्य हि ।
शकुने मैव नो जैषीरमार्गेण नृशंसवत् ॥ ३०९
नाऽऽर्या म्लेच्छंति भाषाभिर्मायया न चरत्युत ।
अजिह्ममशठं युद्धमेतत्सत्पुरुषव्रतम् ॥ ३१०
श० उ०—श्रोत्रियः श्रोत्रियानेति निकृत्यैव युधिष्ठिर ।
विद्वानविदुषोऽभ्येति नाहुस्ता निकृतिं जनाः ॥ ३११

अक्षैर्हि शिक्षितोऽभ्येति निकृत्यैव युधिष्ठिर ।
अकृतास्त्रं कृतास्त्रश्च दुर्बलं बलवत्तरः ॥ ३१२
एवं कर्मसु सर्वेषु निकृत्यैव युधिष्ठिर ।
विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ॥ ३१३
एव त्वं मामिहाभ्येत्य निकृति यदि मन्यसे ।
देवनाद्विनिवर्तस्व यदि ते विद्यते भयम् ॥ ३१४
युः उ०—आहूतो न निवर्तेयमिति मे व्रतमाहितम् ।
विधिश्च बलवान् राजन् दिष्टस्यास्मि वशे स्थित ॥ ३१५
ततो जग्राह शकुनिस्तानक्षानक्षतत्त्ववित् ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ३१६
वि० उ०—जानीमहे देवितं सौबलस्य वेद द्यूते निकृतिं पार्वतीयः ।
यतः प्राप्तः शकुनिस्तत्र यातु मायूयुधो भारत पांडवेयान् ॥ ३१७
दु० उ०—जानीमहे विदुर यत्प्रियस्त्वं बालानिवास्मानवमन्यसे नित्यमेव ।
स विज्ञेयः पुरुषोऽन्यत्रकामो निंदाप्रशंसे हि तया युनक्ति ॥ ३१८
जिव्हा मनस्ते हृदयं व्यनक्ति ज्यायोऽनरान्मनस. प्रातिकल्यम् ।
उत्सगे च व्याल इवाहितोऽसि मार्जारवत्पोषकं चोपहसि ॥ ३१९
भर्तृघ्नत्वान्नहि पापीयमाहुस्तस्मात क्षत्तः किं न बिभेषि पापात् ।
अमित्रता याति नरोऽक्षम ब्रुवन्निगूहते गुह्यममित्रसस्तवे ।
तदाश्रितोऽपत्रप कि नु बाधसे यदिच्छसि त्व तदिहाभिभाषसे ॥ ३२०
न वासयेत्पारवर्ग्यं द्विषंते विशेषतः क्षत्तरहित मनुष्यम् ।
स यत्रेच्छसि विदुर तत्र गच्छ सुसान्त्विता ह्यसती स्त्री जहाति ॥ ३२१
वि० उ०—लभ्यते खलु पापीयान् नरः सुप्रियवागिह ।
अप्रियस्य हि पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ३२२
आशीविषान्नेत्रविषान् कोपयेन्न च पंडितः ।
एवं तेऽहं वदामीदं प्रयतः कुरुनंदन ॥ ३२३
श० उ०—बहुवित्तं पराजैषीः पांडवानां युधिष्ठिर ।
आचक्ष्व वित्तं कौंतेय यदि तेऽस्त्यपराजितम् ॥ ३२४
यु० उ०—अयुतं प्रयुतं चैव पद्मं खर्वमथार्बुदम् ।
शंखं चैव महापद्मं निखर्वं कोटिरेव च ॥ ३२५
मध्यं चैव परार्धं च सपरं चात्र पण्यताम् ।

एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ॥ ३२६

वै० उ०—एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ३२७

यु० उ०—पुर जनपदो भूमिरब्राह्मणधनैः सह ।
अब्राह्मणाश्च पुरुषा राजन् शिष्टं धन मम ॥ ३२८
एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया ॥ ३२९

वै० उ०—एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ३३०

यु० उ०—राजपुत्रा इमे राजञ्शोभंते यैर्विभूषिताः ।
एतन्मम धन राजंस्तेन दीव्याम्यहं त्वया ॥ ३३१
श्यामो युवा लोहिताक्ष सिंहस्कंधो महाभुजः ।
नकुलो ग्लह एवैको विद्ध्येतन्मम तद्धनम् ॥ ३३२

अथ धर्मान् सहदेवोऽनुशास्ति लोके ह्यस्मिन् पंडिताख्या गतश्च ।
अनर्हता राजपुत्रेण तेन दीव्याम्यहं चाप्रियवत्प्रियेण ॥ ३३३
यो नः संख्ये नौरिव पारनेता जेता रिपूणां राजपुत्रस्तरस्वी ।
अनर्हता लोकवीरेण तेन दीव्याम्यहं शकुने फाल्गुनेन ॥ ३३४
यो नो जेता यो युधि नः प्रणेता यथा वज्री दानवशत्रुरेक· ।
तिर्यक्प्रेक्षी सन्नतभ्रूर्महात्मा सिंहस्कंधो यश्च सदात्यमर्षी ॥ ३३५
बलेन तुल्यो यस्य पुमान्न विद्यते गदाभृतामग्र्य इहारिमर्दनः ।
अनर्हता राजपुत्रेण तेन दीव्याम्यह भीमसेनेन राजन् ॥ ३३६
अह विशिष्टः सर्वेषां भ्रातॄणा दयितस्तथा ।
कुर्यामहं जितः कर्म स्वयमात्मन्युपप्लुते ॥ ३३७

वै० उ०—एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ३३८

श० उ०—अस्ति ते वै प्रिया राजन् ग्लह एकोऽपराजितः ।
पणस्व कृष्णां पांचाली तयात्मानं पुनर्जय ॥ ३३९

यु० उ०—नैव ह्रस्वा न महती न कृशा नापि रोहिणी ।
नीलकुंचितकेशी च तया दीव्याम्यहं त्वया ॥ ३४०
शारदोत्पलपत्राक्ष्या शारदोत्पलगंधया ।
शारदोत्पलसेविन्या रूपेण श्रीसमानया ॥ ३४१

तथैव स्यादानृशंस्यात्तथा स्याद्रूपसंपदा ।
तथा स्याच्छीलसंपत्त्या यामिच्छेत्पुरुषः स्त्रियम् ॥ ३४२
चरमं संविशति या प्रथमं प्रतिबुध्यते ।
आगोपालाविपालेभ्यः सर्ववेद कृताकृतम् ॥ ३४३
तयैवंविधया राजन् पाञ्चाल्याऽहं सुमध्यया ।
ग्लहं दीव्यामि चार्वङ्ग्या द्रौपद्या हंत सौबल ॥ ३४४
वै० उ०—एवमुक्ते तु वचने धर्मराजेन धीमता ।
धिग्धिगित्येव वृद्धानां सभ्यानां निःसृता गिरः ॥ ३४५
चुक्षुभे सा सभा राजन् राज्ञां संजज्ञिरे शुचः ।
भीष्मद्रोणकृपादीनां स्वेदश्च समजायत ॥ ३४६
शिरो गृहीत्वा विदुरो गतसत्व इवाभवत् ।
आस्ते ध्यायन्नधोवक्त्रो निःश्वसन्निव पन्नगः ॥ ३४७
धृतराष्ट्रस्तु संहृष्टः पर्यपृच्छत्पुनः पुनः ।
किं जितं किं जितमिति ह्याकारं नाभ्यरक्षत ॥ ३४८
जहर्ष कर्णोऽतिभृशं सह दुःशासनादिभिः ।
इतरेषां तु सभ्यानां नेत्रेभ्यः प्रापतज्जलम् ॥ ३४९
सौबलस्त्वभिधायैवं जितकाशी मदोत्कटः ।
जितमित्येव तानक्षान्पुनरेवान्वपद्यत ॥ ३५०
दु० उ०—एहि क्षत्तर्द्रौपदीमानयस्व प्रियां भार्यां संमतां पांडवानाम् ।
समार्जतां वेश्म परैतु शीघ्रं तत्रास्तु दासीभिरपुण्यशीला ॥ ३५१
वि० उ०—दुर्विभाषं भाषितं त्वादृशेन न मंद संबुद्ध्यसि पाशबद्धः ।
प्रपाते त्वं लंबमानो न वेत्सि व्याघ्रान्मृगः कोपयसेऽतिवेलम् ॥ ३५२
आशीविषास्ते शिरसि पूर्णकोपा महाविषाः ।
मा कोपिष्ठाः सुमंदात्मन् मा गमस्त्वं यमक्षयम् ॥ ३५३
नहि दासीत्वमापन्ना कृष्णा भवितुमर्हति ।
अनीशेन हि राज्ञैषा पणे न्यस्तेति मे मतिः ॥ ३५४
नारुंतुदः स्यान्न नृशंसवादी न हीनतः परमभ्याददीत ।
समुच्चरंत्यतिवादांश्च वक्त्राद्यैराहतः शोचति राज्यहानि ॥ ३५५
मूढो राजा धृतराष्ट्रस्य पुत्रो न मे वाचः पथ्यरूपाः शृणोति ।
अंतो नूनं भविताय कुरूणां सुदारुणः सर्वहरो विनाशः ॥ ३५६

वै० उ०—धिगस्तु क्षत्तारमिति ब्रुवाणो दर्पेण मत्तो धृतराष्ट्रस्य पुत्रः।
अवैक्षत प्रातिकामीं सभायामुवाच चैनं परमार्यमध्ये ॥ ३५७
त्वं प्रातिकामिन् द्रौपदीमानयस्व न ते भयं विद्यते पांडवेभ्यः।
क्षत्ता ह्ययं विवदत्येव भीतो न चास्माकं वृद्धिकामः सदैव ॥ ३५८
एवमुक्तः प्रातिकामी स सूतः प्रायाच्छीघ्रं राजवचो निशम्य।
प्रविश्य च श्वेव हि सिंहगोष्ठं समासदन्महिषीं पांडवानाम् ॥ ३५९
प्रा० उ०—युधिष्ठिरो द्यूतमदेन मत्तो दुर्योधनो द्रौपदि त्वामजैषीत्।
द्रौ० उ०—कथं त्वेवं वदसि प्रातिकामिन्को हि दीव्येद्भार्यया राजपुत्र ॥ ३६०
प्रा० उ०—मूढो राजा द्यूतमदेन मत्तो ह्यभून्नान्यत्कैतवमस्य किंचित्।
न्यस्ताः पूर्वं भ्रातरस्तेन राज्ञा स्वयं चात्मा त्वमथो राजपुत्रि ॥ ३६१
द्रौ० उ०—गच्छ त्वं कितवं गत्वा सभायां पृच्छ सूतज।
किं नु पूर्वं पराजैषीरात्मानमथवा नु माम् ॥ ३६२
वै० उ०—सभां गत्वा स चोवाच द्रौपद्यास्तद्वचस्तदा।
युधिष्ठिरस्तु निश्चेता गतसत्त्व इवाभवत्।
न तं सूतं प्रत्युवाच वचनं साध्वसाधु वा ॥ ३६३
दु० उ०—दुःशासनैष मम सूतपुत्रो वृकोदरादुद्विजतेऽल्पचेताः।
स्वयं प्रगृह्यानय याज्ञसेनीं किं ते करिष्यंत्यवशाः सपत्नाः ॥ ३६४

## ९

वै० उ०—ततः समुत्थाय स राजपुत्रः श्रुत्वा भ्रातुः शासनं रक्तदृष्टिः।
प्रविश्य तद्वेश्म महारथानामित्यब्रवीद्द्रौपदीं राजपुत्रीम् ॥ ३६५
एह्येहि पांचालि जितासि कृष्णे दुर्योधनं पश्य विमुक्तलज्जा।
कुरून् भजस्वायतपद्मनेत्रे धर्मेण लब्धासि सभां परैहि ॥ ३६६
ततः समुत्थाय सुदुर्मनाः सा विवर्णमामृज्य मुखं करेण।
आर्ता प्रदुद्राव यतः स्त्रियस्ता वृद्धस्य राज्ञः कुरुपुंगवस्य ॥ ३६७
ततो जवेनाभिससार रोषाद् दुःशासनस्तामभिगर्जमानः।
दीर्घेषु नीलेष्वथ चोर्मिमत्सु जग्राह केशेषु नरेंद्रपत्नीम् ॥ ३६८
स तां पराकृष्य सभासमीपमानीय कृष्णामतिदीर्घकेशीम्।
दुःशासनो नाथवतीमनाथवच्चकर्ष वायुः कदलीमिवार्ताम् ॥ ३६९
सा कृष्यमाणा नमितांगयष्टिः शनैरुवाचाथ रजस्वलास्मि।
एकं च वासो मम मंदबुद्धे सभां नेतुं नार्हसि मामनार्य ॥ ३७०

दु० उ०—रजस्वला वा भव याज्ञसेनि एकाम्बरा वाप्यथवा विवस्त्रा ।
द्यूते जिता चासि कृतासि दासी दासीषु वासश्च यथोपजोषम् ॥ ३७१
द्रौ० उ०—धिगस्तु नष्टः खलुभारतानां धर्मस्तथा क्षत्रविदां च वृत्तम् ।
यत्र ह्यतीतां कुरुधर्मवेलां प्रेक्षंति सर्वे कुरव सभायाम् ॥ ३७२
भी० उ०—न धर्मसौक्ष्म्यात्सुभगे विवेक्तुं शक्नोमि ते प्रश्नमिमं यथावत् ।
अस्वाम्यशक्तः पणितुं परस्वं स्त्रियश्च भर्तुर्वशतां समीक्ष्य ॥ ३७३
द्रौ० उ०—संभूय सर्वैश्च जितोऽपि यस्मात्पश्चादयं कैतवमभ्युपेतः ।
समीक्ष्य सर्वे मम चापि वाक्यं विब्रूत मे प्रश्नमिम यथावत् ॥ ३७४
वै० उ०—तां कृष्यमाणां च रजस्वलां च स्रस्तोत्तरीयामतदर्हमाणाम् ।
वृकोदरः प्रेक्ष्य युधिष्ठिरं च चकार कोपं परमार्तरूपः ॥ ३७५
भी० उ०—भवंति गेहे बंधक्यः कितवानां युधिष्ठिर ।
न ताभिरुत दीव्यंति दया चैवास्ति तास्वपि ॥ ३७६
एषा ह्यनर्हती बाला पांडवान् प्राप्य कौरवैः ।
त्वत्कृते क्लिश्यते क्षुद्रैर्नृशंसैरकृतात्मभिः ॥ ३७७
अस्याः कृते मन्युरयं त्वयि राजन् निपात्यते ।
बाहू ते संप्रधक्ष्यामि सहदेवाग्निमानय ॥ ३७८
अर्जु० उ०—न पुरा भीमसेन त्वमीदृशीर्वदिता गिरः ।
परैस्ते नाशितं नूनं नृशंसैर्धर्मगौरवम् ॥ ३७९
न सकामाः परे कार्या धर्ममेवाचरोत्तमम् ।
भ्रातरं धार्मिकं ज्येष्ठं कोऽतिवर्तितुमर्हति ॥ ३८०
आहूतो हि परै राजा क्षात्रव्रतमनुस्मरन् ।
दीव्यते परकामेन तन्नः कीर्तिकर महत् ॥ ३८१
वै० उ०—तथा तान् दुःखितान् दृष्ट्वा पांडवान् धृतराष्ट्रजः ।
क्लिश्यमाना च पांचालीं विकर्ण इदमब्रवीत् ॥ ३८२
याज्ञसेन्या यदुक्तं तद्वाक्यं विब्रूत पार्थिवा. ।
अविवेकेन वाक्यस्य नरक सद्य एव नः ॥ ३८३
जितेन पूर्वं चानेन पांडवेन कृतः पणः ।
इयं च कीर्तिता कृष्णा सौबलेन पणार्थिना ।
एतत्सर्वं विचार्याहं मन्ये न विजितामिमाम् ॥ ३८४
एतच्छ्रुत्वा महान्नादः सभ्यानामुदतिष्ठत ।
विकर्णं शंसमानानां सौबलं चापि निंदताम् ॥ ३८५

तस्मिन्नुपरते शब्दे राधेयः क्रोधमूर्छितः ।
प्रगृह्य रुचिरं बाहुमिदं वचनमब्रवीत् ॥ ३८६

कीर्तिता द्रोपदी वाचा अनुज्ञाता च पांडवैः ।
भवत्यविजिता केन हेतुनैषा मता तव ॥ ३८७

दुःशासन सबालोऽयं विकर्णः प्राज्ञवादिकः ।
पांडवानां च वासांसि द्रौपद्याश्चाप्युपाहर ॥ ३८८

तच्छ्रुत्वा पांडवाः सर्वे स्वानि वासांसि भारत ।
अवकीर्योत्तरीयाणि सभायां समुपाविशन् ॥ ३८९

ततो दुःशासनो राजन्द्रौपद्या वसनं बलात् ।
सभामध्ये समाक्षिप्य व्यपाकर्षुं प्रचक्रमे ॥ ३९०

वै० उ०—आकृष्यमाणे वसने द्रौपद्या चिंतितो हरिः ।
गोविंद द्वारकावासिन्कृष्ण गोपीजनप्रिय ।
कौरवैः परिभूतां मां किं न जानासि केशव ॥ ३९१

हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ।
कौरवार्णवमग्नां मामुद्धरस्व जनार्दन ॥ ३९२

कृष्ण कृष्ण महायोगिन्विश्वात्मन्विश्वभावन ।
प्रपन्नां पाहि गोविंद कुरुमध्येऽवसीदतीम् ॥ ३९३

इत्यनुस्मृत्य कृष्णं सा हरिं त्रिभुवनेश्वरम् ।
प्रारुदद्दुःखिता राजन् मुखमाच्छाद्य भामिनी ॥ ३९४

याज्ञसेन्या वचः श्रुत्वा कृष्णो गह्वरितोऽभवत् ।
त्यक्त्वा शय्यासनं पद्भ्यां कृपालुः कृपयाभ्यगात् ॥ ३९५

आकृष्यमाणे वसने द्रौपद्यास्तु विशांपते ।
तद्रूपमपरं वस्त्रं प्रादुरासीदनेकशः ॥ ३९६

नानारागविरागाणि वसनान्यथ वै प्रभो ।
प्रादुर्भवन्ति शतशो धर्मस्य परिपालनात् ॥ ३९७

ततो हलहलाशब्दस्तत्रासीद्घोरदर्शनः ॥ ३९८

तदद्भुततमं लोके वीक्ष्य सर्वे महीभृतः ।
शशंसुर्द्रौपदीं तत्र कुत्संतो धृतराष्ट्रजम् ॥ ३९९

शशाप तत्र भीमस्तु राजमध्ये बृहत्स्वनः ।
क्रोधाद्विस्फुरमाणौष्ठो विनिष्पिष्य करे करम् ॥ ४००

यद्येतदेवमुक्त्वाहं न कुर्यां पृथिवीश्वराः ।
पितामहानां पूर्वेषां नाहं गतिमवाप्नुयाम् ॥ ४०१

अस्य पापस्य दुर्बुद्धेर्भारतापसदस्य च ।
न पिबेयं बलाद्वक्षो भित्त्वा चेद्रुधिरं युधि ॥ ४०२

वै० उ०—तस्य ते तद्वचः श्रुत्वा रौद्रं लोमप्रहर्षणम् ।
प्रचक्रुर्बहुलां पूजां कुत्संतो धृतराष्ट्रजम् ॥ ४०३

यदा तु वाससां राशिः सभामध्ये समाचितः ।
ततो दुःशासनः श्रान्तो व्रीडितः समुपाविशत् ॥ ४०४

धिक् शब्दस्तु ततस्तत्र समभूल्लोमहर्षणः ।
सभ्यानां नरदेवानां दृष्ट्वा कुंतीसुतांस्तथा ॥ ४०५

ततो राज्ञो धृतराष्ट्रस्य गेहे गोमायुरुच्चैर्व्याहरदग्निहोत्रे ।
तं रासभाः प्रत्यभाषन्त राजन् समन्ततः पक्षिणश्चैव रौद्राः ॥ ४०६

तं वै शब्दं विदुरस्तत्त्ववेदी शुश्राव घोरं सुबलात्मजा च ।
भीष्मो द्रोणो गौतमश्चापि विद्वान् स्वस्तिस्वस्तीत्यपि चैवाहुरुच्चैः ॥ ४०७

ततो गांधारी विदुरश्चापि विद्वांस्तमुत्पातं घोरमालक्ष्य राज्ञे ।
निवेदयामासतुरार्तवत्तदा ततो राजा वाक्यमिदं बभाषे ॥ ४०८

धृ० उ०—हतोऽसि दुर्योधन मंदबुद्धे यस्त्वं सभायां कुरुपुंगवानाम् ।
स्त्रियं समाभाषसि दुर्विनीत विशेषतो द्रौपदीं धर्मपत्नीम् ॥ ४०९

एवमुक्त्वा धृतराष्ट्रो मनीषी हितान्वेषी बान्धवानामपायात् ।
कृष्णां पांचालीमब्रवीत्सान्त्वपूर्वं विमृश्यैतत्प्रज्ञया तत्त्वबुद्धिः ॥ ४१०

वरं वृणीष्व पांचालि मत्तो यदभिवांछसि ।
वधूनां हि विशिष्टा मे त्वं धर्मपरमा सती ॥ ४११

द्रौ० उ०—ददासि चेद्वरं मह्यं वृणोमि भरतर्षभ ।
सर्वधर्मानुगः श्रीमानदासोऽस्तु युधिष्ठिरः ॥ ४१२

सरथौ सधनुष्कौ च भीमसेनधनंजयौ ।
यमौ च वरये राजन्नदासान् स्ववशानहम् ॥ ४१३

धृ० उ०—तथास्तु ते महाभागे यथा त्वं नन्दिनीच्छसि ।
त्वं हि सर्वस्नुषाणां मे श्रेयसी धर्मचारिणी ॥ ४१४

द्रौ० उ०—पापीयांस इमे भूत्वा संतीर्णाः पतयो मम ।
वेत्स्यंति चैव भद्राणि राजन्पुण्येन कर्मणा ॥ ४१५

धृ० उ०—अजातशत्रो भद्रं ते अरिष्टं स्वस्ति गच्छत ।
अनुज्ञाताः सहधनाः स्वराज्यमनुशासत ।
यतो बुद्धिस्ततः क्षांतिः प्रशमं गच्छ भारत ॥ ४१६
नादारुणि पतेच्छस्त्रं दारुण्येतन्निपात्यते ।
न वैराण्यभिजानन्ति गुणान् पश्यन्ति नागुणान् ॥ ४१७
विरोधं नाधिगच्छन्ति ये तु उत्तमपूरुषाः ।
दुर्योधनस्य पारुष्यं तत्तात हृदि मा कृथाः ॥ ४१८
मातरं चैव गांधारीं मां च त्वं गुणकाक्षया ।
उपस्थितं वृद्धमन्ध पितरं पश्य भारत ॥ ४१९
वै० उ०—इत्युक्तो भरतश्रेष्ठो धर्मराजो युधिष्ठिरः ।
कृत्वार्यसमयं सर्व प्रतस्थे भ्रातृभिः सह ॥ ४२०
ते रथान् मेघसंकाशानास्थाय सह कृष्णया ।
प्रययुर्हृष्टमनस इद्रप्रस्थं पुरोत्तमम् ॥ ४२१
अथ दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
मिथः संगम्य सहिताः पाडवान्प्रति मानिनः ॥ ४२२
वैचित्रवीर्यं राजानं धृतराष्ट्रं मनीषिणम् ।
अभिगम्य त्वरायुक्ताः श्लक्ष्णं वचनमब्रुवन् ॥ ४२३
न त्वयेदं श्रुतं राजन् यज्जगाद बृहस्पतिः ।
शक्रस्य नीतिप्रवदन् विद्वान्देवपुरोहितः ॥ ४२४
सर्वोपायैर्निहंतव्याः शत्रवः शत्रुसूदन ।
पुरा युद्धाद्बलाद्वापि प्रकुर्वन्ति तवाहितम् ॥ ४२५
ते वयं पांडवधनैः सर्वान् संपूज्य पार्थिवान् ।
यदि तान्योधयिष्यामः किं वै नः परिहास्यति ॥ ४२६
आत्तशस्त्रा रथगता. कुपितास्तात पांडवाः ।
नि शेषं वः करिष्यन्ति क्रुद्धा ह्याशीविषा इव ॥ ४२७
सन्नद्धो ह्यर्जुनो याति विधृत्य परमेषुधी ।
गांडीवं मुहुरादत्ते निश्वसञ्च निरीक्षते ॥ ४२८
गदां गुर्वीं समुद्यम्य त्वरितश्च वृकोदरः ।
स्वरथं योजयित्वाशु निर्यात इति नः श्रुतम् ॥ ४२९
पुनर्दीव्याम भद्रं ते वनवासाय पांडवैः ।
एवमेतान्वशे कर्तुं शक्ष्यामः पुरुषर्षभ ॥ ४३०

ते वा द्वादश वर्षाणि वयं वा द्यूतनिर्जिताः ।
प्रविशेम महारण्यमजिनैः परिवासिताः ॥ ४३१
त्रयोदशं च सजनेनाज्ञाताः परिवत्सरम् ।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ।
निवसेम वयं ते वा तथा द्यूतं प्रवर्तताम् ॥ ४३२
धृत० उ०—तूर्णं प्रत्यानयस्वैतान् कामं व्यध्वगतानपि ।
आगच्छंतु पुनर्द्यूतमिदं कुर्वंतु पांडवाः ॥ ४३३
वै० उ०—ततो द्रोणः सोमदत्तो बाह्लीकश्चैव गौतमः ।
मा द्यूतमित्यभाषंत शमोऽस्त्विति च सर्वशः ॥ ४३४
अकामाना च सर्वेषा सुहृदामर्थदर्शिनाम् ।
अकरोत्पांडवाह्वान धृतराष्ट्रः सुतप्रियः ॥ ४३५
वै० उ०—ततो व्यध्वगत पार्थ प्रातिकामी युधिष्ठिरम् ।
उवाच वचनाद्राज्ञो धृतराष्ट्रस्य धीमतः ॥ ४३६
उपास्तीर्णा सभा राजन्नक्षानुप्त्वा युधिष्ठिर ।
एहि पाडव दीव्येति पिता त्वाहेति भारत ॥ ४३७
यु० उ०—धातुर्नियोगाद्भूतानि प्राप्नुवन्ति शुभाशुभम् ।
न निवृत्तिस्तयोरस्ति देवितव्य पुनर्यदि ॥ ४३८
अक्षद्यूते समाह्वानं नियोगात्स्थविरस्य च ।
जानन्नपि क्षयकरं नातिक्रामितुमुत्सहे ॥ ४३९
वै० उ०—इति ब्रुवन्निववृते भ्रातृभिः सह पाडवः ।
जानश्च शकुनेर्मायां पार्थो द्यूतमियात्पुनः ॥ ४४०
विविशुस्ते सभां तां तु पुनरेव महारथाः ।
व्यथयन्ति स्म चेतांसि सुहृदां भरतर्षभाः ॥ ४४१
श० उ०—अमुंचत्स्थविरो यद्वो धन पूजितमेव तत् ।
महाधनं ग्लह त्वेकं शृणु भो भरतर्षभ ॥ ४४२
वयं वा द्वादशाब्दानि युष्माभिर्द्यूतनिर्जिताः ।
प्रविशेम महारण्य रौरवाजिनवाससः ॥ ४४३
त्रयोदशं च सजने अज्ञाताः परिवत्सरम् ।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ ४४४
अस्माभिर्निर्जिता यूयं वने द्वादश वत्सरान् ।
वसध्वं कृष्णया सार्धमजिनैः परिवासिताः ॥ ४४५

त्रयोदशे च निर्वृत्ते पुनरेव यथोचितम् ।
स्वराज्यं प्रतिपत्तव्यमितरैरथवेतरैः ॥ ४४६

यु० उ०—कथं वै मद्विधो राजा स्वधर्ममनुपालयन् ।
आहूतो विनिवर्तेत दीव्यामि शकुने त्वया ॥ ४४७
प्रतिजग्राह तं पार्थो ग्लहं जग्राह सौबलः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ४४८

वै० उ०—ततः पराजिताः पार्था वनवासाय दीक्षिताः ।
अजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमम् ॥ ४४९

दु० उ०—प्रवृत्तं धार्तराष्ट्रस्य चक्रं राज्ञो महात्मनः ।
पराजिताः पाण्डवेया विपत्तिं परमां गताः ॥ ४५०

वै० उ०—तस्य राजा सिंहगतेः सखेलं दुर्योधनो भीमसेनस्य हर्षात् ।
गतिं स्वगत्यानुचकार मन्दो निर्गच्छतां पाण्डवानां सभायाः ॥ ४५१
नैतावता कृतमित्यब्रवीत्तं वृकोदरः सन्निवृत्तार्धकायः ।
शीघ्रं हि त्वां निहतं सानुबन्धं संस्मार्याहं प्रतिवक्ष्यामि मूढ ॥ ४५२

अ० उ०—नैव वाचा व्यवसितं भीम विज्ञायते सताम् ।
इतश्चतुर्दशे वर्षे द्रष्टारो यद्भविष्यति ॥ ४५३

यु० उ०—आमन्त्रयामि भरतांस्तथा वृद्धं पितामहम् ।
सर्वानामन्त्र्य गच्छामि द्रष्टास्मि पुनरेत्य वः ॥ ४५४

वै० उ०—न ते किंचिदथोचुस्तं ह्रिया सन्ना युधिष्ठिरम् ।
मनोभिरेव कल्याणं दध्युस्ते तस्य धीमतः ॥ ४५५

वि० उ०—आर्या पृथा राजपुत्री नारण्यं गंतुमर्हति ।
सुकुमारी च वृद्धा च नित्यं चैव सुखोचिता ॥ ४५६
इह वत्स्यति कल्याणी सत्कृता मम वेश्मनि ।
इति पार्था विजानीध्वमगदं वोऽस्तु सर्वशः ॥ ४५७
तथेत्युक्त्वाब्रुवन्सर्वे यथा नो वदसेऽनघ ।
त्वं पितृव्यः पितृसमो वयं च त्वत्परायणाः ॥ ४५८

वै० उ०—एवमुक्तस्तथेत्युक्त्वा पांडवः सत्यविक्रमः ।
भीष्मद्रोणौ नमस्कृत्वा प्रातिष्ठत युधिष्ठिरः ॥ ४५९
ततो निनादः सुमहान् पांडवान्ते पुरेऽभवत् ॥ ४६०
कुंती च भृशसंतप्ता द्रौपदीं प्रेक्ष्य गच्छतीम् ।
शोकविह्वलया वाचा कृच्छ्राद्वचनमब्रवीत् ॥ ४६१

वत्से शोको न ते कार्यः प्राप्येदं व्यसनं महत् ।
स्त्रीधर्माणामभिज्ञासि शीलाचारवती तथा ॥ ४६२

न त्वां संदेष्टुमर्हामि भर्तृन्प्रति शुचिस्मिते ।
साध्वीगुणसमापन्ना भूषितं ते कुलद्वयम् ॥ ४६३

सभाग्याः कुरवश्चेमे ये न दग्धास्त्वयानघे ।
अरिष्टं व्रज पंथान मदनुध्यानबृंहिता ॥ ४६४

भाविन्यर्थे हि सत्स्त्रीणा वैकृत नोपजायते ।
गुरुधर्माभिगुप्ता च श्रेयः क्षिप्रमवाप्स्यसि ॥ ४६५

तथेत्युक्त्वा तु सा देवी स्रवन्नेत्रजलान्विता ।
शोणिताक्तैकवसना मुक्तकेशी विनिर्ययौ ॥ ४६६

इति श्रीसंक्षिप्तमहाभारते सभ पर्व समाप्तम् । श्लो स ४६६.



# ३ वनपर्व.

## १

वै० उ०—एवं द्यूताजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैः सहामात्यैर्निर्ययुर्गजसाह्वयात् ॥ १
वर्धमानपुरद्वारादभिनिष्क्रम्य पाण्डवाः ।
उदङ्मुखाः शस्त्रभृतः प्रययुः कृष्णया सह ॥ २
इंद्रसेनादयश्चैव भृत्याः परिचतुर्दश ।
रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः ॥ ३
गतानेतान्विदित्वा तु पौराः शोकाभिपीडिताः ।
गर्हयन्तोऽसकृद्भीष्मविदुरद्रोणगौतमान् ।
ऊचुर्विगतसंत्रासाः समागम्य परस्परम् ॥ ४
न तत्कुलं न चाचारो न धर्मोऽर्थः कुतः सुखम् ।
यत्र पापसहायोऽयं पापो राज्यं चिकीर्षति ॥ ५
दुर्योधनो गुरुद्वेषी त्यक्ताचारसुहृज्जनः ।
अर्थलुब्धोऽभिमानी च नीचः प्रकृतिनिर्घृणः ॥ ६
नेयमस्ति मही कृत्स्ना यत्र दुर्योधनो नृपः ।
साधु गच्छामहे सर्वे यत्र गच्छंति पांडवाः ॥ ७
एवमुक्त्वानुजग्मुस्ते पांडवांस्तान्समेत्यच ।
ऊचुः प्रांजलयः सर्वे कौन्तेयान्माद्रिनंदनान् ॥ ८
क्व गमिष्यथ भद्रं वस्त्यक्त्वास्मान् दुःखभागिनः ।
वयमप्यनुयास्यामो यत्र यूयं गमिष्यथ ॥ ९
अधर्मेण जिताञ्श्रुत्वा युष्मांस्त्यक्तघृणैः परैः ।
उद्विग्नाः स्मो भृशं सर्वे नास्मान् हातुमिहार्हथ ॥ १०
भक्तानुरक्तान् सुहृदः सदा प्रियहिते रतान् ।
कुराजाधिष्ठिते राज्ये न विनश्येम सर्वशः ॥ ११
श्रूयतां चाभिधास्यामो गुणदोषान्नरर्षभाः ।
शुभाशुभाधिवासेन संसर्गः कुरुते यथा ॥ १२
वस्त्रमापस्तिलान्भूमिं गंधो वासयते यथा ।
पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ॥ १३

मोहजालस्य योनिर्हि मूढैरेव समागमः ।
अहन्यहनि धर्मस्य योनिः साधुसमागमः ॥ १४
तस्मात्प्राज्ञैर्महद्भिश्च सुस्वभावैस्तपास्त्रिभिः ।
सद्भिश्च सह संसर्गः कार्यः शमपरायणैः ॥ १५
येषां त्रीण्यवदातानि विद्या योनिः स्वकर्म च ।
तान्सेवेत्तैः समास्या हि शास्त्रेभ्योऽपि गरीयसी ॥ १६
असतां दर्शनात्स्पर्शात्संजल्पाच्च सहासनात् ।
धर्माचाराः प्रहीयंते सिध्यंति च न मानवाः ॥ १७
बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् ॥ १८
ते युष्मासु समस्ताश्च व्यस्ताश्चैवेह सद्गुणाः ।
इच्छामो गुणवन्मध्ये वस्तुं श्रेयोभिकांक्षिणः ॥ १९
यु० उ०—धन्या वयं यदस्माकं स्नेहकारुण्ययंत्रिताः ।
असतोपि गुणानाहुर्ब्राह्मणप्रमुखाः प्रजाः ॥ २०
तदहं भ्रातृसहितः सर्वान्विज्ञापयामि वः ।
नान्यथा तद्धि कर्तव्यमस्मत्स्नेहानुकम्पया ॥ २१
भीष्मः पितामहो राजा विदुरो जननी च मे ।
सुहृज्जनश्च प्रायो मे नगरे नागसाह्वये ॥ २२
ते त्वस्मद्धितकामार्थं पालनीयाः प्रयत्नतः ।
युष्माभिः सहिताः सर्वे शोकसंतापविह्वलाः ॥ २३
निवर्ततागता दूरं ममागमनशापिताः ।
स्वजने न्यासभूते मे कार्या स्नेहान्विता मतिः ॥ २४
एतद्धि मम कार्याणां परमं हृदि संस्थितम् ।
कृतेनानेन तुष्टिर्मे सत्कारश्च भविष्यति ॥ २५
वै० उ०—तथानुमंत्रितास्तेन धर्मराजेन ताः प्रजाः ।
चक्रुरार्तस्वरं घोरं हा राजन्निति संहता ॥ २६
गुणान्पार्थस्य संस्मृत्य दुःखार्ताः परमातुराः ।
अकामाः सन्न्यवर्तत समागम्याथ पांडवान् ॥ २७
निवृत्तेषु तु पौरेषु रथानास्थाय पांडवाः ।
आजग्मुर्जाह्नवीतीरे प्रमाणाख्यं महावटम् ॥ २८
ते तं दिवसशेषेण वटं गत्वा तु पांडवाः ।
ऊषुस्तां रजनीं वीराः संस्पृश्य सलिलं शुचि ॥ २९

उदकेनैव तां रात्रिमूषुस्ते दुःखकर्षिताः ।
अनुजग्मुश्च तत्रैतान्स्नेहात्केचिद्द्विजातयः ॥ ३०

---

## २

प्रभातायां तु शर्वर्यां तेषामक्लिष्टकर्मणाम् ।
वनं यियासतां विप्रास्तस्थुर्भिक्षाभुजोऽग्रतः ॥ ३१
तानुवाच ततो राजा कुंतीपुत्रो धनंजयः ।
वयं हि हृतसर्वस्वा हृतराज्या हृताश्रियः ।
फलमूलामिषाहारा वनं गच्छाम दुःखिताः ॥ ३२
वनं च दोषबहुल बहुव्यालसरीसृपम् ।
परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति ॥ ३३
ब्राह्मणानां परिक्लेशा दैवतान्यपि सादयेत् ।
किं पुनर्मामितो विप्रा निवर्तध्वं यथेष्टतः ॥ ३४

ब्राह्म० उ०—गतिर्या भवतां राजंस्ता वयं गंतुमुद्यताः ।
नार्हस्यस्मान्परित्यक्तुं भक्तान्सद्धर्मदर्शिनः ॥ ३५
अनुकंपां हि भक्तेषु देवता ह्यपि कुर्वते ।
विशेषतो ब्राह्मणेषु सदाचारावलंबिषु ॥ ३६

यु० उ०—ममापि परमा भक्तिर्ब्राह्मणेषु सदा द्विजाः ।
सोह्यय विपरिभ्रंशस्त्वयं सादयतीव माम् ॥ ३७
आहरेयुरिमे येऽपि फलमूलमृगास्तथा ।
त इमे शोकजैर्दुःखैर्भ्रातरो मे विमोहिताः ॥ ३८
द्रौपद्या विप्रकर्षण राज्यापहरणेन च ।
दुःखार्दितानिमान्क्लेशैर्नाहं योक्तुमिहोत्सहे ॥ ३९

ब्राह्म० उ०—अस्मत्पोषणजा चिंता माभूत्ते हृदि पार्थिव ।
स्वयमाहृत्य चान्नानि त्वानुयास्यामहे वयम् ॥ ४०
अनुध्यानेन जप्येन विधास्यामः शिवं तव ।
कथाभिश्चाभिरम्याभिः सह रंस्यामहे वयम् ॥ ४१

युधि० उ०—एवमेतन्न संदेहो रमेऽहं सततं द्विजैः ।
न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः ॥ ४२

कथं द्रक्ष्यामि वः सर्वान्स्वयमाहृत्य भोजिनः ।
सद्भक्त्या क्लिश्यतोऽनर्हान्धिक् पापान्धृतराष्ट्रजान् ॥ ४३

वै० उ०—इत्युक्त्वा स नृपः शोचन्निषसाद महीतले ॥ ४४
तमध्यात्मरतो विद्वाञ्छौनको नाम वै द्विजः ।
योगे सांख्ये च कुशलो राजानमिदमब्रवीत् ॥ ४५

शौ० उ०—शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशंति न पंडितम् ॥ ४६
न हि ज्ञान विरुद्धेषु बहुदोषेषु कर्मसु ।
श्रेयोघातिषु सज्जते बुद्धिमंतो भवद्विधाः ॥ ४७
अर्थकृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनस्य च ।
शारीरमानसैर्दुःखैर्न सीदंति भवद्विधाः ॥ ४८
श्रूयतां चाभिधास्यामि जनकेन यथा पुरा ।
आत्मव्यवस्थानकरा गीताः श्लोका महात्मना ॥ ४९
मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्दितं जगत् ।
तयोर्व्याससमासाभ्यां शमोपायमिमं शृणु ॥ ५०
व्याधेरनिष्टसंस्पर्शाच्छ्रमादिष्टविवर्जनात् ।
दुःखं चतुर्भिः शारीर कारणै संप्रवर्तते ॥ ५१
तदा तत्प्रतिकाराच्च सतत चाविचिंतनात् ।
आधिव्याधिप्रशमनं क्रियायोगद्वयेन तु ॥ ५२
मतिमंतो ह्यतो वैद्याः शम प्रागेव कुर्वते ।
मानसस्य प्रियाख्यानैः सभोगोपनयैर्नृणाम् ॥ ५३
मानसेन हि दुःखेन शरीरमुपतप्यते ।
अयःपिण्डेन तप्तेन कुंभसंस्थमिवोदकम् ॥ ५४
मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवांबुना ।
प्रशांते मानसे ह्यस्य शारीरमुपशाम्यति ॥ ५५
मानसो दुःखमूलं तु स्नेह इत्युपलभ्यते ।
स्नेहाद्धि सज्जते जंतुर्दुःखयोगमुपैति च ॥ ५६
स्नेहमूलानि दुःखानि स्नेहजानि भयानि च ।
शोकहर्षौ तथायासः सर्वः स्नेहात्प्रवर्तते ॥ ५७
कोटराग्निर्यथाऽशेषं समूलं पादपं दहेत् ।
धर्मार्थौ तु तथाऽल्पोऽपि रागदोषो विनाशयेत् ॥ ५८

विप्रयोगेन तु त्यागी दोषदर्शी समागमात् ।
विरागं भजते जंतुर्निर्वैरो निरवग्रहः ॥ ५९
तस्मात्स्नेहं न लिप्सेत मित्रेभ्यो धनसंचयात् ।
स्वशरीरसमुत्थं च ज्ञानेन विनिवर्तयेत् ॥ ६०
रागाभिभूतः पुरुषः कामेन परिकृष्यते ।
इच्छा संजायते तस्य ततस्तृष्णा विवर्धते ॥ ६१
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणांतिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ६२
राजतः सलिलादग्नेश्चौरतः स्वजनादपि ।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ ६३
यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि ।
भक्ष्यते सलिले मत्स्यैस्तथा सर्वत्र वित्तवान् ॥ ६४
कार्पण्यं दर्पमानौ च भयमुद्वेग एव च ।
अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनाम् ॥ ६५
अर्था दुःखं परित्यक्तुं पालिताश्चैव शत्रवः ।
दुःखेन चाधिगम्यन्ते तस्मान्नाशं न चिंतयेत् ॥ ६६
अंतो नास्ति पिपासायाः संतोषः परमं सुखम् ।
अनित्यं यौवनं रूपं जीवितं रत्नसंचयः ।
ऐश्वर्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः ॥ ६७
नहि संचयवान् कश्चिद् दृश्यते निरुपद्रवः ।
अतश्च धार्मिकैः पुंभिरनीहार्थः प्रशस्यते ॥ ६८
धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता ।
प्रक्षालनाद्धि पंकस्य श्रेयो न स्पर्शनं नृणाम् ॥ ६९
युधिष्ठिरैवं सर्वेषु न स्पृहां कर्तुमर्हसि ।
धर्मेण यदि ते कार्यं विमुक्तेच्छो भवार्थतः ॥ ७०

यु० उ०—नार्थोपभोगलिप्सार्थमियमर्थेप्सुता मम ।
भरणार्थं तु विप्राणां ब्रह्मन्कांक्षे न लोभतः ॥ ७१
कथं ह्यस्मद्विधो ब्रह्मन्वर्तमानो गृहाश्रमे ।
भरणं पालनं चापि न कुर्यादनुयायिनाम् ॥ ७२
संविभागो हि भूतानां सर्वेषामेव दृश्यते ।
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ ७३

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यंते कदाचन ॥ ७४
देयमार्तस्य शयनं स्थितश्रांतस्य चासनम् ।
तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥ ७५
चक्षुर्दद्यान्मनो दद्याद्वाच दद्यात्सुभाषिताम् ।
उत्थाय चासनं दद्यादेष धर्मः सनातनः ॥ ७६
अग्निहोत्रमनड्वांश्च ज्ञातयोऽतिथिबांधवाः ।
पुत्रा दाराश्च भृत्याश्च निर्दहेयुरपूजिताः ॥ ७७
आत्मार्थं पाचयेन्नान्नं न वृथा घातयेत्पशून् ।
न च तत्स्वयमश्नीयाद्विधिवद्यन्न निर्वपेत् ॥ ७८
श्वभ्यश्च श्वापदेभ्यश्च वयोभ्यश्चावपेद्भुवि ।
वैश्वदेव हि नामैतत्सायंप्रातश्च दीयते ॥ ७९
विघसाशी भवेत्तस्मान्नित्यं चामृतभोजनः ।
विघसो भुक्तशेषं तु यज्ञशेषं तथामृतम् ॥ ८०
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
अनुव्रजेदुपासीत स यज्ञः पंचदक्षिणः ॥ ८१
एवं यो वर्तते वृत्तिं वर्तमानो गृहाश्रमे ।
तस्य धर्मं वरं प्राहुः कथं वा विप्र मन्यसे ॥ ८२
रा० उ०—अहो बत महत्कष्टं विपरीतमिदं जगत् ।
येनाऽपत्रपते साधुरसाधुस्तेन तुष्यति ॥ ८३
शिश्नोदरकृतेऽप्राज्ञः करोति विघसं बहु ।
मोहरागवशाक्रांत इंद्रियार्थवशानुगः ॥ ८४
ह्रियते बुद्ध्यमानोऽपि नरो हारिभिरिंद्रियैः ।
विमूढसंज्ञो दुष्टाश्वैरुद्भ्रांतैरिव सारथिः ॥ ८५
तदिदं वेदवचनं कुरु कर्म त्यजेति च ।
तस्माद्धर्मानिमान्सर्वान्नाभिमानात्समाचरेत् ॥ ८६
इज्याध्ययनदानानि तपः सत्यं क्षमा दमः ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ८७
अत्र पूर्वश्चतुर्वर्गः पितृयाणपथे स्थितः ।
कर्तव्यमिति यत्कार्यं नाभिमानात्समाचरेत् ॥ ८८

उत्तरो देवयानस्तु सद्भिराचरितः सदा ।
अष्टांगेनैव मार्गेण विशुद्धात्मा समाचरेत् ॥ ८९
सम्यक् संकल्पसंबंधात्सम्यक् चेंद्रियनिग्रहात् ।
सम्यग्व्रतविशेषाच्च सम्यक् च गुरुसेवनात् ॥ ९०
सम्यगाहारयोगाच्च सम्यक् चाध्ययनागमात् ।
सम्यक् कर्मोपसंन्यासात्सम्यक्चित्तनिरोधनात् ॥ ९१
एवं कर्माणि कुर्वंति संसारविजिगीषवः ।
रागद्वेषविनिर्मुक्ता ऐश्वर्यं देवता गताः ॥ ९२
तथा त्वमपि कौंतेय शममास्थाय पुष्कलम् ।
तपसा सिद्धिमन्विच्छ योगसिद्धिं च भारत ॥ ९३
पितृमातृमयी सिद्धिः प्राप्ता कर्ममयी च ते ।
तपसा सिद्धिमन्विच्छ द्विजानां भरणाय च ॥ ९४

---

## ३.

वै० उ०—शौनकेनैवमुक्तस्तु कुंतीपुत्रो युधिष्ठिरः ।
पुरोहितमुपागम्य भ्रातृमध्येऽब्रवीदिदम् ॥ ९५
प्रस्थितं माऽनुयांतीमे ब्राह्मणा वेदपारगाः ।
न चास्मि पोषणे शक्तो बहुदुःखसमन्वितः ॥ ९६
परित्यक्तुं न शक्तोऽस्मि दानशक्तिश्च नास्ति मे ।
कथमत्र मया कार्यं तद्ब्रूहि भगवन्मम ॥ ९७
धौ० उ०—पुरा सृष्टानि भूतानि पीड्यंते क्षुधया भृशम् ।
ततोऽनुकंपया तेषां सविता स्वपिता यथा ॥ ९८
गत्वोत्तरायणं तेजोरसानुद्धृत्य रश्मिभिः ।
दक्षिणायनमावृत्तो महीं निविशते रविः ॥ ९९
क्षेत्रभूते ततस्तस्मिन्नोषधीरोषधीपतिः ।
दिवस्तेजः समुद्धृत्य जनयामास वारिणा ॥ १००
निषिक्तश्चंद्रतेजोभिः स्वयोनौ निर्गते रविः ।
ओषध्यः षड्रसा मेध्यास्तदन्नं प्राणिनां भुवि ॥ १०१
एवं भानुमयं ह्यन्नं भूतानां प्राणधारणम् ।
पितैष सर्वभूतानां तस्मात्तं शरणं व्रज ॥ १०२

भीमेन कार्तवीर्येण वैन्येन नहुषेण च ।
तपोयोगसमाधिस्थैरुध्दृता ह्यापदः प्रजाः ॥ १०३
तथा त्वमपि धर्मात्मन्कर्मणा च विशोधितः ।
तप आस्थाय धर्मेण द्विजातीन्भर भारत ॥ १०४
वै० उ०—एवमुक्तस्तु धौम्येन तत्कालसदृशं वचः ।
विप्रत्यागसमाधिस्थः संयतात्मा दृढव्रतः ॥ १०५
धर्मराजो विशुद्धात्मा तप आतिष्ठदुत्तमम् ।
पुष्पोपहारैर्बलिभिरर्चयित्वा दिवाकरम् ॥ १०६
सोवगाह्य जलं राजा देवस्याभिमुखोऽभवत् ।
योगमास्थाय धर्मात्मा वायुभक्षो जितेंद्रियः ॥ १०७
गांगेयं वार्युपस्पृश्य प्राणायामेन तस्थिवान् ।
शुचिःप्रयतवाग्भूत्वा स्तोत्रमारब्धवांस्ततः ॥ १०८
यु० उ०—त्वं भानो जगतश्चक्षुस्त्वमात्मा सर्वदेहिनाम् ।
त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावताम् ॥ १०९
त्वं गतिः सर्वसाख्यानां योगिनां त्वं परायणम् ।
अनावृतार्गलद्वारं त्व गतिस्त्वं मुमुक्षताम् ॥ ११०
त्वया संधार्यते लोकस्त्वया लोकः प्रकाशते ।
त्वया पवित्रीक्रियते निर्व्याजं पाल्यते त्वया ॥ १११
त्वामुपस्थाय काले तु ब्राह्मणा वेदपारगाः ।
स्वशाखाविहितैर्मंत्रैरर्चंत्यृषिगणार्चितम् ॥ ११२
त्रयस्त्रिंशश्च वै देवास्तथा वैमानिका गणाः ।
सोपेंद्राः समहेंद्राश्च त्वामिष्ट्वा सिद्धिमागताः ॥ ११३
सब्रह्मकेषु लोकेषु सप्तस्वप्यखिलेषु च ।
न तद्भूतमहं मन्ये यदर्कादतिरिच्यते ॥ ११४
ज्योतींषि त्वयि सर्वाणि त्वं सर्वज्योतिषां पतिः ।
त्वयि सत्यं च सत्त्वं च सर्वे भावाश्च सात्विकाः ॥ ११५
त्वत्तेजसा कृतं चक्रं सुनाभं विश्वकर्मणा ।
देवारीणां मदो येन नाशितः शार्ङ्गधन्वना ॥ ११६
त्रयोदशद्वीपवतीं गोभिर्भासयसे महीम् ।
त्रयाणामपि लोकानां हितायैकः प्रवर्तसे ॥ ११७
तव यद्युदयो न स्यादंधं जगदिदं भवेत् ।

न च धर्मार्थकामेषु प्रवर्तेरन्मनीषिणः ॥ ११८
यदहर्ब्रह्मणः प्रोक्तं सहस्रयुगसंमितम् ।
तस्य त्वमादिरतश्च कालज्ञैः परिकीर्तितः ॥ ११९
मनूनां मनुपुत्राणां जगतोऽमानवस्य च ।
मन्वंतराणां सर्वेषामीश्वराणां त्वमीश्वरः ॥ १२०
संहारकाले संप्राप्ते तव क्रोधविनिःसृतः ।
संवर्तकाग्निस्त्रैलोक्यं भस्मीकृत्यावतिष्ठते । १२१
त्वद्दीधितिसमुत्पन्ना नानावर्णा महाघनाः ।
सैरावताः साशनयः कुर्वंत्याभूतसंप्लवम् ॥ १२२
कृत्वा द्वादशधात्मानं द्वादशादित्यतां गतः ।
संहृत्यैकार्णवं सर्वं त्वं शोषयासि रश्मिभिः ॥ १२३
त्वामिंद्रमाहुस्त्वं रुद्रस्त्वं विष्णुस्त्वं प्रजापतिः ।
त्वमग्निस्त्वं मनः सूक्ष्मं प्रभुस्त्व ब्रह्मशाश्वतम् ॥ १२४
त्वं हंसः सविता भानुरंशुमाली वृषाकपिः ।
विवस्वान्मिहिरः पूषा मित्रो धर्मस्तथैव च ॥ १२५
सहस्ररश्मिरादित्यस्तपनस्त्व गवां पतिः ।
मार्तंडोऽर्को रविः सूर्यः शरण्यो दिनकृत्तथा ॥ १२६
दिवाकरः सप्तसप्तिर्धामकेशी विरोचनः ।
आशुगामी तमोघ्नश्च हरिताश्वश्च कीर्त्यसे ॥ १२७
सप्तम्यामथवा षष्ठ्या भक्त्या पूजां करोति यः ।
अनिर्विण्णोऽनहंकारी तं लक्ष्मीर्भजते नरम् ॥ १२८
न तेषामापदः सन्ति नाधयो व्याधयस्तथा ।
ये तवानन्यमनसः कुर्वंत्यर्चनवंदने ॥ १२९
त्वं ममाप्यन्नकामस्य सर्वातिथ्यं चिकीर्षतः ।
अन्नमन्नपते दातुमभितः श्रद्धयार्हसि ॥ १३०
ये च तेऽनुचराः सर्वे पादोपांतं समाश्रिताः ।
माठरारुणदंडाद्यास्तांस्तान्वंदेऽशनिक्षुभान् ॥ १३१
क्षुभया सहिता मैत्री याश्चान्या भूतमातरः ।
ताश्च सर्वा नमस्यामि पांतु मां शरणागतम् ॥ १३२
वै० उ०—एवंस्तुतो महाराज भास्करो लोकभावनः ।
ततो दिवाकरः प्रीतो दर्शयामास पांडवम् ॥ १३३

दि० उ०—गृह्णीष्व पिठरं ताम्रं मया दत्तं नराधिप ।
यावद्वर्त्स्यति पांचाली पात्रेणानेन सुव्रत ॥ १३४
फलमूलामिषं शाकं संस्कृतं यन्महानसे ।
चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति ॥ १३५
एतच्चतुर्दशे वर्षे भूयो राज्यमवाप्स्यसि ।
वै० उ०—एवमुक्त्वा तु भगवांस्तत्रैवांतरधीयत ॥ १३६
लब्ध्वा वरं तु कौंतेयो जलादुत्तीर्य धर्मवित् ।
जग्राह पादौ धौम्यस्य भ्रातॄंश्च परिषस्वजे ॥ १३७
द्रौपद्या सह संगम्य वंद्यमानस्तया प्रभुः ।
महानसे तदानीं तु साधयामास पांडवः ॥ १३८
संस्कृत प्रसवं याति स्वल्पमन्नं चतुर्विधम् ।
अक्षय्यं वर्धते चान्नं तेन भोजयते द्विजान् ॥ १३९
भुक्तवत्सु च विप्रेषु भोजयित्वानुजानपि ।
युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्षती ।
द्रौपद्यां भुज्यमानायां तदन्नं क्षयमेति च ॥ १४०
ततः कृतस्वस्त्ययना धौम्येन सह पांडवाः ।
द्विजसंघैः परिवृताः प्रययुः काम्यकं वनम् ॥ १४१

## ४

वै० उ०—वन प्रविष्टेष्वथ पांडवेषु प्रज्ञाचक्षुस्तप्यमानोऽम्बिकेयः ।
धर्मात्मानं विदुरमगाधबुद्धिं सुखासीनो वाक्यमुवाच राजा ॥ १४२
धृ० उ०—एवं गते विदुर यदद्य कार्यं पौराश्चेमे कथमस्मान्भजेरन् ।
ते चाप्यस्मान्नोद्धरेयुः समूलांस्तत्त्वं ब्रूयाः साधुकार्याणि वेत्सि ॥ १४३
वि० उ०—दुर्योधनं त्वहितं वै निगृह्य पाडोः पुत्रं प्रकुरुष्वाधिपत्ये ।
सभामध्ये द्रुपदस्यात्मजा च युधिष्ठिरं त्वं परिसांत्वयस्व ॥ १४४
धृ० उ०—कथं हि पुत्रं पांडवार्थे त्यजेयं स मां जिह्मं विदुर सर्वं ब्रवीषि ।
मानं च तेऽहमधिकं धारयामि यथेच्छकं गच्छ वा तिष्ठ वा त्वम् ॥ १४५
वै० उ०—एतावदुक्त्वा धृतराष्ट्रोऽन्वपद्यदंतर्वेश्म सहसोत्थाय राजन् ।
नेदमस्तीत्यथ विदुरो भाषमाणः संप्राद्रवद्यत्र पार्था बभूवुः ॥ १४६
गते तु विदुरे राजन्नाश्रमं पांडवान्प्रति ।
धृतराष्ट्रो महाप्राज्ञः पर्यतप्यत भारत ॥ १४७

विदुरस्य प्रभावं च संधिविग्रहकारितम् ।
विवृद्धिं च परां मत्वा पांडवानां भविष्यति ॥ १४८
स सभाद्वारमागम्य विदुरः स्मारमोहितः ।
समक्षं पार्थिवेंद्राणां पपाताविष्टचेतनः ॥ १४९
समानयंतु धर्मज्ञं मम भ्रातरमाशु वै ।
इति ब्रुवन् स नृपतिः कृपणं पर्यदेवयत् ॥ १५०
तस्य तद्वचन श्रुत्वा प्राद्रवत्काम्यकं प्रति ।
संजयोऽजिनसंवीतं ददर्शाथ युधिष्ठिरम् ।
विदुरेण सहासीनं ब्राह्मणैश्च सहस्रशः ॥ १५१
सं० उ०—राजा स्मरति ते क्षत्तर्धृतराष्ट्रोंऽबिकासुतः ।
तं पश्य गत्वा त्वं क्षिप्रं संजीवय च पार्थिवम् ॥ १५२
एवमुक्तस्तु विदुरो धीमान् स्वजनवल्लभः ।
युधिष्ठिरस्यानुमते पुनरायाद्गजाह्वयम् ॥ १५३
अंधस्तमंकमानीय मूर्धन्याघ्राय चैव हि ।
क्षम्यतामिति चोवाच यदुक्तोऽसि मयानघ ॥ १५४
वि० उ०—क्षांतमेव मया राजन्गुरुर्मे परमो भवान् ।
एषोऽहमागतः शीघ्रं त्वद्दर्शनपरायणः ॥ १५५
श्रुत्वा च विदुर प्राप्त राज्ञा च परिसांत्वितम् ।
धृतराष्ट्रात्मजो राजा पर्यतप्यत दुर्मतिः ॥ १५६
स सौबलेयमानाय्य कर्णदुःशासनौ तथा ।
मंत्रयामास वै हंतुं पाडवान् वनगोचरान् ॥ १५७
प्रतिषिध्याथ तान्सर्वान्कृष्णद्वैपायनः प्रभु· ।
प्रज्ञाचक्षुषमासीनमुवाचाभ्येत्य सत्वरम् ॥ १५८
व्या० उ०—धृतराष्ट्र महाप्राज्ञ तव पुत्रः सुमंदधीः ।
पांडवान्नित्यसंक्रुद्धो राज्यहेतोर्जिघांसति ॥ १५९
वार्यतां साध्वयं मूढः शमं गच्छतु ते सुतः ।
वनस्थांस्तानयं हंतुमिच्छन्प्राणान्विमोक्ष्यति ॥ १६०
धृ० उ०—परित्युक्तं न शक्नोमि दुर्योधनमचेतनम् ।
पुत्रस्नेहेन भगवञ्जानन्नपि प्रियव्रत ॥ १६१
व्या० उ०—वैचित्रवीर्य नृपते सत्यमाह यथा भवान् ।
दृढं विद्मः परं पुत्रं परं पुत्रान्न विद्यते ॥ १६२

गवां माता पुरा तात सुरभिः प्रारुदत्किल ।
इंद्र० उ०—किमिदं रोदिषि शुभे कच्चित्क्षेमं दिवौकसाम् ॥ १६३
सु० उ०—अहं हि पुत्रं शोचामि तेन रोदिमि कौशिक ।
पश्यैनं कर्षकं क्षुद्रं दुर्बलं मम पुत्रकम् ॥ १६४
प्रतोदेनाभिनिघ्नंतं लांगलेनच पीडितम् ।
इंद्र० उ०—तव पुत्रसहस्रेषु पीड्यमानेषु शोभने ॥ १६५
किं कृपायितमस्त्यत्र पुत्र एकेऽत्र हन्यति ।
सु० उ०—यदि पुत्रसहस्राणि सर्वत्र समतैव मे ॥ १६६
दीनस्य तु सतः शक्र पुत्रस्याभ्यधिका कृपा ।
व्या० उ०—तद्यथा सुरभिः प्राह सममेवास्तु तत्तथा ॥ १६७
यादृशो मे सुतः पांडुस्तादृशो मेसि पुत्रक ।
चिराय तव पुत्राणां शतमेकश्च भारत ।
पांडोः पंचैव लक्ष्यंते तेऽपि मंदाः सुदुःखिताः ॥ १६८
यदि पार्थिव कौरव्याञ्जीवमानानिहेच्छसि ।
दुर्योधनस्तव सुतः शमं गच्छतु पांडवैः ॥ १६९
धृ० उ०—एवमेतन्महाप्राज्ञ यथा वदसि नो मुने ।
अहं चैव विजानामि सर्वे चेमे नराधिपाः ॥ १७०
यदि त्वहमनुग्राह्यः कौरवेषु दया यदि ।
अन्वशाधि दुरात्मानं पुत्रं दुर्योधनं मम ॥ १७१
व्या० उ०—अयमायाति वै राजन्मैत्रेयो भगवानृषिः ।
एष दुर्योधनं राजन्ननुशास्ता सुतं तव ॥ १७२
एवमुक्त्वा ययौ व्यासो मैत्रेयः प्रत्यदृश्यत ।
पूजया प्रतिजग्राह सपुत्रस्तं नराधिपः ॥ १७३
मै० उ०—तीर्थयात्रामनुक्रामन्प्राप्तोऽस्मि कुरुजांगलान् ।
यदृच्छया धर्मराजं दृष्टवान्काम्यके वने ॥ १७४
तत्राश्रौषं महाराज पुत्राणां तव विभ्रमम् ।
अनयं द्यूतरूपेण महाभयमुपस्थितम् ॥ १७५
ततोऽहं त्वामनुप्राप्तः कौरवाणामवेक्षया ।
सदा ह्यभ्यधिकः स्नेहः प्रीतिश्च त्वयि मे प्रभो ॥ १७६
मेढीभूतः स्वयं राजन्निग्रहे प्रग्रहे भवान् ।
किमर्थमनयं घोरमुत्पद्यंतमुपेक्षसे ॥ १७७

ततो व्यावृत्य राजानं दुर्योधनममर्षणम् ।
उवाच श्लक्ष्णया वाचा मैत्रेयो भगवानृषिः ॥ १७८
दुर्योधन महाबाहो निबोध वचनं हितम् ॥ १७९
मा द्रुह पांडवान् राजन् कुरुष्व प्रियमात्मनः ।
ते हि सर्वे नरव्याघ्राः शूरा विक्रांतयोधिनः ॥ १८०
सर्वे नागायुतप्राणा वज्रसंहनना दृढाः ।
सत्यव्रतधराः सर्वे सर्वे पुरुषमानिनः ॥ १८१
हंतारो देवशत्रूणां रक्षसां कामरूपिणाम् ।
हिडिंबबकमुख्यानां किर्मीरस्य च रक्षसः ॥ १८२
एतः प्रद्रवतां रात्रौ यः स तेषां महात्मनाम् ।
आवृत्य मार्ग रौद्रात्मा तस्थौ गिरिरिवाचलः ॥ १८३
तं भीमः समरश्लाघी बलेन बलिनां वरः ।
जघान पशुमारेण व्याघ्रः क्षुद्रमृगं यथा ॥ १८४
पश्य दिग्विजये राजन् यथा भीमेन पातितः ।
जरासंधो महेष्वासो नागायुतबलो युधि ॥ १८५
संबंधी वासुदेवश्च श्यालाः सर्वे च पार्षताः ।
कस्तान् युधि समासीदेज्जरामरणवान्नरः ॥ १८६
तस्य ते शम एवास्तु पांडवैर्भरतर्षभ ।
कुरु मे वचनं राजन् मा मन्युवशमन्वगाः ॥ १८७

वै० उ०—एवं तु ब्रुवतस्तस्य मैत्रेयस्य विशांपते ।
ऊरुं गजकराकारं करेणाभिजघान सः ॥ १८८
दुर्योधनः स्मितं कृत्वा चरणेनोल्लिखन् महीम् ।
न किंचिदुक्त्वा दुर्मेधास्तस्थौ किंचिदवाङ्मुखः ॥ १८९
तमशुश्रूषमाणं तु विलिखंतं वसुंधराम् ।
दृष्ट्वा दुर्योधनं राजन् मैत्रेयं कोप आविशत ॥ १९०
ततः स वार्युपस्पृश्य कोपसंरक्तलोचनः ।
मैत्रेयो धार्तराष्ट्रं तमशपद्दुष्टचेतसम् ॥ १९१
यस्मात्त्वं मामनादृत्य नेमां वाचं चिकीर्षसि ।
तस्मादस्याभिमानस्य सद्यः फलमवाप्नुहि ॥ १९२
त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत् ।
तत्र भीमो गदाघातैस्तवोरुं भेत्स्यते बली ॥ १९३

५

वै० उ०—भोजाः प्रव्राजितान् श्रुत्वा वृष्णयश्चांधकैः सह ।
पांडवान्दुःखसंतप्तान्समाजग्मुर्महावने ॥ १९४
वासुदेवं पुरस्कृत्य सर्वे ते क्षत्रियर्षभाः ।
परिवार्योपविविशुर्धर्मराज युधिष्ठिरम् । १९५
पांचाली पुंडरीकाक्षमासीनं भ्रातृभिः सह ।
अभिगम्याब्रवीत्क्रुद्धा शरण्यं शरणैषिणी ॥ १९६
द्रौ० उ०—सर्वे प्रजाभिसर्गे त्वामाहुरेकं प्रजापतिम् ।
स्रष्टारं सर्वलोकानामसितो देवलोऽब्रवीत् ॥ १९७
विष्णुस्त्वमासि दुर्धर्ष त्वं यज्ञो मधुसूदन ।
यष्टा त्वमासि यष्टव्यो जामदग्न्यो यथाब्रवीत् ॥ १९८
ऋषयस्त्वां क्षमामाहुः सत्यं च पुरुषोत्तम ।
सत्याद्यज्ञोऽसि संभूतः काश्यपस्त्वां यथाब्रवीत् ॥ १९९
साध्यानामपि देवाना शिवानामीश्वरेश्वरम् ।
लोकभावन भूतेश यथा त्वां नारदोऽब्रवीत् ॥ २००
ब्रह्मशंकरशक्राद्यैर्देववृंदैः पुन. पुनः ।
क्रीडसे त्व नरव्याघ्र बालः क्रीडनकैरिव ॥ २०१
द्यौश्च ते शिरसा व्याप्ता पद्भ्यां च पृथिवी विभो ।
जठर ते इमे लोकाः पुरुषोऽसि सनातनः ॥ २०२
त्व प्रभुस्त्व विभुस्त्वं च भूतात्मा त्वं विचेष्टसे ।
लोकपालाश्च लोकाश्च नक्षत्राणि दिशो दश ॥ २०३
नभश्चंद्रश्च सूर्यश्च त्वयि सर्व प्रतिष्ठितम् ।
मर्त्यता चैव लोकानाममरत्वं दिवौकसाम् ॥ २०४
सा तेऽहं दुःखमाख्यास्ये प्रणयान्मधुसूदन ।
ईशस्त्वं सर्वभूतानां ये दिव्या ये च मानुषाः ॥ २०५
कथं नु भार्या पार्थानां तव कृष्ण सखी प्रिया ॥
धृष्टद्युम्नस्य भगिनी समाकृष्येत मादृशी ॥ २०६
स्त्रीधर्मिणी वेपमाना शोणितेन समुक्षिता ।
एकवस्त्रा विकृष्टास्मि दुःखिता कुरुसंसदि ॥ २०७
राज्ञा मध्ये सभायां तु रजसातिपरिप्लुता ।
दृष्ट्वा च मां धार्तराष्ट्राः प्राहसन्पापचेतसः ॥ २०८

दासीभावेन मां भोक्तुमीषुस्ते मधुसूदन ।
जीवत्सु पांडुपुत्रेषु पांचालेषु च वृष्णिषु ॥ २०९
नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
स्नुषा भवामि धर्मेण साहं दासीकृता बलात् ॥ २१०
गर्हये पांडवांस्त्वेवं युधि श्रेष्ठान्महाबलान् ।
यत्क्लिश्यमानां प्रेक्षंते धर्मपत्नीं यशस्विनीम् ॥ २११
शाश्वतोऽयं धर्मपथः सद्भिराचरितः सदा ।
यद्भार्यां परिरक्षंति भर्तारोऽल्पबला अपि ॥ २१२
भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
आत्मा हि जायते तस्यां तस्माज्जाया भवत्युत ॥ २१३
नान्विमे शरणं प्राप्तं न त्यजंति कदाचन ।
ते मा शरणमापन्नां नान्वपद्यंत पांडवाः ॥ २१४
पंचभिः पतिभिर्जाता कुमारा मे महौजसः ।
एतेषामप्यवेक्षार्थं त्रातव्यास्मि जनार्दन ॥ २१५
धिग्बलं भीमसेनस्य धिक् पार्थस्य च पौरुषम् ।
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ॥ २१६
अधर्मेण हृतं राज्यं सर्वे दासीकृतास्तदा ।
सभायां परिक्लिष्टाहमेकवस्त्रा रजस्वला ॥ २१७
कुले महति जातास्मि दिव्येन विधिना किल ।
पांडवानां प्रिया भार्या स्नुषा पांडोर्महात्मनः ॥ २१८
कचग्रहमनुप्राप्ता सास्मि कृष्ण वरा सती ।
पंचानां पांडुपुत्राणां प्रेक्षतां मधुसूदन ॥ २१९
इत्युक्त्वा प्रारुदत्कृष्णा मुखं प्रच्छाद्य पाणिना ।
पद्मकोशप्रकाशेन मृदुनामृदुभाषिणी ॥ २२०
स्तनावपतितौ पीनौ सुजातौ शुभलक्षणौ ।
अत्यवर्षत पांचाली दुःखजैरश्रुबिंदुभिः ॥ २२१
चक्षुषी परिमार्जंती निश्वसंती पुनः पुनः ।
बाष्पपूर्णेन कण्ठेन क्रुद्धा वचनमब्रवीत् ॥ २२२
नैव मे पतयः संति न पुत्रा न च बांधवाः ।
न भ्रातरौ न च पिता नैव त्वं मधुसूदन ॥ २२३

ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत् ।
न च मे शाम्यते दुःखं कर्णो यत्प्राहसत्तदा ॥ २२४
चतुर्भिः कारणैः कृष्ण त्वया रक्ष्यास्मि नित्यशः ।
संबंधाद्गौरवात्सख्यात्प्रभुत्वेनैव केशव ॥ २२५
वै० उ०—अथ तामब्रवीत्कृष्णस्तस्मिन्वीरसमागमे ।
श्रीकृ० उ०—रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धासि भाविनी ॥ २२६
बीभत्सुशरसंच्छन्नाञ्छोणितौघपरिप्लुतान् ।
विहतान्वल्लभान्वीक्ष्य शयानान्वसुधातले ॥ २२७
यत्समर्थं पांडवानां तत्करिष्यामि मा शुचः ।
सत्यं ते प्रतिजानामि राज्ञां राज्ञी भविष्यसि ॥ २२८
पतेद्द्यौर्हिमवांच्छीर्येत्पृथिवी शकलीभवेत् ॥
शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेत् ॥ २२९
तच्छ्रुत्वा द्रौपदी वाक्यं प्रतिवाक्यमथाच्युतात् ।
साचीकृतमवैक्षत्सा पांचाली मध्यमं पतिम् ॥ २३०
आबभाषे महाराज द्रौपदीमर्जुनस्तदा ।
मारोदीः शुभताम्राक्षि यदाह मधुसूदनः ॥ २३१
तथा तद्भविता देवि नान्यथा वरवर्णिनि ।
इत्युक्तेऽभिमुखा वीरा वासुदेवमुपस्थिताः ॥ २३२
तेषां मध्ये महाबाहु केशवो वाक्यमब्रवीत् ।
नैतत्कृच्छ्रमनुप्राप्तो भवान्स्याद्वसुधाधिप ।
यद्यहं द्वारकायां स्या राजन्सन्निहितः पुरा ॥ २३३
आगच्छेयमहं द्यूतमनाहूतोऽपि कौरवैः ।
वारयेयमहं द्यूतं बहून्दोषान्प्रदर्शयन् ॥ २३४
स्त्रियोऽक्षा मृगया पानमेतत्कामसमुत्थितम् ।
दुःखं चतुष्टयं प्रोक्तं यैर्नरो भ्रश्यते श्रियः ॥ २३५
तत्र सर्वत्र वक्तव्यमत्यंतं शास्त्रकोविदैः ।
विशेषतश्च वक्तव्यं द्यूते पश्यंति तद्विदः ॥ २३६
एकाहाद्द्रव्यनाशोऽत्र ध्रुवं व्यसनमेव च ।
अभुक्तनाशश्चार्थानां वाक्पारुष्यं च केवलम् ॥ २३७
एतच्चान्यच्च कौरव्य प्रसंगिकटुकोदयम् ।
द्यूते ब्रूयां महाबाहो समासाद्याम्बिकासुतम् ॥ २३८

न चेत्स मम राजेंद्र गृह्णीयान्मधुरं वचः ।
पथ्यं च भरतश्रेष्ठ निगृह्णीयां बलेन तम् ॥ २३९
असान्निध्यं तु कौरव्य ममानर्तेष्वभूत्तदा ।
येनेदं व्यसनं प्राप्ता भवंतो द्यूतकारितम् ॥ २४०
सोऽहमेत्य कुरुश्रेष्ठ द्वारकां पांडुनंदन ।
श्रुत्वा चाभ्यागतोऽस्मि त्वां द्रष्टुकामो विशां पते ॥ २४१
अहो कृच्छ्रमनुप्राप्ताः सर्वे स्म भरतर्षभ ।
सोऽहं त्वां व्यसने मग्नं पश्यामि सह सोदरैः ॥ २४२

---

## ६

यु० उ०—असान्निध्यं कथं कृष्ण तवासीद्वृष्णिनंदन ।
क्व चासीद्विप्र वासस्ते किं चाकार्षीः प्रवासतः ॥ २४३
वा० उ०—हतं श्रुत्वा महाबाहो मया श्रौतश्रवं नृपम् ।
उपायाद्भरतश्रेष्ठ शाल्वो द्वारवतीं पुरीम् ॥ २४४
अरुंधत्तां सुदुष्टात्मा सर्वतः पांडुनंदन ।
शाल्वो वैहायसं चापि तत्पुरं व्यूह्यधिष्ठित ॥ २४५
तत्रस्थोऽथ महीपालो योधयामास तां पुरीम् ।
अभिसारेण सर्वेण तत्र युद्धमवर्तत ॥ २४६
पुरी समंताद्विहिता सपताका सतोरणा ।
सचक्रा सहुडा चैव सयंत्रखनका तथा ॥ २४७
सोपशल्यप्रतोलीका साट्टाट्टालकगोपुरा ।
सचक्रग्राहिणी चैव सोल्कालातावपोथिका ॥ २४८
सोष्ट्रिका भरतश्रेष्ठ सभेरीपणवानका ।
सतोमरांकुशा राजन्सशतघ्नीकलांगला ॥ २४९
मध्यमेन च गुल्मेन रक्षिभिः सा सुरक्षिता ।
प्रक्षिप्तगुल्मैश्च तथा हयैश्च सपताकिभिः ॥ २५०
आघोषितं च नगरे न पातव्या सुरेति वै ।
प्रमत्तेष्वभिघातं हि कुर्याच्छाल्वो नराधिपः ॥ २५१
संक्रमा भेदिताः सर्वे नावश्च प्रतिषेधिताः ।
परिखाश्चापि कौरव्य कीलैः सुनिचिताः कृताः ॥ २५२

न चामुद्रोऽभिनिर्याति न चामुद्रः प्रवेश्यते ॥ २५३
दत्तवेतनभक्तं च दत्तायुधपरिच्छदम् ।
कृतोपधानं च तदा बलमासीन्महाभुज ॥ २५४
एवं सुविहिता राजन्द्वारका भूरिदक्षिणा ।
आहुकेन सुगुप्ता च राज्ञा राजीवलोचन ॥ २५५
तां तूपयातो राजेंद्र शाल्वः सौभपतिस्तदा ।
प्रभूतनरनागेन बलेनोपाविवेश ह ॥ २५६
वर्जयित्वा स्मशानानि देवतायतनानि च ।
वल्मीकांश्चैत्यवृक्षांश्च तन्निविष्टमभूद्बलम् ॥ २५७
ततो निर्याय कौरव्य प्रद्युम्नो वाक्यमब्रवीत् ।
आश्वसध्वं न भीः कार्या सौभराडद्य नश्यति ॥ २५८
एवमुक्त्वा रौक्मिणेयो रथमास्थाय कांचनम् ।
तूणखड्गाधरः शूरो बद्धगोधांगुलित्रवान् ॥ २५९
सविद्युच्छुरितं चापं विहरन्वै तलात्तलम् ।
मोहयामास दैतेयान्सर्वान्सौभनिवासिनः ॥ २६०
ततः सुतुमुलं युद्धं शाल्ववृष्णिप्रवीरयोः ।
समेता ददृशुर्लोका बलिवासवयोरिव ॥ २६१
स तैरभिहतो बाणैर्बहुभिस्तेन मोहितः ।
निश्चेष्टः कौरवश्रेष्ठ प्रद्युम्नोऽभूद्रणाजिरे ॥ २६२
तं तथा मोहितं दृष्ट्वा सारथिर्जवनैर्हयैः ।
रणादपाहरत्तूर्णं शिक्षितो दारुकिस्तदा ॥ २६३
नातिदूरापयाते तु रथे रथिवरः प्रभुः ।
धनुर्गृहीत्वा यंतारं लब्धसंज्ञोऽब्रवीदिदम् ॥ २६४
सौते किं ते व्यवसितं कस्माद्यासि पराङ्मुखः ।
कच्चित्सौते न ते मोहः शाल्वं दृष्ट्वा महाहवे ॥ २६५
सौति० उ०—मोहितो हि रणे शूरो रक्ष्यः सारथिना रथी ।
आयुष्मंस्त्वं मया नित्यं रक्षितव्यस्तथाप्यहम् ॥ २६६
एवं ब्रुवति सूते तु तदा मकरकेतुमान् ।
उवाच सूतं कौरव्य निवर्तय रथं मम ॥ २६७
न स वृष्णिकुले जातो यो वै त्यजति संगरम् ।
यो वा निपतितं हंति तवास्मीति च वादिनम् ॥ २६८

तथा स्त्रियं च यो हंति बालं वृद्धं तथैव च ।
विरथं विप्रकीर्णं च भग्नशस्त्रायुधं तथा ॥ २६९
त्वं च सूतकुले जातो विनीतः सूतकर्मणि ।
धर्मज्ञश्चापि वृष्णीनामाहवेष्वपि दारुके ॥ २७०
अपयातं हतं पृष्ठे भ्रातं रणपलायिनम् ।
गदाग्रजो दुराधर्षः किं मां वक्ष्यति माधवः ॥ २७१
अक्रूरश्चारुदेष्णश्च बलदेवश्च सात्यकिः ।
स्त्रियश्च वृष्णिवीराणां किमा वक्ष्यति संहताः ॥ २७२
न युक्तं भवता त्यक्तुं सग्रामं दारुकात्मज ।
मयि युद्धार्थिनि भृश स त्व याहि यतो रणम् ॥ २७३
एवमुक्तस्ततः सूतो हयान्संचोद्य संगरे ।
रश्मिभिस्तु समुद्यम्य जवेनाभ्यपतत्तदा ॥ २७४
मंडलानि विचित्राणि यमकानीतराणि च ।
सव्यानि च विचित्राणि दक्षिणानि च सर्वशः ।
चकार न तियत्नेन तदद्भुतमिवाभवत् ॥ २७५
तत उत्थाय राजेंद्र शाल्वः परमदुर्मनाः ।
व्यपायात्सबलस्तूर्णं प्रद्युम्नशरपीडितः ॥ २७६
स द्वारका परित्यज्य क्रूरो वृष्णिभिरर्दितः ।
सौभमास्थाय राजेंद्र दिवमाचक्रमे तदा ॥ २७७
निवृत्ते राजसूये ते तत्राहमगमं तदा ।
अपश्यं द्वारका चाहं निर्भूषणवरस्त्रियम् ॥ २७८
रोधं मोक्षं च शाल्वेन श्रुत्वा सर्वमशेषतः ।
विनाशे शाल्वराजस्य तदैवाकरव मतिम् २७९
प्रयातोऽस्मि नरव्याघ्र बलेन महता वृतः ।
समतीत्य बहून्देशानार्तिकावतमासदम् ॥ २८०
तत्राश्रौषं नरव्याघ्र शाल्वं सागरमंतिकात् ।
प्रयांतं सौभमास्थाय तमह पृष्ठतोऽन्वयाम् २८१
मायायुद्धेन महता योधयामास मां युधि ।
तामहं माययैवाशु प्रतिगृह्य व्यनाशयम् ॥ २८२
क्षुरांतममलं चक्रं कालांतकयमोपमम् ।
अनुमंत्र्याहमतुलं तस्मै प्राहिणवं रुषा ॥ २८३

तत्समासाद्य नगरं सौभं व्यपगतत्विषम् ।
मध्येन पाटयामास क्रकचो दार्विवोच्छ्रितम् ॥ २८४
पुनश्चादाय तच्चक्रं शाल्वायेत्यहमब्रुवम् ।
द्विधा चकार शाल्वं तत्प्रजज्वाल च तेजसा ॥ २८५
तदेतत्कारणं राजन्यदह नागसाह्वयम् ।
नागमं परवीरघ्न न हि जीवेत्सुयोधनः ॥ २८६
एवमुक्त्वा महाबाहुः कौरवं पुरुषोत्तमः ।
आमंत्र्य प्रययौ श्रीमान्द्रौपद्या चार्चितोऽश्रुभिः ॥ २८७
सुभद्रामभिमन्युं च रथमारोप्य कांचनम् ।
द्वारका प्रययौ कृष्णः समाश्वास्य युधिष्ठिरम् २८८

---

७

वै० उ०—तस्मिन्दशार्हाधिपतौ प्रयाते युधिष्ठिरो भीमसेनार्जुनौ च ।
यमौ च कृष्णा च पुरोहितश्च रथान्महार्हान्परमाश्व युक्तान् ॥ २८९
आस्थाय वीराः सहिता वनाय प्रतस्थिरे भूतपतिप्रकाशाः ।
हिरण्यनिष्कान्वसनानि गाश्च प्रादाय शिक्षाक्षरमंत्रविद्भ्यः ॥ २९०
तत्सालतालाम्रमधुकनीपकदम्बसर्जार्जुनकर्णिकारैः ।
तपात्यये पुष्पधरैरुपेतं युधिष्ठिरो द्वैतवनं ददर्श ॥ २९१
महाद्रुमाणां शिखरेषु तस्थुर्मनोरमां वाचमुदीरयन्तः ।
मयूरदात्यूहचकोरसंघास्तस्मिन्वने बर्हिण कोकिलाश्च ॥ २९२
करेणुयूथैः सह यूथपानां मदोत्कटानामचलप्रभाणाम् ।
महान्ति यूथानि महाद्विपानां तस्मिन्वने राष्ट्रपतिर्ददर्श ॥ २९३
ततः स यानादवरुह्य राजा सभ्रातृकः सजनः काननं तत् ।
विवेश धर्मात्मवतां वरिष्ठस्त्रिविष्टपं शक्र इवामितौजाः ॥ २९४
तत्काननं प्राप्य नरेंद्रपुत्राः सुखोचिता वासमुपेत्य कृच्छ्रम् ।
विजह्रुरिंद्रप्रतिमाः शिवेषु सरस्वतीशालवनेषु तेषु ॥ २९५
अपेत्य राष्ट्राद्वसतां तु तेषामृषिः पुराणोऽतिथिराजगाम ।
तमाश्रमं तीव्रसमृद्धतेजा मार्कंडेयः श्रीमतां पांडवानाम् ॥ २९६
मा० उ०—तवापदं त्वद्य समीक्ष्य रामं सत्यव्रतं दाशरथिं स्मरामि ।
स चापि राजा सह लक्ष्मणेन वने निवासं पितुरेव शासनात् ।
धन्वी चरन्पार्थ मयैव दृष्टो गिरेः पुरा ऋष्यमूकस्य सानौ ॥ २९७

स चापि शक्रस्य समप्रभावो महानुभावः समरेष्वजेयः ।
विहाय भोगानचरद्वनेषु नेशे बलस्येति चरेदधर्मम् ॥ २९८
भूपाश्च नाभागभगीरथाद्यो महीमिमां सागरांतां विजित्य ।
सत्येन तेऽप्यजयंस्तात लोकान्नेशे बलस्येति चरेदधर्मम् ॥ २९९
महान्बलान्पर्वतकूटमात्रान्विषाणिनः पश्य गजान्नरेंद्र ।
स्थितान्निदेशे नरवर्य धातुर्नेशे बलस्येति चरेदधर्मम्॥ ३००
सत्येन धर्मेण यथार्हवृत्या ह्रिया यथा सर्वभूतानतीत्य ।
यशश्च तेजश्च तवापि दीप्तं विभावसोर्भास्करस्येव पार्थ ॥ ३०१
तमेवमुक्त्वा वचनं महर्षिस्तपस्विमध्ये सहितं सुहृद्भिः ।
आमंत्र्य धौम्यं सहिताश्च पार्थास्ततः प्रतस्थ दिशमुत्तरां सः ॥ ३०२

वै० उ०—वसत्सु वै द्वैतवने पांडवेषु महात्मसु ।
ब्रह्मलोकसमं पुण्यमासीद्द्वैतवनं सरः ॥ ३०३
यजुषामृचां साम्नां च गद्यानां चैव सर्वशः ।
आसीदुच्चार्यमाणानां निस्वनो हृदयंगमः ॥ ३०४
ज्याघोषश्चैव पार्थानां ब्रह्मघोषश्च धीमताम् ।
संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यरोचत ॥ ३०५
अथाब्रवीद्बको दाल्भ्यो धर्मराजं युधिष्ठिरम् ।
संध्यां कौंतेयमासीनं ऋषिभिः परिवारितम् ॥ ३०६
ब्रह्मक्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह ।
उदीर्णे दहतः शत्रून्वनानीवाग्निमारुतौ ॥ ३०७
कुंजरस्येव संग्रामे परिगृह्यांकुशग्रहम् ।
ब्राह्मणैर्विप्रहीनस्य क्षत्रस्य क्षीयते बलम् ॥ ३०८
नाब्राह्मणस्तात चिरं बुभूषेदिच्छन्निमं लोकममुं च जेतुम् ।
विनीतधर्मार्थमपेतमोहं लब्ध्वा द्विजं नुदति नृपः सपत्नान् ॥ ३०९
ब्रह्मण्यनुपमा दृष्टिः क्षात्रमप्रतिमं बलम् ।
तौ यदा चरतः सार्धं तदा लोकः प्रसीदति ॥ ३१०
ब्राह्मणेष्वेव मेधावी बुद्धिपर्येषणं चरेत् ।
अलब्धस्य च लाभाय लब्धस्य परिवृद्धये ॥ ३११
ब्राह्मणेषूत्तमा वृत्तिस्तव नित्यं युधिष्ठिर ।
तेन ते सर्वलोकेषु दीप्यते प्रथितं यशः ॥ ३१२

---

## ८

वै० उ०—ततो वनगताः पार्थाः सायाह्ने कृष्णया सह ।
उपविष्टाः कथाश्चक्रुर्दुःखशोकपरायणाः ॥ ३१३
प्रिया च दर्शनीया च पंडिता च पतिव्रता ।
अथ कृष्णा धर्मराजमिदं वचनमब्रवीत् ॥ ३१४
न नून तस्य पापस्य दुःखमस्मासु किंचन ।
विद्यते धार्तराष्ट्रस्य नृशसस्य दुरात्मन ३१५
यस्त्वां राजन्मया सार्धमजिनैः प्रतिवासितम् ।
वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्मतिः ॥ ३१६
आयसं हृदयं नूनं तस्य दुष्कृतकर्मणः ।
यस्त्वां धर्मपरं श्रेष्ठं रूक्षाण्यश्रावयत्तदा ॥ ३१७
चतुर्णामेव पापानामस्रं न पतितं तदा ।
त्वयि भारत निष्क्राते वनायाजिनवाससि ॥ ३१८
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुर्भ्रातुस्तस्य चोग्रस्य राजन्दुःशासनस्य च ३१९
इतरेषा तु सर्वेषा कुरूणां कुरुसत्तम ।
दुःखेनाभिपरीतानां नेत्रेभ्यः प्रापतज्जलम् ॥ ३२०
नूनं च तव वै नास्ति मन्युर्भरतसत्तम ।
यत्ते भ्रातृंश्च मां चैव दृष्ट्वा न व्यथते मनः ॥ ३२१
त्वत्प्रतिज्ञा प्रतीक्षंस्तु सहतेऽयं वृकोदरः ।
योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ॥ ३२२
यो न दर्शयते तेजः क्षत्रियः काल आगते ।
सर्वभूतानि तं पार्थ सदा परिभवत्युत ॥ ३२३
अत्राप्युदाहरतीममितिहासं पुरातनम् ।
बलिः पप्रच्छ दैत्येंद्रं प्रल्हादं पितरं पितुः ॥ ३२४
क्षमा स्विच्छ्रेयसी तात उताहो तेज इत्युत ।
तस्मै प्रोवाच तत्सर्वमेवं पृष्टः पितामहः ॥ ३२५
न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा ।
यो नित्यं क्षमते तात बहून्दोषान्स विंदति ॥ ३२६
भृत्याः परिभवंत्येनमुदासीनास्तथारयः ।
सर्वभूतानि चाप्यस्य न नमते कदाचन ॥ ३२७

यानं वस्त्राण्यलंकाराञ्छयनान्यासनानि च ।
आददीरन्नधिकृता यथाकाममचेतसः ॥ ३२८
क्षमिणं तादृशं तात ब्रुवंति कटुकान्यपि ।
प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः ॥ ३२९
अप्यस्य दारानिच्छंति परिभूय क्षमावत ।
दाराश्चास्य प्रवर्तंते यथाकाममचेतसः ३३०
एते चान्य च बहवो नित्यं दोषाः क्षमावताम् ।
अथ वैरोचने दोषानिमान्विद्ध्यक्षमावताम् ॥ ३३१
मित्रैः सह विरोधं हि प्राप्नुते तेजसा वृतः ।
आप्नोति द्वेष्यता चैव लोकात्स्वजनतस्तथा ॥ ३३२
सोऽवमानादर्थहानिमुपालंभमनादरम् ।
संतापद्वेषमोहांश्च शत्रूंश्च लभते नरः ॥ ३३३
भ्रश्यते शीघ्रमैश्वर्यात्प्राणेभ्यः स्वजनादपि ।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ ३३४
तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत् ।
काले काले तु संप्राप्ते मृदुस्तीक्ष्णोऽपि वा भवेत् ॥ ३३५
क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान् ।
पूर्वोपकारी यस्ते स्यादपराधे गरीयसि ।
उपकारेण तत्तस्य क्षंतव्यमपराधिनः ॥ ३३६
अबुद्धिमाश्रितानां तु क्षंतव्यमपराधिनाम् ।
सर्वस्यैकोऽपराधस्ते क्षंतव्यः प्राणिनो भवेत् ॥ ३३७
मृदुना दारुणं हंति मृदुना हंत्यदारुणम् ।
नासाध्यं मृदुना किंचित्तस्मात्तीव्रतरं मृदु ॥ ३३८
नादेशकाले किंचित्स्याद्देशकालौ प्रतीक्ष्यताम् ।
तथा लोकभयाच्चैव क्षंतव्यमपराधिनः ॥ ३३९
एत एवंविधाः कालाः क्षमायाः परिकीर्तिताः ।
अतोऽन्यथानुवर्तत्सु तेजसः काल उच्यते ॥ ३४०
तदहं तेजसः कालं तव मन्ये नराधिप ।
धार्तराष्ट्रेषु लुब्धेषु सततं चापकारिषु ॥ ३४१
यु० उ०—क्रुद्धो हि कार्यं सुश्रोणि न यथावत्प्रपश्यति ।
हंत्यवध्यानपि क्रुद्धो गुरून्क्रुद्धस्तुदत्यपि ॥ ३४२

यो हि क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते ।
तेजस्विनं तं विद्वांसो मन्यंते तत्वदर्शिनः । ३४३
दाक्ष्यं ह्यमर्षः शौर्यं च शीघ्रत्वमिति तेजसः ।
गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमंजसा ॥ ३४४
हन्युर्हि पितरः पुत्रान्पुत्राश्चापि तथा पितॄन् ।
हन्युश्च पतयो भार्याः पतीन्भार्यास्तथैव च ॥ ३४५
एवं संकुपिते लोके जन्म कृष्णे न विद्यते ।
प्रजाना संधिमूलं हि जन्म विद्धि शुभानने ॥ ३४६
तथा मन्युर्विनाशाय प्रजानामभवाय च ।
अत्राप्युदाहरंतीमा गाथा गीताः क्षमावताम् ॥ ३४७
क्षमा धर्मः क्षमा यज्ञ क्षमा वेदाः क्षमा श्रुतिः ।
य एतदेवं जानाति स सर्वं क्षंतुमर्हति ॥ ३४८
क्षमा तपः क्षमा शौचं क्षमयेदं धृतं जगत् ।
क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम् ॥ ३४९
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
यदा हि क्षमते सर्व ब्रह्म सपद्यते तदा ॥ ३५०
इति गीताः काश्यपेन गाथा नित्यं क्षमावताम् ।
श्रुत्वा गाथाः क्षमायास्त्व तुष्य द्रौपदि मा क्रुधः ॥ ३५१
कालोऽय दारुणः प्राप्तो भरतानामभूतये ।
निश्चितं मे सदैवैतत्पुरस्तादपि भाविनि ॥ ३५२
सुयोधनो नार्हतीति क्षमामेवं न विंदति ।
अर्हस्तत्राहमित्येवं तस्मान्मां विंदते क्षमा ॥ ३५३

---

## ९

द्रौं० उ०—नमो धात्रे विधात्रे च यौ मोहं चक्रतुस्तव ।
पितृपैतामहे वृत्ते वोढव्ये तेऽन्यथा मतिः ॥ ३५४
कर्मभिश्चिंतितो लोको गत्या गत्यां पृथग्विधः ।
तस्मात्कर्माणि नित्यानि लोभान्मोक्षं यियासति ॥ ३५५
नेहः धर्मानृशंस्याभ्यां न क्षांत्या नार्जवेन च ।
पुरुषः श्रियमाप्नोति न घृणित्वेन कर्हिचित् ॥ ३५६

भीमसेनार्जुनौ चेमौ माद्रेयौ च मया सह ।
त्यजेस्त्वमिति मे बुद्धिर्न तु धर्मं परित्यजेः ॥ ३५७
अनन्या हि नरव्याघ्र नित्यदा धर्ममेव ते ।
बुद्धिःसततमन्वेति च्छायेव पुरुष निजा ॥ ३५८
नावमंस्था हि सदृशान्नावरान् श्रेयसः कुतः ।
अवाप्य पृथिवीं कृत्स्नां न ते श्रृंगमवर्धत ॥ ३५९
स्वाहाकारैः स्वधाभिश्च पूजाभिरपि च द्विजान् ।
दैवतानि पितृंश्चैव सततं पार्थ सेवसे ॥ ३६०
अस्मिन्नपि महारण्ये विजने दस्युसेविते ।
राष्ट्रादपेत्य वसतो धर्मस्ते नावसीदति ॥ ३६१
ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः ।
कथमक्षव्यसनजा बुद्धिरापतिता तव ॥ ३६२
अतीव मोहमायाति मनश्च परिदूयते ।
निशम्य ते दुःखमिदामिमां चापदमीदृशीम् ॥ ३६३
धातैव खलु भूतानां सुखदुःखे प्रियाप्रिये ।
दधाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ ३६४
यथा दारुमयी योषा नरवीर समाहिता ।
ईरयत्यंगमंगानि तथा राजन्निमाः प्रजाः ॥ ३६५
आकाश इव भूतानि व्याप्य सर्वाणि भारत ।
ईश्वरो विदधातीह कल्याणं यच्च पातकम् ॥ ३६६
शकुनिस्तंतुबद्धो वा नियतोऽयमनीश्वरः ।
ईश्वरस्य वशे तिष्ठेन्नान्येषां नात्मनः प्रभुः ॥ ३६७
स्रोतसां मध्यमापन्नः कूलाद्वृक्ष इव च्युतः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव वा ॥ ३६८
आर्ये कर्मणि युंजानः पापे वा पुनरीश्वरः ।
व्याप्य भूतानि चरते न चायमिति लक्ष्यते ॥ ३६९
यथा काष्ठेन वा काष्ठमश्मानं चाश्मना पुनः ।
अयसा चाप्ययश्छिंद्यान्निर्विचेष्टमचेतनम् ॥ ३७०
एवं स भगवान्देवः स्वयंभूः प्रपितामहः ।
हिनास्ति भूतैर्भूतानि छद्म कृत्वा युधिष्ठिर ॥ ३७१

संप्रयोज्य वियोज्यायं कामकारकरः प्रभुः ।
क्रीडते भगवान्भूतैर्बालःक्रीडनकैरिव ॥ ३७२
न मातृपितृवद्राजन्धाता भूतेषु वर्तते ।
रोषादिव प्रवृत्तोऽयं यथायमितरो जनः ॥ ३७३
आर्यान्शीलवतो दृष्ट्वा ह्रीमतो वृत्तिकर्शितान् ।
अनार्यान्सुखिनश्चैव विह्वलानिव चिंतया ॥ ३७४
तवेमामापदं दृष्ट्वा समृद्धिं च सुयोधने ।
धातारं गर्हये पार्थ विषमं योऽनुपश्यति ॥ ३७५
आर्यशास्त्रातिगे क्रूरे लुब्धे धर्मापचायिनि ।
धार्तराष्ट्रे श्रियं दत्वा धाता किं फलमश्नुते ॥ ३७६
कर्म चेत्कृतमन्वेति कर्तारं नान्यमृच्छति ।
कर्मणा तेन पापेन लिप्येत ननमीश्वरः ३७७
अथ कर्मकृतं पापं न चेत्कर्तारमृच्छति ।
कारणं बलमेवेह जनाञ्शोचामि दुर्बलान् ॥ ३७८
युo उo—वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि त्वया वचः ।
उक्तं तच्छ्रुतमस्माभिर्नास्तिक्यं तु प्रभाषसे ॥ ३७९
नाहं कर्मफलान्वेषी राजपुत्रि चराम्युत ।
ददामि देयमित्येव यजे यष्टव्यमित्युत ॥ ३८०
धर्मं चरामि सुश्रोणि न धर्मफलकारणात ।
धर्मवाणिज्यको हीनो जघन्यो धर्मवादिनाम् ॥ ३८१
न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ।
पापीयान्स हि शूद्रेभ्यस्तस्करेभ्यो विशिष्यते ।
शास्त्रातिगो मंदबुद्धिर्यो धर्ममभिशंकते ॥ ३८२
व्यासो वसिष्ठो मैत्रेयो नारदो लोमशः शुकः ।
एते हि धर्ममेवादौ वर्णयंति सदानघ ॥ ३८३
अतो नार्हसि कल्याणि धातारं धर्ममेव च ।
राज्ञि मूढेन मनसा क्षेप्तुं शंकितुमेव च ॥ ३८४
धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ।
शिष्टैराचरितं धर्मं कृष्णे मास्माभिशंकिथाः ॥ ३८५
अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः ।
अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिंदिते ॥ ३८६

तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥ ३८७
नाचरिष्यन्परे धर्मं परे परतरे च ये ।
विप्रलंभोऽयमत्यंतं यदि स्युरफलाः क्रियाः ॥ ३८८
त्वमात्मनो विजानीहि जन्म कृष्णे यथा श्रुतम् ।
एतावदेव पर्याप्तमुपमानं शुचिस्मिते ॥ ३८९
कर्मणां फलमाप्नोति धीरोल्पेनापि तुष्यति ।
बहुना ह्यप्यविद्वांसो नैव तुष्यंत्यबुद्धयः ३९०
कर्मणां श्रुतपुण्यानां पापानां च फलोदयः ।
प्रभवश्चात्मयश्चैव देवगुह्यानि भाविनि ॥ ३९१
कृताशाश्च व्रताशाश्च तपसा दग्धकिल्बिषाः ।
प्रसादैर्मानसर्युक्ताः पश्यंत्येतानि वै द्विजाः ॥ ३९२
न फलादर्शनाद्धर्मः शंकितव्यो न देवताः ।
कर्मणां फलमस्तीह तथैतद्धर्मशाश्वतम् ॥ ३९३
ईश्वरं चापि भूतानां मावमंस्थाः कथंचन ।
शिक्षस्वैनं नमस्वैनं मा तेऽभूद्बुद्धिरीदृशी ॥ ३९४

द्रौ० उ०—नावमन्ये न गर्हे च धर्मं पार्थ कथंचन ।
ईश्वरं कुत एवाहमवमंस्ये प्रजापतिम् ॥ ३९५
आर्ताहं प्रलपामीदमिति मां विद्धि भारत ।
भूयश्च विलपिष्यामि सुमनास्त्वं निबोध मे ॥ ३९६
कर्म खल्विह कर्तव्यं जानता मित्रकर्शन ।
अकर्माणो हि जीवंति स्थावरा नेतरे जनाः ॥ ३९७
सर्वे हि स्वं समुत्थानमुपजीवंति जंतवः ।
अपि धाता विधाता च यथायमुदके बकः ॥ ३९८
अकर्मणां वै भूतानां वृत्तिः स्यान्न हि काचन ॥ ३९९
स कर्म कुरु माग्लासीः कर्मणा भव दंशितः ।
कृतं हि योऽभिजानाति सहस्रे सोऽस्ति नास्ति च ॥ ४००
यश्च दिष्टपरो लोके यश्चापि हठवादिकः ।
उभावपि शठावेतौ कर्मबुद्धिः प्रशस्यते ॥ ४०१
अकस्मादिह यः कश्चिदर्थं प्राप्नोति पूरुषः ।
तं हठेनेति मन्यंते स हि यत्नो न कस्यचित् ॥ ४०२

यच्च दैवेन विधिना तद्दैवमिति निश्चितम् ।
यत्स्वयं कर्मणा किंचित्तत्पौरुषमिति श्रुतम् ॥ ४०३
स्वभावतः प्रवृत्तो यः प्राप्नोत्यर्थं न कारणात् ।
तत्स्वभावात्मकं विद्धि फलं पुरुषसत्तम ॥ ४०४
एवं हठाच्च दैवाच्च कर्मणश्च स्वभावतः ।
प्राप्नोति धातृविहितं पूर्वकर्मफलोदयम् ॥ ४०५
कर्तृत्वादेव पुरुषः कर्मसिद्धौ प्रशस्यते ।
असिद्धौ निंद्यते चापि कर्मनाशात्कथं त्विह ॥ ४०६
कर्तव्यमेव कर्मेति मनोरेष विनिश्चयः ।
एकांतेन ह्यनीहोयं पराभवति पूरुषः ॥ ४०७
एकांतफलसिद्धिं तु न विंदत्यलसः क्वचित् ।
निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते ॥ ४०८
एकांतेन ह्यनर्थोऽयं वर्ततेऽस्मासु सांप्रतम् ।
स तु निःसंशयं न स्यात्त्वयि कर्मण्यवस्थिते ॥ ४०९
पृथिवीं लांगलेनेव भित्त्वा बीजं वपत्यत ।
वृष्टश्चन्नानुगृह्णीयादनेनाग्तत्र कर्षकः ॥ ४१०
सिद्धिर्वाप्यथवाऽसिद्धिरप्रवृत्तिरतोऽन्यथा ।
अनारंभे हि न फलं न गुणो दृश्यते क्वचित् ॥ ४११
देशकालावुपायांश्च मंगलं स्वस्तिवृद्धये ।
युनक्ति मेधया धीरो यथाशक्ति यथाबलम् ॥ ४१२
नीतिर्बृहस्पतिप्रोक्ता श्रुता मे पितुरंतिके ।
यां पूर्वं ब्राह्मणः प्राह पित्रे मे भरतर्षभ ॥ ४१३

---

## १०

वै० उ०—याज्ञसेन्या वचः श्रुत्वा भीमसेनो ह्यमर्षणः ।
निश्वसन्नुपसंगम्य क्रुद्धो राजानमब्रवीत् । ४१४
धर्मलेशप्रतिच्छन्नः प्रभवं डर्मकामयोः ।
अर्थत्सृज्य किं राजन् दुःखेषु परितप्यसे ॥ ४१५
कर्णीनामिव बिल्वानि पंगूनामिव धेनवः ।
हृतमैश्वर्यमस्माकं जीवतां भवत कृते ॥ ४१६

भवतः प्रियमित्येव महद्व्यसनमीदृशम् ।
धर्मकामे प्रतीतस्य प्रतिपन्नाः स्म भारत ॥ ४१७
यद्वयं न तदैवैतान् धार्तराष्ट्रान्निहन्महि ।
भवतः शास्त्रमादाय तन्नस्तपति दुष्कृतम् ॥ ४१८
स भवान् दृष्टिमान् शक्तः पश्यन्नस्मासु पौरुषम् ।
आनृशंस्यपरो राजन्नानर्थमवबुध्यसे ॥ ४१९
कर्षणार्थो हि यो धर्मो मित्राणामात्मनस्तथा ।
व्यसन नाम तद्राजन् न धर्मः स कुधर्मतत् ॥ ४२०
सर्वथा धर्ममूलोऽर्थो धर्मश्चार्थपरिग्रहः ।
इतरेतरयोर्नीतौ विद्धि मेघोदधी यथा ॥ ४२१
न धर्मपर एव स्यान्न चार्थपरमो नरः ।
न कामपरमो वा स्यात्सर्वान्सेवेत सर्वदा ॥ ४२२
धर्मं पूर्वे धनं मध्ये जघन्ये काममाचरेत् ।
अहन्यनुचरेदेवमेष शास्त्रकृतो विधि. ॥ ४२३
काम पूर्वे धनं मध्ये जघन्ये धर्ममाचरेत् ।
वयस्यनुचरेदेवमेष शास्त्रकृतो विधि. ॥ ४२४
मोक्षो वा परम श्रेयः प्राप्तिर्वापि सुखार्थिनाम् ।
जीवित ह्यातुरस्येव दुःखान्तरवार्तिनः ॥ ४२५
विदितश्चैव मे धर्म. सतत चारितश्च ते ।
जानंतस्त्वयि शसंति सुहृद कर्मचोदनाम् ॥ ४२६
दान यज्ञाः सता पूजा वेदधारणमार्जवम् ।
एष धर्म परो राजन् बलवान्प्रेत्य चेह च ॥ ४२७
एष नार्थविहीनेन शक्यो राजन्निषेवितुम् ।
न चार्थो भैक्ष्यचर्येण नापि क्लैब्येन कर्हिचित् ॥ ४२८
न हि केवलधर्मात्मा पृथिवीं जातु कश्चन ।
पार्थिवो व्यजयद्राजन्न भूति न पुनः श्रियम् ॥ ४२९
भ्रातरः पूर्वजाताश्च सुसमृद्धाश्च सर्वशः ।
निकृत्या निर्जिता देवैरसुराः पार्थिवर्षभ ॥ ४३०
एवं बलवतः सर्वमिति मत्वा महीपते ।
जहि शत्रून्महाबाहो परां निकृतिमास्थितः ॥ ४३१

यदेनः कुरुते किंचिद्राजा भूमिमवाप्नुवन् ।
सर्वं तन्नुदते पश्चाद्यज्ञैर्विपुलदक्षिणैः ॥ ४३२
श्वदृतौ क्षीरमासक्तं ब्रह्म वा वृषले यथा ।
सत्यं स्तेने बलं नार्यां राज्यं दुर्योधने तथा ॥ ४३३
स भवान् रथमास्थाय सर्वोपकरणान्वितम् ।
त्वरमाणोऽभिनिर्यातु विप्रेभ्योऽर्थविभावकः ॥ ४३४
न हि गांडीवमुक्तानां शराणां गार्ध्रवाससाम् ।
स्पर्शमाशीविषाभानां मर्त्यः कश्चन संसहेत् ॥ ४३५
न स वीरो न मातंगो न च सोऽश्वोऽस्ति भारत ।
यः सहेत गदावेगं मम क्रुद्धस्य संयुगे ॥ ४३६
यु० उ०—असंशयं भारत सत्यमेतद्यन्मां तुदन्वाक्यशल्यैः क्षिणोषि ।
न त्वा विगर्हे प्रतिकूलमेव ममानयाद्धि व्यसनं व आगात् ॥ ४३७
स नो राजा धृतराष्ट्रस्य पुत्रो न्यपातयद्व्यसने राज्यमिच्छन् ।
दास्यं च नोऽगमयद्भीमसेन यत्राभवच्छरणं द्रौपदी नः ॥ ४३८
त्वं चापि तद्वेत्थ धनंजयश्च पुनर्द्यूतायागतास्तां सभां नः ।
यन्माब्रवीद्धृतराष्ट्रस्य पुत्र एकग्लहार्थं भरतानां समक्षम् ॥ ४३९
तं संधिमास्थाय सतां सकाशे को नाम जह्यादिह राज्यहेतोः ।
आर्यस्य मन्ये मरणाद्गरीयो यद्धर्ममुत्क्रम्य महीं प्रशासेत् ॥ ४४०
तदैव चेद्वीर कर्माकरिष्यो यदा द्यूते परिघं पर्यमृक्षः ।
बाहू दिधक्षन्वारितः फाल्गुनेन किं दुष्कृतं भीम तदाभविष्यत् ॥ ४४१
प्रागेव चैवं समयक्रियायां किं नाब्रवीः पौरुषमाविदानः ।
प्राप्तं तु कालमभिपद्य पश्चात्किं मामिदानीमतिवेलमात्थ ॥ ४४२
न त्वद्य शक्यं भरतप्रवीर कृत्वा यदुक्तं कुरुवीरमध्ये ॥
कालं प्रतीक्षस्व सुखोदयस्य पक्तिं फलानामिव बीजवाप. ॥ ४४३
मम प्रतिज्ञां च निबोध सत्यां वृणे धर्मममृताज्जीविताच्च ।
राज्यं च पुत्राश्च यशो धनं च सर्वं न सत्यस्य कलामुपैति ॥ ४४४
भी०उ०—यो नूनममितायुः स्यादथवापि प्रमाणवित् ।
स कालं वै प्रतीक्षेत सर्वप्रत्यक्षदर्शिवान् ॥ ४४५
यो न यातयते वैरमल्पसत्त्वोद्यमः पुमान् ।
अफलं जन्म तस्याहं मन्ये दुर्जातजायिनः ॥ ४४६

नातः पापीयसी काचिदापद्राजन्भविष्यति ।
यन्नो नीचैरल्पबलै राज्यमाच्छिद्य भुज्यते ॥ ४४७
श्रोत्रियस्येव ते राजन्मंदकस्याविजानतः ।
अनुवाकहता बुद्धिर्नैषा तत्वार्थदर्शिनी ॥ ४४८
तृणानां मुष्टिनैकेन हिमवंतं नु पर्वतम् ।
छन्नमिच्छसि कौंतेय योऽस्मान्संवर्तुमिच्छसि ॥ ४४९
हस्ती श्वेत इवाज्ञातः कथं जिष्णुश्चरिष्यति ।
नकुलः सहदेवो वा द्रौपदी वीरसूरियम् ॥ ४५०
मां चापि राजन् जानंति ह्याकुमारमिमाः प्रजाः ।
नाज्ञातचर्यां पश्यामि मेरोरिव निगूहनम् ॥ ४५१
अस्माभिरुषिताः सम्यक् वने मासास्त्रयोदश ।
अस्ति मासः प्रतिनिधिर्यथाप्राहमनीषिण. ॥ ४५२
अथवाऽनडुहे राजन् साधवे स धुवाहिने ।
सौहित्यदानादेतस्मादेनसः प्रतिमुच्यते ।
तस्माच्छत्रुवधे राजन् क्रियतां निश्चयस्त्वया ॥ ४५३
भीमसेनवचः श्रुत्वा कुंतीपुत्रो युधिष्ठिरः ।
निश्वस्य पुरुषव्याघ्रः संप्रदध्यौ परंतपः ॥ ४५४
स मुहूर्तमिव ध्यात्वा विनिश्चित्येतिकृत्यताम् ।
भीमसेनमिदं वाक्यमपदांतरमब्रवीत् ॥ ४५५
महापापानि कर्माणि यानि केवलसाहसात् ।
आरभ्यन्त भीमसेन व्यथंते तानि भारत ॥ ४५६
सुमन्त्रिते सुविक्रांते सुकृते सुविचारिते ।
सिद्ध्यंत्यर्था महाबाहो दैवं चात्र प्रदक्षिणम् ॥ ४५७
समा यद्यपि भीष्मस्य वृत्तिरस्मासु तेषु च ।
द्रोणस्य च महाबाहो कृपस्य च महात्मनः ॥ ४५८
अवश्यं राजपिंडस्तैर्निर्वेश्य इति मे मतिः ।
तस्मात्त्यक्ष्यंति संग्रामे प्राणानपि सुदुस्त्यजान् ॥ ४५९
सर्वे दिव्यास्त्रविद्वांसः सर्वे धर्मपरायणाः ।
अजेयाश्चेति मे बुद्धिरपि देवैः सवासवैः ॥ ४६०
अमर्षी नित्यसंरब्धस्तत्र कर्णो महारथः ।
सर्वास्त्रविदनाधृष्यो ह्यभेद्यकवचावृतः ॥ ४६१

अनिर्जित्य रणे सर्वानेतान्पुरुषसत्तमान् ।
अशक्यो ह्यसहायेन हंतुं दुर्योधनस्त्वया ॥ ४६२
न निद्रामधिगच्छामि चिंतयानो वृकोदर ।
अति सर्वान्धनुर्ग्राहान् सूतपुत्रस्य लाघवम् ॥ ४६३
एतद्वचनमाज्ञाय भीमसेनोऽप्यमर्षणः ।
बभूव विमनास्त्रस्तो न चैवोवाच किंचन ॥ ४६४

---

११

वै० उ०—कस्यचित्त्वथ कालस्य धर्मराजो युधिष्ठिरः ।
धनंजयं सांत्वपूर्वं रहसीदमुवाच ह ॥ ४६५
यु० उ०—भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे च भारत ।
धनुर्वेदश्चतुष्पाद एतेष्वद्य प्रतिष्ठितः ॥ ४६६
दैवं ब्राह्मं मानुषं च सयत्नं साचिकित्सितम् ।
सर्वास्त्राणां प्रयोगं ते अभिजानंति कृत्स्नशः ॥ ४६७
शक्तिं न हापयिष्यति ते काले प्रतिपूजिताः ।
भवानेव प्रियोऽस्माकं त्वयि भारः समाहितः ॥ ४६८
अत्र कृत्यं प्रपश्यामि प्राप्तकालमरिंदम ।
कृष्णद्वैपायनात्तात गृहीतोपनिषन्मया ॥ ४६९
तया प्रयुक्तया सम्यक् जगत्सर्वं प्रकाशते ।
तेन त्वं ब्रह्मणा तात संयुक्तः सुसमाहितः ।
देवतानां यथाकालं प्रसादं परिपालय ॥ ४७०
इंद्रे शस्त्राणि दिव्यानि समस्तानि धनंजय ।
शक्रमेव प्रपद्यस्व स तेऽस्त्राणि प्रदास्यति ॥ ४७१
दीक्षितोऽद्यैव गच्छ त्वं द्रष्टुं देवं पुरंदरम् ।
एवमुक्त्वा धर्मराजस्तमध्यापयत प्रभुः ॥ ४७२
निदेशाद्धर्मराजस्य द्रष्टुकामः पुरंदरम् ।
धनुर्गांडीवमादाय तथाक्षय्ये महेषुधी ॥ ४७३
प्रातिष्ठत महाबाहुः स्वस्ति वाच्य च स द्विजान् ।
वधाय धार्तराष्ट्राणां निःश्वस्योर्ध्वमुदीक्ष्य च ॥ ४७४
तं तथा प्रस्थितं वीरं शालस्कंधोरुमर्जुनम् ।
मनांस्यादाय सर्वेषां कृष्णा वचनमब्रवीत् ॥ ४७५

यत्ते कुंती महाबाहो जातस्यैच्छद्धनंजय ।
तत्तेऽस्तु सर्व कौंतेय यथा च स्वयमिच्छसि ॥ ४७६
मास्माकं क्षत्रियकुले जन्म कश्चिदवाप्नुयात् ।
ब्राह्मणेभ्यो नमो नित्यं येषां भैक्ष्येण जीविका ॥ ४७७
इदं मे परम दु:ख यः सः पापः सुयोधन ।
दृष्ट्वा मा गौरिति प्राह प्रहसन्राजसंसदि ॥ ४७८
नूनं ते भ्रातरः सर्वे त्वत्कथाभिः प्रजागरे ।
रस्यन्ते वीर कर्माणि कथयंतः पुनः पुनः ॥ ४७९
नैव नः पार्थ भोगेषु न धने नोत जीविते ।
तुष्टिर्बुद्धिर्भवित्री वा त्वयि दीर्घप्रवासिनि ॥ ४८०
त्वयि नः पार्थ सर्वेषा सुखदु:खे समाहिते ।
जीवित मरण चैव राज्यमैश्वर्यमेव च ॥ ४८१
स्वस्ति तेऽस्त्वातरिक्षेभ्यः पार्थिवेभ्यश्च भारत ।
दिव्येभ्यश्चैव भूतेभ्यो ये चान्ये परिपंथिनः ॥ ४८२
एवमुक्त्वाशिष. कृष्णा विरराम यशस्विनी ॥ ४८३
ततः प्रदक्षिणं कृत्वा भ्रातॄन्धौम्यं च पाडवः ।
सोऽगच्छत्पर्वतं पुण्यमेकाह्नैव महामना ॥ ४८४
हिमवतमतिक्रम्य गंधमादनमेव च ।
अत्यक्रामत्स दुर्गाणि दिवारात्रमतंद्रितः ॥ ४८५
अत्रातरे स भगवान् सर्वपापहरो हरः ।
कैरातं वेषमास्थाय काचनद्रुमसन्निभम् ॥ ४८६
निपपात महावेगो दहनो देहवानिव ।
तन विद्धो मृगो यस्मिन्नर्जुनोऽपि शरं दधौ ॥ ४८७
ममैष लक्ष्यभूतो हि मम पूर्वपरिग्रहः ।
अवलिप्तोऽसि मंदात्मन् न मे जीवन्विमोक्ष्यसे ॥ ४८८
तस्य तद्वचन श्रुत्वा किरातस्यार्जुनस्तदा ।
रोषमाहारयामास ताडयामास चेषुभिः ॥ ४८९
मुहूर्त शरवर्ष तत्प्रतिगृह्य पिनाकधृत् ।
अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः ॥ ४९०
क्षणेन क्षीणबाणोऽथ संवृत्तः फाल्गुनस्तदा ।
भीश्चैनमाविशत्तीव्रा तं दृष्ट्वा शरसंक्षयम् ॥ ४९१

संप्रयुद्धो धनुःकोट्या कौंतेयः परवीरहा।
तदप्यस्य धनुर्दिव्यं जग्राह गिरिगोचरः ॥ ४९२
मुष्टिभिर्वज्रसंकाशैस्ततः पार्थो महाबलः।
प्रजहार दुराधर्ष धूममुत्पादयन्मुखे ॥ ४९३
ततः शक्राशनिसमैर्मुष्टिभिर्भृशदारुणैः।
किरातरूपी भगवान्मर्दयामास फाल्गुनम् ॥ ४९४
तयोर्भुजविनिष्पेषात्संघर्षणोरसस्तदा।
समजायत गात्रेषु पावकोऽगारधूमवान् ॥ ४९५
ततोऽभिपीडितैर्गात्रैर्देवदेवेन भारत।
निरुच्छ्वासोऽभवच्चैव निश्चेष्टश्चापतद्भुवि ॥ ४९६
स मुहूर्तं तथा भूत्वा सचेताः पुनरुत्थितः।
रुधिरेणाप्लुतांगस्तु पांडवो भृशदुःखितः ॥ ४९७
पपात पादयोस्तस्य ततः प्रीतो भवद्भवः।
उवाच चैनं वचसा मेघगंभीरगीर्हरः ॥ ४९८
भो भो फाल्गुन तुष्टोऽस्मि कर्मणाऽप्रतिमेन ते।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ॥ ४९९
प्रीत्या च तेऽहं दास्यामि यदस्त्रमनिवारितम्।
त्वं हि शक्तो मदीयं तदस्त्रं धारयितुं क्षणात् ॥ ५००
तच्छ्रुत्वा त्वरितः पार्थः शुचिर्भूत्वा समाहितः।
उपसंगम्य विश्वेशमधीष्वेत्यथ सोऽब्रवीत् ॥ ५०१
ततस्त्वध्यापयामास सरहस्यानिवर्तनम्।
अस्त्रं पाशुपतं पार्थं मूर्तिमंतमिवानकम् ॥ ५०२
तस्य संपश्यतस्त्वेव जगामादर्शनं विभुः।
ततोऽर्जुनः परं चक्रे विस्मयं परवीरहा ॥ ५०३
धन्योऽस्म्यनुगृहीतोऽस्मि यन्मया त्र्यंबको हरः।
पिनाकी वरदो रूपी दृष्टः स्पृष्टश्च पाणिना ॥ ५०४
इत्येवं चिंतमानस्य पार्थस्यामिततेजसः।
समाजग्मुर्लोकपालाः पूजयामास तान् जयः ॥ ५०५
दिव्यान्यस्त्राणि तस्मै ते ददुः प्रीत्या समागताः।
देवकार्यं हि सुमहत्त्वया कार्यमरिंदम।
इत्युक्त्वा ते गताः सर्वे पार्थः शत्रुनिबर्हण ॥ ५०६

चिंतयामास राजेंद्र देवराजरथं प्रति ।
रथो मातलिसंयुक्त आजगाम महाप्रभः ॥ ५०७
ततोऽर्जुनो हृष्टमना गंगायामाप्लुतः शुचिः ।
आरुरोह रथं दिव्यं द्योतयान्निव भास्करः ५०८
ददर्शाद्भुतरूपाणि विमानानि सहस्रशः ।
न तत्र सूर्यः सोमो वा द्योतते न च पावकः ॥ ५०९
स्वयैव प्रभया तत्र द्योतंते पुण्यलब्धया ।
तारारूपाणि यानीह दृश्यंते द्युतिमंति वै ॥ ५१०
ततोऽपश्यात्स्थितं द्वारि शुभं वैजयिनं गजम् ।
ऐरावतं चतुर्दंतं कैलासमिव शृंगिणम् ॥ ५११
ततो ददर्श शक्रस्य पुरींताममरावतीम् ।
सर्वर्तुकुसुमैः पुण्यैः पादपैरुपशोभिताम् ॥ ५१२
नदनं च वनं दिव्यमप्सरोगणसेवितम् ।
ददर्श दिव्यकुसुमैराह्वयद्भिरिव द्रुमैः ॥ ५१३
ततः पार्थो महाबाहुरवतीर्य रथोत्तमात ।
ददर्श साक्षाद्देवेशं पितरं पाकशासनम् ॥ ५१४
पांडुरेणातपत्रेण हेमदंडेन चारुणा ।
दिव्यगंधाधिवासेन व्यजनेन विधूयता ॥ ५१५
ततोऽभिगम्य कौंतेयः शिरसाभ्यगमद्बली ।
स चैनं वृत्तपीनाभ्यां बाहुभ्यां प्रत्यगृह्णत ॥ ५१६
ततः शक्रासने पुण्ये देवर्षिगणसेविते ।
शक्रः पाणौ गृहीत्वैनमुपावेशयदंतिके ॥ ५१७
अंगं प्रेम्णा वृत्रशत्रुरर्जुनस्य शुभं सुखम् ।
पस्पर्श पुण्यगंधेन करेण परिसांत्वयन् ॥ ५१८
एकासनोपविष्टौ तौ शोभयांचक्रतुः सभाम् ।
सूर्याचंद्रमसौ व्योम चतुर्दश्यामिवोदितौ ॥ ५१९
ततो देवाः सगंधर्वाः समादायार्घ्यमुत्तमम् ।
शक्रस्य मतमाज्ञाय पार्थमानर्चुरंजसा ॥ ५२०
प्रवेशयामासुरथो पुरंदरनिवेशनम् ॥ ५२१
एवं संपूजितो जिष्णुरुवास भवने पितुः ।
उपाशिक्षन्महास्त्राणि ससंहाराणि पांडवः ॥ ५२२

गृहीतास्त्रस्तु कौंतेयो भ्रातॄन्सस्मार पांडवः ।
पुरंदरनियोगाच्च पंच,ब्दानवसत्सुखी ॥ ५२३
चित्रसेनेन संगम्य रेमे पार्थो निरामयः ।
गीतवादित्रनृत्यादि भूय एवादिदेश ह ॥ ५२४

---

## १२

वै० उ०—कदाचिदथ तं शक्रश्चित्रसेनं रहोऽब्रवीत् ।
पार्थस्य चक्षुरुर्वश्यां सक्तं विज्ञाय वासवः ॥ ५२५
गंधर्वराज गच्छाद्य प्रहितोऽप्सरसां वराम् ।
उर्वशी पुरुषव्याघ्र सोपातिष्ठतु फाल्गुनम् ॥ ५२६
एवमुक्तस्तथेत्युक्त्वा सोऽभ्यगादुर्वशीं वराम् ।
प्रत्युवाचोर्वशी प्रीता चित्रसेनमनिन्दिता ॥ ५२७
महेन्द्रस्य नियोगेन त्वत्तः संप्रणयेन च ।
तस्य चाहं गुणौघेन फाल्गुने जातमन्मथा ॥ ५२८
ततो विसृज्य गन्धर्वं कृतकृत्यं शुचिस्मिता ।
उर्वशी चाकरोत्स्नानं पार्थप्रार्थनलालसा ॥ ५२९
स्नानालंकरणैर्हृद्यैर्गंधमाल्यैश्च सुप्रभैः ।
धनंजयस्य रूपेण शरैर्मन्मथचोदितैः ॥ ५३०
निर्गम्य चंद्रोयने विगाढरजनीमुखे ।
प्रस्थिता सा पृथुश्रोणी पार्थस्य भवनं प्रति ॥ ५३१
मृदुकुंचितदीर्घेण कुमुदोत्करधारिणा ।
केशहस्तेन ललना जगामाथ विराजिता ॥ ५३२
भ्रूक्षेपालापमाधुर्यैः कांत्या सौम्यतयापि च ।
शशिनं वक्त्रचंद्रेण साऽऽह्वयंतीव गच्छती ॥ ५३३
स्तनोद्वहनसंक्षोभान्नम्यमाना पदे पदे ।
त्रिवलीदामचित्रेण मध्येनातीव शोभिना ॥ ५३४
गूढगुल्फधरौ पादौ ताम्रायततलांगुली ।
कूर्मपृष्ठोन्नतौ चापि शोभेते किंकिणीकिणौ ॥ ५३५
सीधुपानेन चाल्पेन तुष्ट्या च मदनेन च ।
विलासनैश्च विविधैः प्रेक्षणीयतराभवत् ॥ ५३६

सुसूक्ष्मेणोत्तरीयेण मेघवर्णेन राजता ।
तनुरभ्रावृता व्योम्नि चंद्रलेखेव गच्छती ॥ ५३७
ततः प्राप्ता क्षणेनैव भवनं फाल्गुनस्य च ।
अर्जुनस्य नरश्रेष्ठ द्वारस्थैश्च निवेदिता ॥ ५३८
स शंकितमना राजन् प्रत्युद्गच्छत तां निशि ।
दृष्ट्वैव चोर्वशीं पार्थो लज्जासंवृतलोचनः ॥ ५३९
अ० उ०—अभिवादये त्वा शिरसा प्रवराप्सरसां वरे ।
किमाज्ञापयसे देवि प्रेष्यस्तेऽहं समुत्थितः ॥ ५४०
फाल्गुनस्य वचः श्रुत्वा गतसंज्ञा ततोर्वशी ।
गंधर्ववचनं सर्वं श्रावयामास तं तदा ॥ ५४१
तां तथा ब्रुवतीं श्रुत्वा भृशं लज्जावृतोऽर्जुनः ।
उवाच कर्णौ हस्ताभ्यां पिधाय त्रिदशालये ॥ ५४२
दुःश्रुतं मेऽस्तु सुभगे यन्मां वदसि भाविनी ।
गुरुदारैः समाना मे निश्चयेन वरानने ॥ ५४३
यथा कुंती महाभागा यथेंद्राणी शची मम ।
तथा त्वमपि कल्याणि नात्र कार्या विचारणा ॥ ५४४
इयं पौरववंशस्य जननी मुदितेति ह ।
त्वामहं दृष्टवांस्तत्र विज्ञायोत्फुल्ललोचनः ॥ ५४५
न मामर्हसि कल्याणि अन्यथा ध्यातुमप्सरः ।
गुरोर्गुरुतरा मे त्वं मम त्वं वंशवर्धिनी ॥ ५४६
उ० उ०—अनावृताश्च सर्वाः स्म देवराजाभिनंदन ।
गुरुस्थाने न मां वीर नियोक्तुं त्वमिहार्हसि ॥ ५४७
पुरोर्वंशे हि ये पुत्रा नप्तारो वा त्विहागताः ।
तपसा रमयंत्यस्मान्न च तेषां व्यतिक्रमः ॥ ५४८
तत्प्रसीद न मामार्तां विसर्जयितुमर्हसि ।
हृदयेनं च संतप्तां भक्तां च भज मानद ॥ ५४९
अ० उ०—शृणु सत्यं वरारोहे यत्त्वां वक्ष्याम्यनिंदिते ।
शृण्वंतु मे दिशश्चैव विदिशश्च सदेवताः ॥ ५५०
यथा कुंती च माद्री च शची च त्वं तथा मम ।
त्वं हि मे मातृवत्पूज्या रक्ष्योऽहं पुत्रवत्त्वया ॥ ५५१

एवमुक्ता तु पार्थेन उर्वशी क्रोधमूर्छिता ।
वेपंती भ्रुकुटीवक्रा शशापाथ धनंजयम् ॥ ५५२
तव पित्राभ्यनुज्ञातां स्वयं च गृहमागताम् ।
यस्मान्मां नाभिनंदेथाः कामबाणवशंगताम् । ५५३
तस्मात्त्वं नर्तनः पार्थ स्त्रीमध्ये मानवर्जितः ।
अपुमानिति विख्यातः षंढवद्विचरिष्यसि ॥ ५५४
एवं दत्वार्जुने शाप स्फुरदोष्ठी श्वसंत्यथ ।
पुनः प्रत्यागता क्षिप्रमुर्वशी गृहमात्मनः ॥ ५५५
तद्वृत्त कथयामास चित्रसेनाय पांडवः ।
आवेदयच्च शक्रस्य चित्रसेनोऽपि सर्वशः ॥ ५५६
सांत्वयन्स शुभैर्वाक्यैस्तनयं चाभ्यभाषत ॥ ५५७
इं० उ०—सपुत्राद्य पृथा तात त्वया पुत्रेण भारत ।
ऋषयोऽपि हि धैर्येण जिता वै ते महाभुज ॥ ५५८
यत्तु दत्तवती शापमुर्वशी तव मानद ।
स चापि तेऽर्थकृत्तात साधकश्च भविष्यति ॥ ५५९
अज्ञातवासो वस्तव्यो भवद्भिर्भूतलेऽनघ ।
वर्षे त्रयोदशे वीर तं शाप क्षपयिष्यसि ॥ ५६०
एवमुक्तस्तु शक्रेण फाल्गुनः परवीरहा ।
मुदं परमिकां लेभे न च शाप व्यचिंतयत् ॥ ५६१
इदममरवरात्मजस्य घोरं शुचि चरितं विनिशम्य फाल्गुनस्य ।
व्यपगतमददंभरागदोषास्त्रिदिवगताभिरमंति मानवेंद्राः ॥ ५६२

---

## १३

वै० उ०—अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
आवसन् कृष्णया सार्धं काम्यके भरतर्षभाः ॥ ५६३
रुरून् कृष्णमृगांश्चैव मेध्यांश्चान्यान्वनेचरान् ।
बाणैरुन्मथ्य विविधैर्ब्राह्मणेभ्यो न्यवेदयन् ॥ ५६४
पितॄनिव प्रियान्भ्रातॄन् ज्ञातीनिव सहोदरान् ।
पुपोष कौरवश्रेष्ठो धर्मराजो युधिष्ठिरः ॥ ५६५
पतींश्च द्रौपदी सर्वान् द्विजातींश्च यशस्विनी ।
मातृवद्भोजयित्वाग्रे शिष्टमाहारयत्तदा ॥ ५६६

ततः कदाचिदेकांते विविक्त इव शाद्वले ।
दुःखार्ता भरतश्रेष्ठा निषेदुः सह कृष्णया ॥ ५६७
धनंजयं शोचमानाः साश्रुकंठाः सुदुःखिताः ।
तद्वियोगार्दितान्सर्वान् शोकः समभिपुप्लुवे ॥ ५६८
अत्रांतरे आजगाम बृहदश्वो महानृषिः ।
धर्मात्मा मधुपर्केण पूजयामास धर्मराट् ॥ ५६९
यु० उ०—अक्षद्यूतेन भगवन् धनं राज्यं च मे हृतम् ।
आहूय निकृतिप्रज्ञैः कितवैरक्षकोविदैः ॥ ५७०
भार्या च मे सभां नीता प्राणेभ्योऽपि गरीयसी ।
प्राव्राजितो महारण्यमजिनैः परिवारितः ॥ ५७१
आर्तानां सुहृदां वाचो द्यूतप्रभृति शंसताम् ।
अहं हृदि श्रिताः स्मृत्वा सर्वरात्रीर्विचितयन् ॥ ५७२
यस्मिंश्चैव समस्तानां प्राणा गांडीवधन्वनि ।
विना महात्मना तेन गतसत्व इवाभवम् ॥ ५७३
अस्ति राजा मया कश्चिदल्पभाग्यतरो भुवि ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा क्वचित् ।
न मत्तो दुःखिततरः पुमानस्तीति मे मतिः ॥ ५७४
बृहदश्व० उ०—आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥ ५७५
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः ॥ ५७६
तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।
तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ॥ ५७७
कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः ।
दमयंती दमं दांतं दमनं च सुवर्चसम् ॥ ५७८
दमयंती तु रूपेण तेजसा यशसा श्रिया ।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ॥ ५७९
न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ।
मानुषेष्वपि चान्येषु दृष्टपूर्वाथवा श्रुता ॥ ५८०
नलोऽपि नरशार्दूलो लोकेष्वप्रतिमो भुवि ।
कंदर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ ५८१

तयोरदृष्टः कामोऽभूच्छृण्वतोः सततं गुणान् ।
अन्योन्यं प्रति कौंतेय स व्यवर्धत हृच्छयः ॥ ५८२
स ददर्श ततो हंसान् जातरूपपरिष्कृतान् ।
वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥ ५८३
ततोऽतरिक्षगो वाचं व्याजहार नलं तदा ।
हंतव्योऽस्मि न ते राजन् करिष्यामि तव प्रियम् ॥ ५८४
दमयतीसकाशे त्वां कथयिष्यामि नैषध ।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥ ५८५
एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः ।
ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः ॥ ५८६
विदर्भनगरीं गत्वा दमयन्त्यास्तदांतिके ।
निपेतुस्ते गरुत्मंतः सा ददर्श च तान्गणान् ॥ ५८७
सा तानद्भुतरूपान्वै दृष्ट्वा सखिगणावृता ।
हृष्टा ग्रहीतु खगमांस्त्वरमाणोपचक्रमे ॥ ५८८
दमयंती तु य हंसं समुपाधावदंतिके ।
स मानुषीं गिरं कृत्वा दमयंतीमथाब्रवीत् ॥ ५८९
दमयंति नलो नाम निषधेषु महीपतिः ।
अश्विनो. सदृशो रूपे न समास्तस्य मानुषाः ॥ ५९०
तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि ।
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे ॥ ५९१
त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ।
विशिष्टाया विशिष्टेन संगमो गुणवान् भवेत् ॥ ५९२
एवमुक्ता तु हंसेन दमयंती विशांपते ।
अब्रवीत्तत्र तं हंसं त्वमप्येवं नले वद ॥ ५९३
तथेत्युक्त्वांडजः कन्यां विदर्भस्य विशांपते ।
पुनरागम्य निषधान् नले सर्वं न्यवेदयत् ॥ ५९४
ततः प्रभृति सा दीना विवर्णवदना कृशा ।
बभूव दमयंती तु निःश्वासपरमाभवत् ॥ ५९५
ऊर्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना ।
न नक्तं न दिवा शेते हाहेति रुदती पुनः ॥ ५९६

स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् ।
अपश्यदात्मना कार्यं दमयंत्याः स्वयंवरम् ॥ ५९७
तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः ।
त्वरिताः समुपाजग्मुर्दमयंतीमभीप्सवः ॥ ५९८
कनकस्तंभरुचिरं तोरणेन विराजितम् ।
विविशुस्ते नृपा रंगं महासिंहा इवाचलम् ॥ ५९९
सुकेशांतानि चारूणि सुनासाक्षिभ्रुवाणि च ।
मुखानि राज्ञां शोभंते नक्षत्राणि यथा दिवि ॥ ६००
दमयती ततो रंगं प्रविवेश शुभानना ।
मुष्णंती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ ६०१
तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम् ।
तत्र तत्रैव सक्ताभून्न चचाल च पश्यताम् ॥ ६०२
ततः संकीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान् पंच तुल्याकृतीनिह ॥ ६०३
संदेहादथ वैदर्भी नाभ्यजानन्नलं नृपम् ।
यं यं हि ददृशे तेषां तं तं मेने नलं नृपम् ॥ ६०४
कथं हि देवान् जानीयां कथं विद्यां नलं नृपम् ।
इति संचिंतयंती सा वैदर्भी भृशदुःखिता ॥ ६०५
वाचा च मनसा चैव नमस्कारं प्रयुज्य सा ।
देवेभ्यः प्रांजलिर्भूत्वा वेपमानेदमब्रवीत् ॥ ६०६
हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः ।
पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ॥ ६०७
मनसा वचसा चैव यथा नाभिचराम्यहम् ।
तेन सत्येन विबुधास्तमेव प्रदिशंतु मे ॥ ६०८
यथा देवैः स मे भर्ता विहितो निषधाधिप.
तेन सत्येन विबुधास्तमेव प्रदिशंतु मे ॥ ६०९
स्वं चैव रूपं कुर्वंतु लोकपाला महेश्वराः ।
यथाहमभिजानीयां पुण्यश्लोकं नराधिपम् ॥ ६१०
निशम्य दमयंत्यास्तत्करुणं परिदेवितम् ॥ ६११
निश्चयं परमं तथ्यमनुरागं च नैषधे ।
यथोक्तं चक्रिरे देवाः समर्था लिंगधारणे ॥ ६१२

सापश्यद्विबुधान्सर्वानस्वेदांस्तब्धलोचनान् ।
हृषितस्रग्रजोहीनान् स्थितानस्पृशतः क्षितिम् ॥ ६१३
सा समीक्ष्य तदा देवान्वरयामास नैषधम् ।
विलज्जमाना वस्त्रांते जग्राहायतलोचना ।
स्कंधदेशेऽसृजत्तस्य स्रज परमशोभनाम् ॥ ६१४
ततो हाहेति सहसा मुक्तः शब्दो नराधिपैः ।
देवैर्महर्षिभिस्तत्र साधुसाध्विति भारत ॥ ६१५
तौ परस्परतः प्रीतौ दृष्ट्वा त्वग्निपुरोगमान् ।
तानेव शरणं देवान् जग्मतुर्मनसा तदा ॥ ६१६
प्रहृष्टमनसस्तेऽपि नलाय ष्टौ वरान् ददुः ॥ ६१७
प्रत्यक्षदर्शनं यज्ञे शक्रो गतिमनुत्तमाम् ।
अग्निरात्मभवं प्रादाद्यत्र वांच्छति नैषध. ।
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ॥ ६१८
यमस्त्वन्नरसं प्रादाद्धर्मे च परमा स्थितिम् ।
अपांपतिरपा भावं यत्र वांछति नैषध. ॥ ६१९
स्रजश्चोत्तमगंधाढ्या सर्वे ते मिथुनं ददुः ।
वरानेव प्रदायास्य देवास्ते त्रिदिवं गताः ॥ ६२०
गतेषु पार्थिवेंद्रेषु भीमः प्रीतो महामनाः ।
विवाह कारयामास दमयन्त्या नलस्य च ॥ ६२१
भीमेन समनुज्ञातो जगाम नगरं स्वकम् ।
अवाप्य नारीरत्नं तद्रेमे शच्यत्र वृत्रहा ॥ ६२२

---

# १४

बृह० उ०—वृते तु नैषधे भैम्या लोकपाला महौजसः ।
यांतो ददृशुरायांतं द्वापर कलिना सह ॥ ६२३
श० उ०—द्वापरेण सहायेन कले ब्रूहि क यास्यसि ।
क० उ०—देवराज गमिष्यामि दमयंत्याः स्वयंवरम् ॥ ६२४
तमब्रवीत्प्रहस्येंद्रो निर्वृत्तः स स्वयंवरः ।
वृतस्तया नलो राजा पतिरस्मत्समीपतः ॥ ६२५
क० उ०—देवानां मानुषं मध्ये यत्सा पतिमविंदत ।
तत्र तस्या भवेन्न्याय्यं विपुलं दंडधारणम् ॥ ६२६

श० उ०—अस्माभिः समनुज्ञाते दमयंत्या नलो वृतः ।
का च सर्वगुणोपेतं नाश्रयेत नलं नृपम् ॥ ६२७
यो धीते चतुरो वेदान् सर्वानाख्यानपंचकान् ।
नित्यं तृप्ता गृहे यस्य देवा यज्ञेषु धर्मतः ॥ ६२८
यस्मिन्सत्य धृतिर्ज्ञानं तपः शौचं दमः शमः ।
अहिंसानिरतो यश्च सत्यवादी दृढव्रतः ॥ ६२९
एवरूपं नलं यो वै कामयेच्छापितुं कले ।
आत्मानं स शपेन्मूढो हन्यादात्मानमात्मना ॥ ६३०
ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् ।
संहर्तु नोत्सहे कोप नले वत्स्यामि द्वापर ॥ ६३१
भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते ।
त्वमप्यक्षान्समाविश्य साहाय्यं कर्तुमर्हसि ॥ ६३२
एवं स समयं कृत्वा द्वापरेण कलिः सह ।
आजगाम ततस्तत्र यत्र राजा स नैषधः ॥ ६३३
स नित्यमंतर प्रेप्सुर्निषधेष्ववसाच्चिरम् ।
अथास्य द्वादशे वर्षे ददर्श कलिरंतरम् ॥ ६३४
कृत्वा मूत्रमुपस्पृश्य संध्यामन्वास्त नैषधः ।
अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ॥ ६३५
तमासाद्य नलं वीरं पुष्करः परवीरहा ।
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहु. ॥ ६३६
न चक्षमे ततो राजा समाह्वानं महामनाः ।
वैदर्भ्याः प्रेक्षमाणाया. पणकालममन्यत ॥ ६३७
आविष्टः कलिना द्यूते जायते स्म नलस्तदा ।
तमक्षमदसंमत्तं सुहृदां न तु कश्चन ॥ ६३८
निवारणेऽभवच्छक्तो दीव्यमानमरिंदमम् ।
तथा तदभवद्द्युतं पुष्करस्य नलस्य च ॥ ६३९
पुष्करेण हृत राज्यं यच्चान्यद्वसु किंचन ।
हृतराज्यं नलं राजन् प्रहसन्पुष्करोऽब्रवीत् ॥ ६४०
शिष्टा ते दमयन्त्येका पणस्तस्याः प्रवर्तताम् ।
पुष्करेणैवमुक्तस्य पुण्यश्लोकस्य मन्युना ॥ ६४१

व्यदीर्यतेव हृदयं न चैनं किंचिदब्रवीत् ।
उत्सृज्य सर्वगोत्रेभ्यो भूषणानि महायशाः ॥ ६४२
एकवासा ह्यसंवीतो निश्चक्राम सुदुःखितः ।
दमयत्येकवस्त्राथ गच्छंतं पृष्ठतोऽन्वयात् ॥ ६४३
क्षुधया पीड्यमानस्तु नलो बहुतिथेऽहनि ।
ददर्श शकुनान्कांश्चिद्धिरण्यसदृशच्छदान् ॥ ६४४
ततस्तान्परिधानेन वाससा स समावृणोत् ।
तस्य तद्वस्त्रमादाय सर्वे जग्मुर्विहायसा ॥ ६४५
उत्पतंतः खगा वाक्यमेतदाहुस्ततो नलम् ।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् ॥ ६४६
वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः ।
आगता न हि नः प्रीतिः सवाससि गते त्वयि ॥ ६४७
पुण्यश्लोकस्तदा राजन् दमयंतीमथाब्रवीत् ।
येषां प्रकोपादैश्वर्यात्प्रच्युतोऽहमनिंदिते ॥ ६४८
इमे ते शकुना भूत्वा वासो भीरु हरंति मे ।
वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः ॥ ६४९
भर्ता तेऽहं निबोधेदं वचनं हितमात्मनः ।
एते गच्छंति बहवः पंथानो दक्षिणापथम् ॥ ६५०
अवंतीमृक्षवन्तं च समभिक्रम्य पर्वतम् ।
एष पंथा विदर्भानामसौ गच्छति कोशलान् ॥ ६५१
ततः सबाष्पकलया वाचा दुःखेन कर्षिता ।
उवाच दमयंती तं नैषधं करुणं वचः ॥ ६५२
उद्वेजते मे हृदयं सीदंत्यंगानि सर्वशः ।
तव पार्थिव संकल्पं चिंतयंत्याः पुनःपुनः ॥ ६५३
हृतराज्यं हृतद्रव्यं विवस्त्रं क्षुच्छ्रमान्वितम् ।
कथमुत्सृज्य गच्छेयमहं त्वां निर्जने वने ॥ ६५४
श्रांतस्य ते क्षुधार्तस्य चिंतयानस्य तत्सुखम् ।
वने घोरे महाराज नाशयिष्याम्यहं क्लमम् ॥ ६५५
न च भार्यासमं किंचिद्विद्यते भिषजां मतम् ।
औषधं सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥ ६५६

नल० उ०—एवमेतद्यथात्थ त्वं दमयंति सुमध्यमे ।
न चाहं त्यक्तुकामस्त्वां किमलं भीरु शंकसे ॥ ६५७
इति ब्रुवन्नलो राजा दमयंतीं पुनःपुनः ।
सांत्वयामास कल्याणीं वाससोऽर्द्धेन संवृताम् ॥ ६५८
तावेकवस्त्रसंवीतावटमानावितस्ततः ।
क्षुत्पिपासापरिश्रांतौ सभां कांचिदुपेयतुः ॥ ६५९
स वै विवस्त्रो विकटो मलिनः पांसुगुंठितः ।
दमयन्त्या सह श्रांतः सुष्वाप धरणीतले ॥ ६६०
दमयन्त्यपि कल्याणी निद्रयापहृता ततः ।
सहसा दुःखमासाद्य सुकुमारी तपस्विनी ॥ ६६१
सुप्तायां दमयन्त्यां तु नलो राजा विशांपते ।
शोकोन्मथितचित्तात्मा न स्म शेते यथा पुरा ॥ ६६२
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
किं नु मे मरणं श्रेयः परित्यागो जनस्य वा ॥ ६६३
मामियं ह्यनुरक्तेव दुःखमाप्नोति मत्कृते ।
मद्विहीना त्वियं गच्छेत्कदाचित्स्वजनं प्रति ॥ ६६४
न चैतां तेजसा शक्यः कश्चिद्धर्षयितुं पथि ।
यशस्विनी महाभागा भक्ता चेयं पतिव्रता ।
एवं तस्य तदा बुद्धिर्दमयंत्यां न्यवर्तत ॥ ६६५
कथं वासो विकर्तेयं न च बुध्येत मे प्रिया।
विचिंत्यैवं नलो राजा सभां पर्यचरत्तदा ॥ ६६६
परिधावन्नथ नल इतश्चेतश्च भारत ।
आससाद सभोद्देशे विकोशं खड्गमुत्तमम् ॥ ६६७
तेनार्द्धं वाससश्छित्त्वा निरस्य च परंतपः ।
सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनः । ६६८
ततो निवृत्तहृदयः पुनरागम्य तां सभाम् ।
दमयंतीं तदा दृष्ट्वा रुरोद निषधाधिपः ॥ ६६९
यां न वायुर्न चादित्यः पुरा पश्यति मे प्रियाम् ।
सेयमद्य सभामध्ये शेते भूमावनाथवत् ॥ ६७०
इयं वस्त्रावकर्तेन संवीता चारुहासिनी ।
उन्मत्तेव वरारोहा कथं बुद्धा भविष्यति ॥ ६७१

कथमेका सती भैमी मया विरहिता शुभा ।
चरिष्यति वने घोरे मृगव्यालनिषेविते ॥ ६७२
आदित्या वसवो रुद्रा अश्विनौ समरुद्गणौ ।
रक्षंतु त्वां महाभागे धर्मेणासि समावृता ॥ ६७३
एवमुक्त्वा प्रियां भार्यां रूपेणाप्रतिमां भुवि ।
कलिनापहृतज्ञानो नलः प्रातिष्ठदुद्यतः ॥ ६७४
गत्वा गत्वा नलो राजा पुनरेति सभां मुहुः ।
आकृष्यमाणः कलिना सौहृदेनावकृष्यते ॥ ६७५
नष्टात्मा कलिना स्पृष्टस्तत्तद्विगणयन्नृपः ।
जगामैको वने शून्य भार्यामुत्सृज्य दुःखितः ॥ ६७६

---

## १५

बृ० उ०—अपक्रांते नले राजन् दमयंती गतक्लमा ।
अबुध्यत वरारोहा संत्रस्ता विजने वने ॥ ६७७
अपश्यमाना भर्तारं शोकदुःखसमन्विता ।
प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम् ॥ ६७८
हा नाथ हा महाराज हा स्वामिन् किं जहासि माम् ।
हा हतास्मि विनष्टास्मि भीतास्मि विजने वने ॥ ६७९
ननु नाम महाराज धर्मज्ञः सत्यवागसि ।
कथमुत्सृज्य गतोऽसि दक्षां भार्यामनुव्रताम् ॥ ६८०
शक्यसे ता गिरः सम्यक् कर्तुं मयि नरेश्वर ।
यास्तेषां लोकपालानां संनिधौ कथिताः पुरा ॥ ६८१
नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ ।
यत्र कांता त्वयोत्सृष्टा मुहूर्तमपि जीवति ॥ ६८२
पर्याप्तः परिहासोऽयमेतावत्पुरुषर्षभ ।
भीताहमतिदुर्धर्ष दर्शयात्मानमीश्वर ॥ ६८३
दृश्यसे दृश्यसे राजन्नेष दृष्टोऽसि नैषध ।
आच्छाद्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ॥ ६८४
नृशंसं बत राजेंद्र यन्मामेवंगतामिह ।
विलपंतीं समागम्य नाश्वासयसि पार्थिव ॥ ६८५

कथं नु राजंस्तृषितः क्षुधितः श्रमकर्षितः ।
सायाह्ने वृक्षमूलेषु मामपश्यन् भविष्यसि ॥ ६८६
ततः सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना ।
इतश्चेतश्च रुदती पर्यधावत दुःखिता ॥ ६८७
मुहुरुत्पतते बाला मुहुः पतति विह्वला ।
मुहुरालीयते भीता मुहुः क्रोशति रोदिति ॥ ६८८
तां क्रंदमानामत्यर्थमभ्याशपरिवर्तिनीम् ।
जग्राह सहसा ग्राहो महाकायः क्षुधान्वितः ॥ ६८९
सा ग्रस्यमाना ग्राहेण शोकेन च परिप्लुता ।
नात्मानं शोचति तथा यथा शोचति नैषधम् ॥ ६९०
हा नाथ मामिह वने ग्रस्यमानामनाथवत् ।
ग्राहेणानेन विजने किमर्थं नानुधावसि ॥ ६९१
श्रांतस्य ते क्षुधार्तस्य परिग्लानस्य नैषध ।
कः श्रमं राजशार्दूल नाशयिष्यति तेऽनघ ॥ ६९२
ततः कश्चिन्मृगव्याध उरगेणायतेक्षणाम् ।
ग्रस्तां दृष्ट्वा क्रंदमानां समभिक्रम्य वेगतः ॥ ६९३
मुखतः पाटयामास शस्त्रेण निशितेन च ।
निर्विचेष्टं भुजंगं तं मुमोचाथ तपस्विनीम् ॥ ६९४
तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम् ।
सुकुमारानवद्यांगीं पूर्णचंद्रनिभाननाम् ॥ ६९५
लक्षयित्वा मृगव्याधः कामस्य वशमीयिवान् ॥ ६९६
दमयंत्यपि तं दुष्टमुपलभ्य पतिव्रता ।
तीव्ररोषसमाविष्टा पतिराज्यविनाकृता ।
अतीतवाक्पथे काले शशापैनं रुषान्विता ॥ ६९७
यद्यहं नैषधादन्यं मनसापि न चिंतये ।
तथायं पततां क्षुद्रो गतासुर्मृगजीवनः ॥ ६९८
उक्तमात्रे तु वचने तथा स मृगजीवनः ।
व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ॥ ६९९
सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ॥ ७००
वनं प्रतिभयं शून्यं झिल्लिकागणनादितम् ।
वैदर्भी विचरत्येका नलमन्वेषती सती ॥ ७०१

भर्तृशोकपरीतांगी विललाप सुदुःखिता ।
हा वीर नल नामाहं नष्टा किल तवानघ ।
अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे ॥ ७०२
महाराज महारण्ये अहमेकाकिनी सती ।
दमयंत्यभिभाषे त्वां किं मां न प्रतिभाषसे ॥ ७०३
शार्दूलोऽभिमुखो ह्येति व्रजाम्येनमशंकिता ॥ ७०४
भवान्मृगाणामधिपस्त्वमस्मिन्कानने प्रभुः ।
विदर्भराजतनयां दमयंतीति विद्धि माम् ॥ ७०५
पतिमन्वेषतीमेकां कृपणां शोककर्षिताम् ।
आश्वासय मृगेंद्रेह यदि दृष्टो नलस्त्वया ॥ ७०६
अथवा त्वं वनपते नलं यदि न शंससि ।
मां खादय मृगश्रेष्ठ दुःखादस्माद्विमोचय ॥ ७०७
एवमादीनि पृच्छंती मृगान्वृक्षान्सपर्वतान् ।
गच्छंती सा चिराद्बाला पुरमासादयन्महत् ॥ ७०८
अथ वस्त्रार्धसंवीता प्रविवेश पुरोत्तमम् ।
तां विह्वलां कृशां दीनां मुक्तकेशीममार्जिताम् ॥ ७०९
उन्मत्तामिव गच्छंतीं ददृशुः पुरवासिनः ।
अनुजग्मुस्तत्र बाला ग्रामपुत्राः कुतूहलात् ॥ ७१०
तां प्रासादगता पश्यद्राजमाता जनैर्वृताम् ।
धात्रीमुवाच चैवैनामानयेह ममांतिकम् ॥ ७११
तामश्रुपरिपूर्णाक्षीं विलपंतीं पतिं बहु ।
राजमाताब्रवीदार्तां भैमीमार्तस्वरां स्वयम् ॥ ७१२
वसस्व मयि कल्याणि प्रीतिर्मे परमा त्वयि ।
मृगयिष्यंति ते भद्रे भर्तारं पुरुषा मम ॥ ७१३
सा तत्र पूज्यमाना वै दमयंती व्यनंदत ।
सर्वकामैः सुविहितैर्निरुद्वेगावसत्तदा ॥ ७१४
उत्सृज्य दमयंतीं तु नलो राजा विशांपते ।
ददर्श दावं दह्यंतं महांतं गहने वने ॥ ७१५
तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित् ।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ॥ ७१६

मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य च ।
नाग गृहीत्वा स प्रायाद्देशं दावविवर्जितम् ॥ ७१७
उवाच नागो मां विद्धि नागं कर्कोटकं नृप ।
पदानि कानिचिद्गच्छ श्रेयो धास्यामि यत्परम् ॥ ७१८
ततः संख्यातुमारब्धमदशद्दशमे पदे ।
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत ॥ ७१९
ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत् ।
मया तेऽन्तर्हितं रूपं न त्वां विद्युर्जना इति ॥ ७२०
यत्कृते चासि निकृतो दुःखेन महता नल ।
विषेण स मदीयेन त्वयि दुःखं निवत्स्यति ॥ ७२१
गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन् ।
समीपमृतुपर्णस्य स हि चैवाक्षनैपुणः ॥ ७२२
स्वरूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ।
अनेन वाससा च्छन्नः स्वरूपं प्रतिपत्स्यसे ॥ ७२३
ततश्चान्तर्हिते नागे अयोध्यां प्रययौ नलः ।
ऋतुपर्णस्य नगरे न्यवसत्तेन पूजितः ॥ ७२४

---

## १६

बृ० ७०—हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते ।
द्विजान्प्रस्थापयामास नलदर्शनकांक्षया ॥ ७२५
ततश्चेदिपुरीं रम्यां सुदेवो नाम ब्राह्मणः ।
विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ॥ ७२६
पूर्णचन्द्रनिभां श्यामां चारुवृत्तपयोधराम् ।
निबद्धां धूमजालेन प्रभामिव विभावसोः ॥ ७२७
मलपंकानुलिप्तांगीं मृणालीमिव चोद्धृताम् ।
पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव ॥ ७२८
विध्वस्तपर्णकमलां वित्रासितविहंगमाम् ।
हस्तिहस्तपरामृष्टां व्याकुलामिव पद्मिनीम् ॥ ७२९
चंद्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम् ।
देहं धारयतीं दीनां भर्तृदर्शनकांक्षया ॥ ७३०

भर्ता नाम परं भार्याभूषणं भूषणैर्विना ॥
एषा हि रहिता तेन शोभमाना न शोभते ॥ ७३१
रुरोद च भृशं राजन् वैदर्भी शोककर्षिता ।
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम् ॥ ७३२
अथ चेदिपतेर्माता राज्ञश्चांतःपुरात्तदा ।
जगाम यत्र सा बाला ब्राम्हणेन सहाभवत् ॥ ७३३
तथ्यं ज्ञात्वा सुनंदा च राजमाता च भारत ।
रुदंत्यौ ता परिष्वज्य मुहूर्तमिव तस्थतु. ॥ ७३४
उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ।
भागिन्या दुहिता मेसि पिप्लुनानेन सूचिता ॥ ७३५
ततः सा न चिरादेव विदर्भानगमत्पुनः ।
ता तु बंधुजनः सर्वः प्रहृष्टाः समपूजयत् ॥ ७३६
सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भाविनी ।
विश्रांता मातरं राजन्निदं वचनमब्रवीत् ॥ ७३७
मां चेदिच्छसि जीवंतीं मातः सत्यं ब्रवीमि ते ।
यतस्व नरवीरस्य नलस्यानयने खलु ॥ ७३८
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता ।
बाष्पेण पिहिता राज्ञी नोत्तरं किंचिदब्रवीत् ॥ ७३९
तदवस्थां च तां दृष्ट्वा सर्वमंतःपुरं तदा ।
हाहाभूतमतीवासीद्भृश च प्ररुरोद ह ॥ ७४०
ततो भीमं महाराजं भार्या वचनमब्रवीत् ।
दमयंती तव सुता भर्तारमनुशोचति ॥ ७४१
अपाकृष्य च लज्जां सा स्वयमुक्तवती नृप ।
प्रयतंतु तव प्रेष्याः पुण्यश्लोकस्य मार्गणे ॥ ७४२
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा ।
दमयंतीमथो सृत्वा प्रस्थितास्ते तथाब्रुवन् ॥ ७४३
अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः ।
ब्रूयास्त जनसंसत्सु तत्र तत्र पुनः पुनः ॥ ७४४
क्व नु त्वं कितव छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ७४५

सा वै यथा त्वयादिष्टा तथा ते त्वत्प्रतीक्षिणी ।
दह्यमाना भृश बाला वस्त्रार्द्धेनाभिसंवृता ॥ ७४६
तस्या रुदंत्याः सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं वदस्व च ॥ ७४७
एवमन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ।
वायुना धूयमानो हि वनं दहति पावकः ॥ ७४८
भर्तव्या रक्षणीया च पत्नी हि पतिना सदा ।
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव ॥ ७४९
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशो भवान्सदा ।
संवृत्तो निरनुक्रोशः शंके मद्भाग्यसंक्षयात् ॥ ७५०
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतोदिशम् ।
नलं मृगयितुं राजस्तदा व्यसनिनं तथा ॥ ७५१
अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ।
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ॥ ७५२
नैषधं मृगयाणेन दमयंति मया नलम् ।
अयोध्यां नगरीं गत्वा भांगासुरिरुपास्थितः ॥ ७५३
श्रावितश्च मया वाक्यं त्वदीयं स महाजने ।
तच्छ्रुत्वा नाब्रवीत्किंचिदृतुपर्णो नराधिपः ॥ ७५४
अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत् ।
ऋतुपर्णस्य भूपस्य विरूपो ह्रस्वबाहुकः ॥ ७५५
शीघ्रयानेषु कुशलो मिष्टयर्ता च भोजने ।
विनिश्वस्य च बहुशो रुदित्वा च पुनः पुनः ।
कुशल चैव मां पृष्ट्वा पश्चादिदमभाषत ॥ ७५६
वैषम्यमपि संप्राप्ता गोपायंति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥ ७५७
रहिता भर्तृभिश्चैव न कुप्यंति कदाचन ।
प्राणांश्चारित्रकवचान्धारयंति वरास्त्रियः ॥ ७५८
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ ७५९
प्राणयात्रापरिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ ७६०

सत्कृताऽसत्कृता वापि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रिया हीनं क्षुधित व्यसनाऽऽप्लुतम् ॥ ७६१
तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः ।
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय ॥ ७६२
एतच्छ्रुत्वाश्रुपूर्णाक्षी दमयंती शोककर्षिता ।
सुदेवं द्विजमाभाष्य अब्रवीन्मातृसंनिधौ ॥ ७६३
गत्वा सुदेव नगरीमयोध्यावासिनं नृपम् ।
ऋतुपर्णं वचो ब्रूहि संपतन्निव कामगः ॥ ७६४
आस्थास्यति पुनर्भैमी दमयंती स्वयंवरम् ।
तथा च गणितः कालः श्वोभूते स भविष्यति ॥ ७६५
एवं तया तथोक्तो वै गत्वा राजानमब्रवीत् ।
स सांत्वयन्सुवचसा बाहुकं प्रत्यभाषत ॥ ७६६
विदर्भान्यातुमिच्छामि दमयंत्याः स्वयंवरम् ।
एकाह्ना हयतत्वज्ञ मन्यसे यदि बाहुक ॥ ७६७
एवमुक्तस्य कौंतेय तेन राज्ञा नलस्य ह ।
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः ॥ ७६८
दमयंती वदेदेतत्कुर्याद्दुःखेन मोहिता ।
अस्मदर्थे भवेद्वायमुपायश्चिंतितो महान् ॥ ७६९
नृशंसं बत वैदर्भी भर्तृकामा तपस्विनी ।
मया क्षुद्रेण निकृता कृपणा पापबुद्धिना ॥ ७७०
स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ।
स्यादेवमपि कुर्यात्सा विवासाद्गतसौहृदा ।
मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा ॥ ७७१
नैवं सा कर्हिचित्कुर्यात्सापत्या च विशेषतः ।
यदत्र सत्यं वाऽसत्यं गत्वा वेत्स्यामि निश्चितम् ॥ ७७२
इति संचिंत्य मनसा प्रत्यजानन्नराधिपम् ।
ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः ॥ ७७३
अध्यगच्छ कृशानश्वान्समर्थानध्वनि क्षमान् ।
तेजोबलसमायुक्तान्पृथुप्रोथान्महाहनून् ॥ ७७४
शुद्धान्दशभिरावर्तैः सिंधुजान्वातरंहसः ।
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः ॥ ७७५

ते चोद्यमाना विधिवद्बाहुकेन हयोत्तमा ।
समुत्पेतुरथाकाशं रथिनं मोहयन्निव ॥ ७७६
स नदीः पर्वतांश्चैव वनानि च सरांसि च ।
अचिरेणातिचक्राम खेचरः खेचरन्निव ॥ ७७७
तथा प्रयाते तु रथे पटो निपतितो नृप ।
ऋ० उ०—निगृह्णीष्व महाबाहो पटमानयतां मम ॥ ७७८
नल० उ०—योजनं समतिक्रांतो नाहर्तुं शक्यते रथः ।
एवमुक्तो नलेनाथ आससाद बिभीतकम् ।
तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत ॥ ७७९
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
ममापि सूत पश्य त्वं संख्याने परमं बलम् ॥ ७८०
प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः ।
आभ्यां फलसहस्रे द्वे पंचोनं शतमेव च ॥ ७८१
ततो रथमवस्थाप्य राजानं बाहुकोऽब्रवीत् ।
अथात्र गण्यते राजन्विद्यते न परोक्षता ॥ ७८२
सोऽवतीर्य रथात्तूर्णं शातयामास तं द्रुमम् ।
गणयित्वा च तं प्राह तावंत्येव फलानि तु ॥ ७८३
नल० उ०—अत्यद्भुतमिदं राजन्दृष्टवानस्मि ते बलम् ।
ऋतु० उ०—विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदम् ॥ ७८४
बाहुकस्तमुवाचाथ देहि विद्यामिमां मम ।
मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ॥ ७८५
ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात् ।
हयज्ञानस्य लोभाच्च तां विद्यां प्रददौ नले ॥ ७८६
तस्याक्षहृदयज्ञस्य शरीरान्निसृतः कलिः ।
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वहन् ॥ ७८७
ततो विषविमुक्तात्मा स्वरूपमकरोत्कलिः ।
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ॥ ७८८
तमुवाच कलिर्भीतो वेपमानः कृतांजलिः ।
कोपं संयच्छ नृपते कीर्तिं दास्यामि ते पराम् ॥ ७८९
ये हि त्वां मनुजा लोके कीर्तयिष्यंत्यतंद्रिताः ।
मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति ॥ ७९०

एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मनः ।
ततो भीतः कलिः क्षिप्रं प्रविवेश बिभीतकम् ।
बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ॥ ७९१
नलोऽपि नोदयामास प्रहृष्टेनान्तरात्मना ।
हयान्विदर्भाभिमुखो द्विजानिव पुनः पुनः ॥ ७९२
ततो विदर्भान्संप्राप्तं सायाह्ने प्राविशत्पुरम् ।
नादयन्रथघोषेण सर्वाः स विदिशो दश ॥ ७९३
दमयन्त्यपि शुश्राव रथघोषं नलस्य तम् ॥ ७९४
दम० ३०—यथासौ रथनिर्घोषः पूरयन्निव मेदिनीम् ॥
ममाह्लादयते चेतो नल एष महीपतिः ॥ ७९५
यदि वै तस्य वीरस्य बाहूनाद्याहमन्तरम् ।
प्रविशामि सुखस्पर्शं न भविष्याम्यसंशयम् ॥ ७९६
यदि मां मेघनिर्घोषो नोपगच्छति नैषधः ।
अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ॥ ७९७
गुणास्तस्य स्मरन्त्या मे तत्पराया दिवानिशम् ।
हृदयं दीर्यत इदं शोकात्प्रियविनाकृतम् ॥ ७९८
एवं विलपमाना सा नष्टसंज्ञेव भारत ।
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया ॥ ७९९
सा ददर्शाथ शोकार्ता बाहुकं न च नैषधम् ।
शंकमाना च भर्तारं बाहुकं पुनरिंगितैः ॥ ८००
केशिनीं प्रेषयामास बाहुकस्य परीक्षणे ।
ज्ञात्वा च बहुभिश्चिह्नैर्नलं पित्रे न्यवेदयत् ॥ ८०१
सा च पित्राऽभ्यनुज्ञाता मात्रा च भरतर्षभ ।
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥ ८०२
तां स्म दृष्ट्वैव सहसा दमयंतीं नलो नृपः ।
आविष्टः शोकदुःखाभ्यां बभूवाश्रुपरिप्लुतः ॥ ८०३
ततः काषायवसना जटिला मलपंकिनी ।
बाष्पगद्गदया वाचा बाहुकं वाक्यमब्रवीत् ॥ ८०४
पूर्वं दृष्टस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक ।
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ॥ ८०५

अनागसं प्रियां भार्यां विजने श्रममोहिताम् ।
अपहाय तु को गच्छेत्पुण्यश्लोकमृते नलम् ॥ ८०६

साक्षाद्देवानपाहाय वृतो यः स पुरा मया ।
अनुव्रतां साभिकामां पुत्रिणीं त्यक्तवान्कथम् ॥ ८०७

दमयंत्या ब्रुवत्यास्तु सर्वमेतदरिंदम ।
शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु ॥ ८०८

अतीव कृष्णसाराभ्यां रक्तांताभ्यां जलं तु तत् ।
परिस्रवन्नलो दृष्ट्वा शोकार्तामिदमब्रवीत् ॥ ८०९

मम राज्य प्रनष्ट यन्नाह तत्कृतवान्स्वयम् ।
कलिना तत्कृतं भीरु यच्च त्वामहमत्यजम् ॥ ८१०

मम च व्यवसायन तपसा चैव निर्जितः ।
दुःखस्यांतेन चानन भावितव्यं हि नौ शुभे ॥ ८११

विमुच्य मां गत पापस्ततोऽहमिह चागतः ।
त्वदर्थं विपुलश्रोणि नहि मेऽन्यत्प्रयोजनम् ॥ ८१२

कथं नु नारी भर्तारमनुरक्तमनुव्रतम् ।
उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ॥ ८१३

दूताश्चरंति पृथिवीं कृत्स्नां नृपतिशासनात् ।
भैमी किल स्म भर्तार द्वितीयं वरयिष्यति ॥ ८१४

स्वैरवृत्तो यथाकाममनुरूपमिवात्मनः ।
श्रुत्वैव चैवं त्वरितो भांगासुरिरुपस्थितः ॥ ८१५

दमयंती तु तच्छ्रुत्वा नलस्य परिदेवितम् ।
प्रांजलिर्वेपमाना च भीता वचनमब्रवीत् ॥ ८१६

उपायोऽयं मया दृष्टो नैषधाऽऽनयने तव ।
त्वामृते नहि लोकोऽन्य एकाह्ना पृथिवीपते ॥ ८१७

समर्थो योजनशतं गंतुमश्वैर्नराधिप ।
यथा नासत्कृतं किंचिन्मनसापि चराम्यहम् ॥ ८१८

अयं चरति लोकेऽस्मिन्भूतसाक्षी सदागतिः ।
एष मे मुंचतु प्राणान्यदि पापं चराम्यहम् ॥ ८१९

यथा चरति तिग्मांशुः परेण भुवनं सदा ।
स मुंचतु मम प्राणान्यदि पापं चराम्यहम् ॥ ८२०

चंद्रमाः सर्वभूतानामंतश्चरति साक्षिवत् ।
स मुंचतु मम प्राणान्यदि पापं चराम्यहम् ॥ ८२१
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयंति वै ।
विब्रुवन्तु यथा सत्यमेतद्देवास्त्यजतु माम् ॥ ८२२
एवमुक्तस्तथा वायुरंतरिक्षादभाषत ।
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ॥ ८२३
तथा ब्रुवति वायौ च पुष्पवृष्टिः पपात ह ।
देवदुंदुभयो नेदुर्ववौ च पवनः शिवः ॥ ८२४
तदद्भुतमयं दृष्ट्वा नलो राजाथ भारत ।
दमयंत्या विशंकां तामुपाकर्षदरिंदमः ॥ ८२५
ततः स्ववस्त्रमजरं प्रावृणोद्वसुधाधिपः ।
संस्मृत्य नागराजं त ततो लेभे स्वकं वपुः ॥ ८२६
स्वरूपिण तु भर्तारं दृष्ट्वा भीमसुता तदा ।
प्राक्रोशदुच्चैरालिंग्य पुण्यश्लोकमनिंदिता ॥ ८२७
ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना ।
परीता तेन दुःखेन निशश्वासायतेक्षणा ॥ ८२८
तथैव मलदिग्धांगी परिष्वज्य शुचिस्मिताम् ।
सुचिरं पुरुषव्याघ्रस्तस्थौ शोकपरिप्लुतः ॥ ८२९
ततस्तौ सहितौ रात्रिं कथयंतौ पुरातनम् ।
वने विचरितं सर्वमूचतुर्मुदितौ नृप ॥ ८३०
स चतुर्थे ततो वर्षे संगम्य सह भार्यया ।
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम् ॥ ८३१
दमयत्यपि भर्तारमासाद्याप्यायिता भृशम् ।
अर्धसंजातशस्येव तोयं प्राप्य वसुंधरा ॥ ८३२
अथ तां व्युषितो रात्रिं नलो राजा स्वलंकृतः ।
वैदर्भ्या सहितः काले ददर्श वसुधाधिपम् ॥ ८३३
ततोऽभिवादयामास प्रयतः श्वशुरं नलः ।
ततो नु दमयंती च ववंदे पितरं शुभा ॥ ८३४
ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् ।
तमानाय्य नलं राजा क्षमयामास पार्थिवम् ॥ ८३५

स च तं प्रददौ विद्यां पूर्वमेव प्रतिश्रुताम् ।
सोऽपि लब्ध्वा हयज्ञानं ययौ स्वपुरमेव च ॥ ८३६
नलोऽथ निषधान् गत्वा जित्वाक्षैश्चापि पुष्करम् ।
स्वपुरं प्रेषयामास परिष्वज्य पुनः पुनः ॥ ८३७
एवं संप्राप्तराज्यश्रीर्दमयन्त्या च संगतः ।
वर्तयामास मुदितो देवराडिव नंदनः ॥ ८३८
दुःखमेतादृशं प्राप्तो नलः परपुरंजयः ।
देवनेन नरश्रेष्ठ सभार्यो भरतर्षभ ॥ ८३९
एकाकिनैव सुमहन्नलेन पृथिवीपते ।
दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ॥ ८४०
त्वं पुनर्भ्रातृसहितः कृष्णया चैव पांडव ।
रमसेऽस्मिन्महारण्ये धर्ममेवानुचिंतयन् ॥ ८४१
ब्राह्मणैश्च महाभागैर्वेदवेदांगपारगैः ।
नित्यमन्वास्यसे राजंस्तत्र का परिदेवना ॥ ८४२
श्रुत्वेतिहासं नृपते समाश्वसिहि मा शुचः ।
व्यसने त्वं महाराज न विषीदतुमर्हसि ॥ ८४३
कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥ ८४४
अस्थिरत्वं च संचित्य पुरुषार्थस्य नित्यदा ।
तस्योदये व्यये चापि न चिंतयितुमर्हसि ॥ ८४५
भयं पश्यसि यच्च त्वमाह्वयिष्यति मां पुनः ।
अक्षज्ञ इति तत्तेऽहं नाशयिष्यामि पार्थिव ॥ ८४६
वेदाऽक्षहृदयं कृत्स्नमहं सत्यपराक्रम ।
उपपद्यस्व कौंतेय प्रसन्नोऽहं ब्रवीमि ते ॥ ८४७
ततोऽक्षहृदयं प्रादाद्बृहदश्वो महात्मने ।
दत्वा चाश्वशिरोऽगच्छदुपस्प्रष्टुं महातपाः ॥ ८४८

---

## १७

वै० उ०—लोमशः सुमहातेजा ऋषिस्तत्राजगाम ह ।
तं पाण्डवाग्रजो राजा सगणो ब्राह्मणास्तथा ।
उपातिष्ठन्महाभागं दिवि शक्रमिवामराः ॥ ८४९

स पृष्टः पांडुपुत्रेण प्रीयमाणो महामनाः ।
उवाच श्लक्ष्णया वाचा हर्षयन्निव पांडवान् ॥ ८५०
सचरन्नस्मि कौंतेय सर्वान्लोकान्यदृच्छया ।
गतः शक्रस्य भवनं तत्रापश्यं सुरेश्वरम् ॥ ८५१
तव च भ्रातरं वीरमपश्यं सव्यसाचिनम् ।
शक्रस्यार्धासनगतं तत्र मे विस्मयो महान् ॥ ८५२
यत्त्वयोक्तो महाबाहुरस्त्रार्थं भरतर्षभ ।
तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं विभो ॥ ८५३
तत्समत्रं ससंहारं सप्रायश्चित्तमंगलम् ।
वज्रमस्त्राणि चान्यानि दंडादीनि युधिष्ठिर ॥ ८५४
यमात्कुबेराद्वरुणादिंद्राच्च कुरुनंदन ।
अस्त्राण्यवाप्तवान्पार्थो दिव्यान्यामितविक्रमः ॥ ८५५
विश्वावसोस्तु तनयाद्गीतं नृत्यं च साम च ।
वादित्रं च यथान्यायं प्रत्यविंदद्यथाविधि ॥ ८५६
सोहमिंद्रस्य वचनान्नियोगादर्जुनस्य च ।
रक्षमाणो भयेभ्यस्त्वा चरिष्यामि त्वया सह ॥ ८५७
द्विस्तीर्थानि मया पूर्वं दृष्टानि कुरुनंदन ।
इदं तृतीयं द्रक्ष्यामि तान्येव भवता सह ॥ ८५८
इयं राजर्षिभिर्याता पुण्यकृद्भिर्युधिष्ठिर ।
मन्वादिभिर्महाराज तीर्थयात्रा भयापहा ॥ ८५९
त्वं तु धर्ममतिर्नित्यं धर्मज्ञः सत्यसगरः ।
विमुक्तः सर्व संगेभ्यो भूय एव भविष्यसि ॥ ८६०
यु० उ०—न हर्षात्संप्रपश्यामि वाक्यस्यास्योत्तरं क्वचित् ॥ ८६१
भवता संगमो यस्य भ्राता चैव धनजयः ।
वासवः स्मरते यस्य को नामाभ्यधिकस्ततः ॥ ८६२
यच्च मां भगवानाह तीर्थानां दर्शनं प्रति ।
धौम्यस्य वचनादेषा बुद्धिः पूर्वं कृतैव मे ॥ ८६३
ततः कुंतीसुतो राजा लघुभिर्ब्राह्मणैः सह ।
लोमशेन च सुप्रीतस्त्रिरात्रं काम्यकेऽवसत् ॥ ८६४
लोमशस्योपसंगृह्य पादौ द्वैपायनस्य च ।

धौम्येन सहिता वीरास्तथा तैर्वनवासिभिः ।
मार्गशीर्ष्यामतीतायां पुष्येण प्रययुस्ततः ॥ ८६५
कठिनानि समादाय चीराजिनजटाधराः ।
अभेद्यैः कवचैर्युक्तास्तीर्थान्यन्वचरंस्तत ॥ ८६६
इंद्रसेनादिभिर्भृत्यै रथैः परिचतुर्दशै· ।
महानसव्यापृतैश्च तथान्यैः परिचारकैः ॥ ८६७
सायुधा बद्धनिस्त्रिंशास्तूणवंतः समार्गणाः ।
प्राङ्मुखा प्रययुर्वीराः पांडवा जनमेजय ॥ ८६८
ते तथा सहिता वीरा वसंतस्तत्र तत्र ह ।
क्रमेण पृथवीपाल नैमिषारण्यमागता· ॥ ८६९
ततस्तीर्थेषु पुण्येषु गोमत्याः पांडवा नृप ।
कृताभिषेकाः प्रददुर्गाश्च वित्तं च भारत ॥ ८७०
कन्यातीर्थेऽश्वतीर्थे च गवां तीर्थे च भारत ।
कालकोटयां विषप्रस्थे गिरावुष्य च कौरवाः ।
बाहुदायां महीपाल चक्रु· सर्वेऽभिषेचनम् ॥ ८७१
प्रयागे देवयजने देवानां पृथिवीपते ।
गंगायमुनयोश्चैव संगमे सत्यसंगराः ॥ ८७२
तपस्विजनजुष्टां च ततो वेदीं प्रजापते· ।
जग्मुः पांडुसुता राजन्ब्राह्मणैः सह भारत ॥ ८७३
ततो महीधर जग्मुर्धर्मज्ञेनाभिसंस्कृतम् ॥ ८७४
नगो गयशिरो यत्र पुण्या चैव महानदी ।
ऋषिजुष्ट सुपुण्यं तत्तीर्थं ब्रह्मसरोत्तमम् ॥ ८७५
अगस्त्यो भगवान्यत्र गतो वैवस्वतं प्रति ।
ऋषियज्ञेन महता यत्राक्षयवटो महान् ॥ ८७६
लो० उ०—एषा भागीरथी पुण्या देवगधर्वसेविता ।
वातेरिता पताकेव विराजति नभस्तले ॥ ८७७
भृगोस्तीर्थं महाराज महर्षिगणसेवितम् ।
यत्रोपस्पृष्टवान् रामो हृतं तेजस्तदाप्तवान् ॥ ८७८
ततः प्रयातः कौंतेयः क्रमेण भरतर्षभ ।
नंदामपरनंदां च नद्यौ पापभयापहे ॥ ८७९

पर्वतं स समासाद्य हेमकूटमनामयम् ।
अचिंत्यानद्भुतान्भावान्ददर्श सुबहून्नृपः ॥ ८८०
ततस्तत्र समाप्लुत्य गात्राणि सगणो नृपः ।
जगाम कौशिकीं पुण्यां रम्यां शीतजलां शुभाम् ॥ ८८१
लो० उ०—विश्वामित्राश्रमो रम्य एष चात्र प्रकाशते ।
आश्रमश्चैव पुण्याख्यः काश्यपस्य महात्मनः ॥ ८८२
ऋष्यशृंगः सुतो यस्य तपस्वी संयतेंद्रियः ।
तपसो यः प्रभावेन वर्षयामास वासवम् ॥ ८८३
ततः प्रयातः कौशिक्याः पांडवो जनमेजय ।
आनुपूर्व्येण सर्वाणि जगमायतनान्यथ ॥ ८८४
स सागरं समासाद्य गंगायाः संगमे नृप ।
नदीशतानां पंचाना मध्ये चक्रे समाप्लुवम् ॥ ८८५
ततः समुद्रतीरेण जगाम वसुधाधिपः ।
भ्रातृभिः सहितो वीरः कलिंगान् प्रति भारत ॥ ८८६
ततो वैतरणीं सर्वे पांडवा द्रौपदी तथा ।
अवतीर्यमहाभागास्तर्पयांचाक्रिरे पितॄन् ॥ ८८७
ततः कृतस्वस्त्ययनो महात्मा युधिष्ठिरः सागरमभ्यगच्छत् ।
कृत्वा च तच्छासनमस्य सर्वे महेंद्रमासाद्य निशामुवास ॥ ८८८
स वृत्तवांस्तेषु कृताभिषेकः सहानुजः पार्थिवपुत्रपौत्रः ।
समुद्रगां पुण्यतमां प्रशस्तां जगाम पारिक्षित पांडुपुत्रः ॥ ८८९
द्विजातिमुख्येषु धनं विसृज्य गोदावरीं सागरमभ्यगच्छत् ।
ततो विपाप्मा द्रविडेषु राजन् समुद्रमासाद्य च लोकपुण्यम् ॥ ८९०
अगस्त्यस्तीर्थं च महापवित्रं नारीतीर्थान्यथ वीरो ददर्श ।
स तानि तीर्थानि च सागरस्य पुण्यानि चान्यानि बहूनि राजन् ॥ ८९१
क्रमेण गच्छन् परिपूर्णकामः शूर्पारकं पुण्यतमं ददर्श ।
तत्रोदधेः कंचिदतीत्य देशं ख्यातं पृथिव्यां वनमाससाद ॥ ८९२
स तत्र तामग्र्यधनुर्धरस्य वेदीं ददर्शायतपीनबाहुः ।
ऋचीकपुत्रस्य तपस्विसंघैः समावृतां पुण्यकृदर्चनीयाम् ॥ ८९३
स तेन तीर्थेन तु सागरस्य पुनः प्रयातः सह सोदरीयैः ।
द्विजैः पृथिव्या प्रथितं महद्भिस्तीर्थं प्रभासं समुपाजगाम ॥ ८९४

तौ सर्ववृष्णिप्रवरौ ससैन्यौ युधिष्ठिरं जग्मतुराजमीढम् ।
ते वृष्णयः पांडुसुतान्समीक्ष्य भूमौ शयानान्मलदिग्धगात्रान् ।
अनर्हतीं द्रौपदीं चापि दृष्ट्वा सुदुःखिताश्चुक्रुशुरार्तनादम् ॥ ८९५
विसृज्य कृष्णं त्वथ धर्मराजो विदर्भराजापचितां सुतीर्थाम् ।
जगाम पुण्या सरितं पयोष्णीं सभ्रातृभृत्यः सह लोमशेन ॥ ८९६

---

## १८

वै० उ०—स पयोष्ण्यां नरश्रेष्ठः स्नात्वा वै भ्रातृभिः सह ।
वैडूर्यपर्वतं चैव नर्मदां च महानदीम् ।
समागमत तेजस्वी भ्रातृभिः सहितोऽनघ ॥ ८९७
लो० उ०—सैंधवारण्यमासाद्य कुल्यानां कुरु दर्शनम् ।
पुष्करेषु महाराज सर्वेषु च जलं स्पृश ॥ ८९८
आर्चीकपर्वतश्चैव निवासो वै मनीषिणाम् ।
चैत्याश्चैते बहुविधास्त्रिदशानां युधिष्ठिर ॥ ८९९
यमुना चाक्षयस्रोताः कृष्णश्चेह तपोरतः ।
अत्र राजा महेष्वासो मांधाताऽयजत स्वयम् ॥ ९००
एषा सरस्वती रम्या दिव्या चौघवती नदी ।
एतद्विनशनं नाम सरस्वत्या विशांपते ॥ ९०१
द्वारं निषादराष्ट्रस्य येषां दोषात्सरस्वती ।
प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः ॥ ९०२
एष वै चमसोद्भेदो यत्र दृश्या सरस्वती ।
एतद्विष्णुपदं नाम दृश्यते तीर्थमुत्तमम् ।
एष रम्या विपाशा च नदी परमपावनी ॥ ९०३
काश्मीरमंडलं चैतत्सर्वपुण्यमरिंदम ।
महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह ॥ ९०४
एतद्द्वारं महाराज मानसस्य प्रकाशते ।
वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतम् ॥ ९०५
एष वातिकखंडो वै प्रख्यातः सत्यविक्रमः ।
नात्यवर्तत यद्द्वारं विदेहादुत्तरं च यः ॥ ९०६
ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम् ।
वितस्तां पश्य राजेंद्र सर्वपापप्रमोचनीम् ॥ ९०७

महर्षिभिश्चाध्युषितां शीततोयां सुनिर्मलाम् ।
एषा मधुविला राजन् समंगा संप्रकाशते ॥ १०८
एतत्कर्दमिलं नाम भरतस्याभिषेचनम् ।
एते कनखला राजन्नृषीणां दयिता नगाः ॥ १०९
एषा प्रकाशते गंगा युधिष्ठिर महानदी ।
उशीरबीजं मैनाकं गिरिश्वेतं च भारत ॥ ११०
समतीतोऽसि कौंतेय कालशैलं च पार्थिव ।
एषा गंगा सप्तविधा राजते भरतर्षभ ॥ १११
स्थानं विरजसं पुण्यं यत्राग्निर्नित्यमिध्यते ।
एतद्वै मानुषेणाद्य न शक्यं द्रष्टुमद्भुतम् ॥ ११२
श्वेतं गिरिं प्रवेक्ष्यामो मंदरं चैव पर्वतम् ।
यत्र मणिवरो यक्षः कुबेरश्चैव यक्षराट् ॥ ११३
दुर्गमाः पर्वताः पार्थ समाधिं परमं कुरु ।
एतद्विकीर्णं सुश्रीमत् कैलासशिखरोपमम् ॥ ११४
यत्पश्यसि नरश्रेष्ठ पर्वतप्रतिमं स्थितम् ।
एतान्यस्थीनि दैत्यस्य नरकस्य महात्मनः ॥ ११५
पुरातनेन देवेन विष्णुना परमात्मना ।
दैत्यो विनिहतस्तात सुरराजहितैषिणा ॥ ११६
वै० उ०—ते शूरास्ततधन्वानस्तूणवंतः समार्गणाः ।
बद्धगोधांगुलित्राणाः खड्गवंतोऽमितौजसः ॥ ११७
परिगृह्य द्विजश्रेष्ठान् ज्येष्ठाः सर्वधनुष्मताम् ।
पांचालीसहिता राजन् प्रययुर्गंधमादनम् ॥ ११८
सरांसि सरितश्चैव पर्वतांश्च वनानि च ।
वृक्षांश्च बहुलच्छायान् ददृशुर्गिरिमूर्धनि ॥ ११९
चेरुरुच्चावचाकारान् देशान्विषमसंकटान् ।
पश्यंतो मृगजातानि बहूनि विविधानि च ॥ १२०
प्रविशत्स्वथ वीरेषु पर्वतं गंधमादनम् ।
चंडवातं महद्वर्षं प्रादुरासीद्विशांपते ॥ १२१
ततो रेणुः समुद्भूतः सपत्रबहुलो महान् ।
पृथिवीं चांतरिक्षं च द्यां चैव सहसाऽऽवृणोत् ॥ १२२

न चापि शेकुस्तत्कर्तुमन्योन्यस्याभिभाषणम् ।
न चापश्यंस्ततोऽन्योन्यं तमसावृतचक्षुषः ।
आकृष्यमाणा वातेन साश्मचूर्णेन भारत ॥ १२३
द्रुमाणा वातभग्नानां पततां भूतलेऽनिशम् ।
अन्येषां च महीजानां शब्दः समभवन्महान् ॥ १२४
द्यौः स्वित्पतति किं भूमिर्दीर्यते पर्वतो नु किम् ।
इति ते मेनिरे सर्वे पवनेनापि मोहिताः ॥ १२५
ते यथानंतरान्वृक्षान् वल्मीकान्विषमाणि च ।
पाणिभिः परिमार्गंतो भीता वायोर्निलिल्यिरे ॥ १२६
ततः कार्मुकमादाय भीमसेनो महाबलः ।
कृष्णामादाय संगम्य तस्थावाश्रित्य पादपम् ॥ १२७
मंदीभूते तु पवने तस्मिन्रजसि शाम्यति ।
महद्भिर्जलधारौघैर्वर्षमभ्याजगाम ह ॥ १२८
भृश चटचटाशब्दो वज्राणां क्षिप्यतामिव ।
ततस्ताश्चचलाभासश्चेरुरभ्रेषु विद्युतः ॥ १२९
ततोऽश्मसहिता धारा संवृण्वत्यः समततः ।
प्रपेतुरनिश तत्र शीघ्रवातसमीरिताः ॥ १३०
तत्र सागरगा ह्यापः कीर्यमाणाः समंततः ।
प्रादुरासन्सकलुषाः फेनवत्यो विशांपते ॥ १३१
वहंत्यो वारि बहुलं फेनोडुपपरिप्लुतम् ।
परिसस्रुर्महाशब्दाः प्रकर्षंत्यो महीरुहान् ॥ १३२
तस्मिन्नुपरते शब्दे वाते च समतां गते ।
गते ह्यंभसि निम्नानि प्रादुर्भूते दिवाकरे ॥ १३३
निर्जग्मुस्ते शनैः सर्वे समाजग्मुश्च भारत ।
प्रतस्थिरे पुनर्वीराः पर्वतं गंधमादनम् ॥ १३४
क्रोशमात्रं प्रयातेषु पांडवेषु महात्मसु ।
पद्भ्यामनुचिता गंतुं द्रौपदी समुपाविशत् ॥ १३५
श्रांता दुःखपरीता च वातवर्षेण तेन च ।
सौकुमार्याच्च पांचाली संमुमोह तपस्विनी ॥ १३६
तां पतंतीं वरारोहां भज्यमानां लतामिव ॥
नकुलः समभिद्रुत्य परिजग्राह वीर्यवान् ॥ १३७

तामवेक्ष्य तु कौंतेयो विवर्णवदनां कृशाम् ।
अंकमानीय धर्मात्मा पर्यदेवयदातुरः ॥ १३८

कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता ।
भूमौ निपतिता शेते सुखार्हा वरवर्णिनी ॥ १३९

सुकुमारौ कथं पादौ मुखं च कमलप्रभम् ।
मत्कृतेऽद्य वरार्हायाः श्यामतां समुपागतम् ॥ १४०

किमिदं द्यूतकामेन मया कृतमबुद्धिना ।
आदाय कृष्णां चरता वने मृगगणायुते ॥ १४१

सुखं प्राप्स्यसि कल्याणि पांडवान् प्राप्य वै पतीन् ।
इति द्रुपदराजेन पित्रा दत्तायतेक्षणा ॥ १४२

तत्सर्वमनवाप्येयं श्रमशोकाध्वकर्शिता ।
शेते निपतिता भूमौ पापस्य मम कर्मभिः ॥ १४३

तथा लालप्यमाने तु धर्मराजे युधिष्ठिरे ।
धौम्यप्रभृतयः सर्वे तत्राजग्मुर्द्विजोत्तमाः ॥ १४४

ते समाश्वासयामासुराशीर्भिश्चाप्यपूजयन् ।
रक्षोघ्नांश्च तथा मंत्रान् जेपुश्चक्रुश्च ते क्रियाः ॥ १४५

स्पृश्यमाना करैः शीतैः पांडवैश्च मुहुर्मुहुः ।
सेव्यमाना च शीतेन जलमिश्रेण वायुना ॥ १४६
पांचाली सुखमासाद्य लेभे चेतः शनैः शनैः ॥ १४७
परिगृह्य च तां दीनां कृष्णामाजिनसंस्तरे ।
पार्था विश्रामयामासुर्लब्धसंज्ञां तपस्विनीम् ॥ १४८
उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ।
बहवः पर्वता भीम विषमा हिमदुर्गमाः ।
तेषु कृष्णा महाबाहो कथं नु विचारिष्यति ॥ १४९
भी० उ०—त्वां राजन् राजपुत्रीं च यमौ च पुरुषर्षभ ।
स्वयं नेष्यामि राजेंद्र मा विषादे मनः कृथाः ॥ १५०
हैडिंबश्च महावीर्यो विहगो मद्बलोपमः ।
वहेदनघ सर्वान्नो वचनात्ते घटोत्कचः ॥ १५१
भ्रातुर्वचनमाज्ञाय भीमसेनो घटोत्कचम् ।
आदिदेश नरव्याघ्रस्तनयं शत्रुकर्शनम् ॥ १५२

ते त्वाशुगतिभिर्वीरा राक्षसैस्तैर्महाजवैः ।
उह्यमाना ययुः शीघ्रं महदध्वानमल्पवत् ॥ १५३
तेऽवतीर्य बहून् देशानुत्तरांश्च कुरूनपि ।
ददृशुर्विविधाश्चर्यं कैलासं पर्वतोत्तमम् ॥ १५४
तस्याभ्याशे तु ददृशुर्नरनारायणाश्रमम् ॥ १५५
ददृशुस्तां च बदरीं वृत्तस्कधां मनोरमाम् ।
स्निग्धामविरलच्छायां श्रिया परमया युताम् ॥ १५६
तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः ।
अवतेरुस्ततः सर्वे राक्षसस्कंधतः शनैः ॥ १५७
ततस्तमाश्रमं रम्य ददृशुः पाण्डवा नृप ।
तमसा रहितं पुण्यमनामृष्ट रवेः करैः ।
क्षुत्तृट्शीतोष्णदोषैश्च वर्जितं शोकनाशनम् ॥ १५८
तत्र ते पुरुषव्याघ्राः परमं शौचमास्थिताः ।
तत्राश्रमवसन् वीरा धनंजयदिदृक्षवः ॥ १५९

---

## १९

ततः किंपुरुषावासं सिद्धचारणसेवितम् ।
ददृशुर्हृष्टरोमाणः पर्वतं गंधमादनम् ॥ १६०
विविशुः क्रमशो वीराः शरण्यं शुभकाननम् ।
शृण्वतः प्रीतिजननान् वल्गून् मदकलान् शुभान् ।
श्रोत्ररम्यान् सुमधुरान् शब्दान्खगमुखेरितान् ॥ १६१
सर्वर्तुफलभाराढ्यान् सर्वर्तुकुसुमोज्वलान् ।
पश्यंतः पादपाश्चापि फलभारावनामितान् ॥ १६२
सरांसि च मनोज्ञानि समताज्जलचारिभिः ।
कुमुदैः पुंडरीकैश्च तथा कोकनदोत्पलैः ॥ १६३
हृष्टैस्तथा तामरसरसासवमदालसैः ।
पद्मोदरच्युतरजःकिंजल्कारुणरंजितैः ॥ १६४
मंजुस्वरैर्मधुकरैर्विरुतान्कमलाकरान् ।
अपश्यंस्ते नरव्याघ्रा गंधमादनसानुषु ॥ १६५
तथैव पद्मखंडैश्च मंडितांश्च समंततः ।
शिखंडिनीभिः सहितांल्लतामंडलकेषु च ॥ १६६

मेघतुर्यरवोद्दाममदनाकुलितान्भृशम् ।
कृत्वैव केकामधुरं संगीतं मधुरस्वरम् ॥ ९६७
चित्रान्कलापान्विस्तीर्य सविलासान्मदालसान् ।
मयूरान्ददृशुर्हृष्टान्नृत्यतो वनलालसान् ॥ ९६८
विवरेषु तरूणां च रुचिरं ददृशुश्च ते ।
सिंधुवारांस्तथोदारान् मन्मथस्येव तोमरान् ॥ ९६९
सुवर्णवर्णकुसुमान् गिरीणां शिखरेषु च ।
कर्णिकारान्विकसितान् कर्णपूरानिवोत्तमान् ॥ ९७०
तथैव वनराजीनामुदारान्ग्रचितानिव ।
विराजमानांस्तेऽपश्यंस्तिलकांस्तिलकानिव ॥ ९७१
कमलोत्पलकह्लारपुंडरीकसुगंधिना ।
सेव्यमाना वने तस्मिन् सुखस्पर्शेन वायुना ॥ ९७२
ततो युधिष्ठिरो भीममाहेद प्रीतिमद्वचः ।
अहो श्रीमदिदं भीम गंधमादनकाननम् ॥ ९७३
भ्रमरारावमधुरा नलिनीः फुल्लपंकजाः ।
विलोड्यमानाः पश्येमाः करिभिः सकरेणुभिः ॥ ९७४
पश्य भीम शुभान्देशान् देवाक्रीडान्समंततः ।
पात्रिणः पुष्पितानेतान् संपतंति महाद्रुमान् ॥ ९७५
रक्तपीतारुणाः पार्थ पादपाग्रगताः खगाः ।
वदंति मधुरा वाचः सर्वभूतमनोरमाः ॥ ९७६
बहुतालसमुत्सेधाः शैलशृंगपरिच्युताः ।
नानाप्रस्रवणेभ्यश्च वारिधाराः पतंति च ॥ ९७७
शोभयंति महाशैलं नानारजतधातवः ।
क्वचिदंजनवर्णाभाः क्वचित्कांचनसन्निभाः ॥ ९७८
धातवो हरितालस्य क्वचिद्धिंगुलकस्य च ।
मनः शिलागुहाश्चैव संध्याभ्रनिकरोपमाः ॥ ९७९
गंधर्वाः सह कांताभिर्यथोक्तं वृषपर्वणा ।
दृश्यंते शैलशृंगेषु पार्थ किंपुरुषैः सह ॥ ९८०
गीतानां समतालानां तथा साम्नां च निस्वनः ।
श्रूयते बहुधा भीम सर्वभूतमनोहरः ॥ ९८१

महागंगामुदीक्षस्व पुण्यां देवनदीं शुभाम् ।
कलहंसगणैर्जुष्टामृषिकिंनरसेविताम् ॥ १८२
ते प्रीतमनसः शूराः प्राप्ता गतिमनुत्तमाम् ।
नातृप्यन्पर्वतेंद्रस्य दर्शनेन परंतपाः ॥ १८३
उपेतमथ माल्यैश्च फलवद्भिश्च पादपैः ।
आर्ष्टिषेणस्य राजर्षेराश्रमं ददृशुस्तदा ॥ १८४

ततः कदाचिद्धरिसंप्रयुक्तं महेंद्रवाहं सहसोपयातम् ।
विद्युत्प्रभं प्रेक्ष्य महारथानां हर्षोऽर्जुनं चिंतयतां बभूव ॥ १८५
बभूव तेषां परमप्रहर्षस्तेनाप्रमेयेण समागतानाम् ।
स चापि तान्प्रेक्ष्य किरीटमाली ननंद राजानमभिप्रशंसन् ॥ १८६

---

## २०

ततो रजन्यां व्युष्टायां धर्मराजं युधिष्ठिरम् ।
भ्रातृभिः सहितः सर्वैरवंदत धनंजयः ।
कृष्णया चैव बीभत्सुर्धर्मपुत्रमपूजयत् । १८७
अभिवादयमानं तं मूर्ध्न्युपाघ्राय पांडवम् ।
हर्षगद्गदया वाचा प्रहृष्टोऽर्जुनमब्रवीत् ॥ १८८
कथमर्जुन कालोऽयं स्वर्गे व्यतिगतस्तव ।
कथं चास्त्राण्यवाप्तानि देवराजश्च तोषितः ॥ १८९
अ० उ०—शृणु हंत महाराज विधिना येन दृष्टवान् ।
शतक्रतुमहं देवं भगवंतं च शंकरम् ॥ १९०
विद्यामधीत्य तां राजंस्त्वयोक्तामारेमर्दन ।
भवता च समादिष्टस्तपसे प्रास्थितो वनम् ॥ १९१
तपोऽतप्यं महाराज मास मूलफलाशनः ।
द्वितीयश्चापि मे मासो जलं भक्षयतो गतः ॥ १९२
निराहारस्तृतीयेऽथ मासे पांडवनंदन ।
ऊर्ध्वबाहुश्चतुर्थं तु मासमस्मि स्थितस्तदा ॥ १९३
न च मे हीयते प्राणस्तदद्भुतमिवाभवत् ॥ १९४
पंचमे त्वथ संप्राप्ते प्रथमे दिवसे गते ।
वराहसंस्थितं भूतं मत्समीपं समागतम् ॥ १९५

निघ्नन्प्रोथेन पृथिवीं विलिखंश्चरणैरपि ।
संमार्जन् जठरेणोर्वीं विवर्तंश्च मुहुर्मुहुः ॥ ९९६
अनु तस्यापरं भूतं महत्कैरातसंस्थितम् ।
धनुर्बाणासिमत् प्राप्तं स्त्रीगणानुगतं तदा ॥ ९९७
ततोऽहं धनुरादाय तथाक्षय्ये महेषुधी ।
अताडयं शरेणाथ तद्भूतं लोमहर्षणम् ॥ ९९८
युगपत्तं किरातस्तु विकृष्य बलवद्धनुः ।
अभ्याजघ्ने दृढतरं कंपयन्निव मे मनः ॥ ९९९
स तु मामब्रवीद्राजन् मम पूर्वपरिग्रहः ।
मृगयाधर्ममुत्सृज्य किमर्थं ताडितस्त्वया ।
एष ते निशितैर्बाणैर्दर्पं हन्मि स्थिरो भव ॥ १०००
ततो गिरिमिवात्यर्थमावृणोन्मां महाशरैः ।
तं चाहं शरवर्षेण महता समवाकिरम् ॥ १००१
ततः शरैर्दीप्तमुखैर्यन्त्रितैरनुमन्त्रितैः ।
प्रत्यविध्यमहं तं तु वज्रैरिव शिलोच्चयम् ॥ १००२
तस्य तच्छतधा रूपमभवच्च सहस्रधा ।
तानि चास्य शरीराणि शरैरहमताडयम् ॥ १००३
यदाभिभवितुं बाणैर्न च शक्नोमि तं रणे ।
ततो महास्त्रमातिष्ठं वायव्यं भरतर्षभ ॥ १००४
न चैनमशकं हंतुं तदद्भुतमिवाऽभवत् ।
तस्मिन्प्रतिहते चास्त्रे विस्मयो मे महानभूत् ॥ १००५
भूय एव महाराज सविशेषमहं ततः ।
अस्त्रपूगेन महता रणे भूतमवाकिरम् ॥ १००६
स्थूणाकर्णमथो जालं शरवर्षमथोल्बणम् ।
शलभास्त्रमश्मवर्षं समास्थायाहमभ्ययाम् ॥ १००७
जग्रास प्रसभं तानि सर्वाण्यस्त्राणि मे नृप ।
तेषु सर्वेषु जग्धेषु ब्रह्मास्त्रमहमादिशम् ॥ १००८
तदप्यस्त्रं महातेजाः क्षणेनैव व्यशातयत् ।
ब्रह्मास्त्रे तु हते राजन्भयं मां महदाविशत् ॥ १००९
हतेष्वस्त्रेषु सर्वेषु भक्षितेष्वायुधेषु च ।
मम तस्य च भूतस्य बाहुयुद्धमवर्तत ॥ १०१०

व्यायामं मुष्टिभिः कृत्वा तलैरपि समागतैः ।
अपारयंश्च तद्भूतं निश्चेष्टमगमं महीम् ॥ १०११
ततः प्रहस्य तद्भूतं तत्रैवांतरधीयत ।
सह स्त्रीभिर्महाराज पश्यतो मेऽद्भुतोपमम् ॥ १०१२
एवं कृत्वा स भगवांस्ततोऽन्यद्रूपमास्थितः ।
दिव्यमेव महाराज वसानोऽद्भुतमंबरम् ॥ १०१३
हित्वा किरातरूपं च भगवांस्त्रिदशेश्वरः ।
स्वरूपं दिव्यमास्थाय तस्थौ तत्र महेश्वरः ।
उमासहायो व्यालधृग्बहुरूपः पिनाकधृक् ॥ १०१४
स मामभ्येत्य समरे तथैवाभिमुख स्थितम् ।
शूलपाणिरथोवाच तुष्टोऽस्मीति परंतप ॥ १०१५
प्रणम्य मनसा शर्वं ततो वचनमाददे ।
अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित् ॥ १०१६
ददानीत्येव भगवानब्रवीत्र्यंबकश्च माम् ।
प्रददौ च मम प्रीतः सोऽस्त्रं पाशुपतं महत् ॥ १०१७
उवाच च महादेवो दत्वा मेऽस्त्र सनातनम् ।
न प्रयोज्य भवेदेतन्मानुषेषु कथंचन ॥ १०१८
जगद्विनिर्दहेदेवमल्पतेजासि पातितम् ।
पीड्यमानेन बलवत्प्रयोज्यं स्याद्धनंजय ॥ १०१९
तदप्रतिहत दिव्यं सर्वास्त्रप्रतिषेधनम् ।
मूर्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे ॥ १०२०
उत्सादनममित्राणां परसेनानिकर्तनम् ।
दुरासदं दुष्प्रसहं सुरदानवराक्षसैः ॥ १०२१
अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशम् ।
प्रेक्षतश्चैव मे देवस्तत्रैवांतरधीयत ॥ १०२२
ततो मरुत्वान् हरिभिर्युक्तैर्वाहैः स्वलंकृतैः ।
शचीसहायस्तत्रायात्सह सर्वैस्तदामरैः ॥ १०२३
एतस्मिन्नेव काले तु कुबेरो नरवाहनः ।
दर्शयामास मां राजन् लक्ष्म्या परमया युतः ॥ १०२४
दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितम् ।
वरुणं देवराजं च यथास्थानमवस्थितम् ॥ १०२५

ते मामूचुर्महाराज सांत्वयित्वा नरर्षभ ।
सव्यसाचिन्निरीक्षास्मॉल्लोकपालानवस्थितान् ॥ १०२६
सुरकार्यार्थसिद्ध्यर्थं दृष्टवानसि शंकरम् ।
अस्मत्तोऽपि गृहाण त्वमस्त्राणीति समंततः ॥ १०२७
ततोऽहं प्रयतो भूत्वा प्रणिपत्य सुरर्षभान् ।
प्रत्यगृह्णं तदास्त्राणि महान्ति विधिवद्विभो ॥ १०२८
मघवानपि देवेशो रथमारुह्य सुप्रभम् ।
उवाच भगवान् स्वर्गं गंतव्यं फाल्गुन त्वया ॥ १०२९
त्वया हि तीर्थेषु पुरा समाप्लावः कृतोऽसकृत ।
तपश्चेदं महत्तप्तं स्वर्गं गंतासि पाडव ॥ १०३०
मातलिर्मन्नियोगात्त्वां त्रिदिवं प्रापयिष्यति ।
विदितस्त्वं हि देवानां मुनीनां च महात्मनाम् ॥ १०३१
अथापश्यं हरियुजं रथमैंद्रमुपस्थितम् ।
दिव्यं मायामयं पुण्यं यत्र मातलिना नृप ॥ १०३२
लोकपालेषु यस्तेषु मामुवाचाथ मातलिः ।
द्रष्टुमिच्छति शक्रस्त्वां देवराजो महाद्युते ॥ १०३३
ततः शक्रस्य भवनमपश्यममरावतीम् ।
दिव्यैः कामफलैर्वृक्षै रत्नैश्च समलंकृताम् ॥ १०३४
न तत्र सूर्यस्तपति न शीतोष्णे न च क्लम ।
न बाधते तत्र रजस्तत्रास्ति न जरा नृप ॥ १०३५
न तत्र शोको दैन्यं वा दौर्बल्य चोपलक्ष्यते ।
न क्रोधलोभौ तत्रास्तां सुरादीनां विशांपते ॥ १०३६
नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ।
पुष्करिण्यश्च विविधाः पद्मसौगंधिकायुताः । १०३७
शीतस्तत्र ववौ वायुः सुगंधी जीवनः शुचिः ।
सर्वरत्नविचित्रा च भूमिः पुष्पाविभूषिता ॥ १०३८
विमानगामिनश्चात्र दृश्यते बहवोऽम्बरे ॥ १०३९
ततोऽपश्यं वसून्रुद्रान् साध्यांश्च स मरुद्गणाम् ।
आदित्यानश्विनौ चैव तान्सर्वान्प्रत्यपूजयम् ॥ १०४०
प्रविश्य तां पुरीं दिव्यां देवगंधर्वपूजिताम् ।

देवराजं सहस्राक्षमुपातिष्ठं कृतांजलिः ।
ददावर्धासनं प्रीतः शक्रो मे ददतां वरः ॥ १०४१
तत्राहं देवगंधर्वैः सहितो भूरिदक्षिणैः ।
अस्त्रार्थमवसं स्वर्गे शिक्षाणोऽस्त्राणि भारत ॥ १०४२
तिस्रः कोटयः समाख्याता दानवाः शक्रशत्रवः ।
निवातकवचा घोरास्तैर्मया विनिपातिताः ॥ १०४३
इदं च मे तनुत्राणं प्रायच्छन्मघवा प्रभुः ।
अभेद्य कवचं दिव्यं स्रजं चैव हिरण्मयीम् ॥ १०४४
देवदत्तं च मे शंखं पुनः प्रादान्महारवम् ।
दिव्यं चेदं किरीटं मे स्वयमिंद्रो युयोज ह ॥ १०४५
एवं संपूजितस्तत्र सुखमस्म्युषितो नृप ।
इंद्रस्य भवने पुण्ये गंधर्वाशिशुभिः सह ॥ १०४६
ततो मामब्रवीच्छक्रः प्रीतिमानमरैः सह ।
समयोऽर्जुन गंतुं ते भ्रातरो हि स्मरंति ते ॥ १०४७
एवमिंद्रस्य भवने पंच वर्षाणि भारत ।
उषितानि मया राजन् स्मरता द्यूतजं कलिम् ॥ १०४८
ततो भवंतमद्राक्षं भ्रातृभिः परिवारितम् ।
गंधमादनपादस्य पर्वतस्यास्य मूर्धनि ॥ १०४९
यु० उ०—दिष्ट्या धनंजयास्त्राणि त्वया प्राप्तानि भारत ।
दिष्ट्या चाराधितो राजा देवानामीश्वरः प्रभुः ॥ १०५०
दिष्ट्या च भगवान्स्थाणुर्देव्या सह परंतप ।
साक्षाद्दृष्टः स्वयुद्धेन तोषितश्च त्वयानघ ॥ १०५१
दिष्ट्या च लोकपालैस्त्वं समेतो भरतर्षभ ।
दिष्ट्या वर्द्धामहे पार्थ दिष्ट्यासि पुनरागतः ॥ १०५२
अद्य कृत्स्नां महीं देवीं विजितां पुरमालिनीम् ।
मन्ये च धृतराष्ट्रस्य पुत्रानपि वशीकृतान् ॥ १०५३

---

## २१

बह्वाश्चर्ये वने तेषां वसतामुग्रधन्वनाम् ।
प्राप्तानामाश्रमं राजन् राजर्षेर्वृषपर्वणः ॥ १०५४

यदृच्छया धनुष्पाणिर्बद्धखड्गो वृकोदरः ।
ददर्श तद्वनं रम्यं देवगंधर्वसेवितम् ॥ १०५५
स तत्र मनुजव्याघ्रो वने वनचरोपमः ।
पद्भ्यामपि समापेदे भीमसेनो महाबलः ॥ १०५६
स ददर्श महाकायं भुजंगं लोमहर्षणम् ।
गिरिदुर्गे समापन्नं कायेनावृत्य कंदरम् ॥ १०५७
पर्वताभोगवर्ष्माणमतिकाय महाबलम् ।
चित्रांगमगजैश्चित्रैर्हरिद्रासदृशच्छविम् ॥ १०५८
गुहाकारेण वक्त्रेण चतुर्दंष्ट्रेण राजता ।
दीप्ताक्षेणातिताम्रेण लिहानं सृक्किणी मुहुः ॥ १०५९
त्रासनं सर्वभूतानां कालांतकयमोपमम् ।
निःश्वासक्ष्वेडनादेन भर्त्सयतमिव स्थितम् ॥ १०६०
स भीम सहसाऽभ्येत्य पृदाकुः कुपितो भृशम् ।
जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् ॥ १०६१
तेन संस्पृष्टगात्रस्य भीमसेनस्य वै तदा ।
संज्ञा मुमोह सहसा वरदानेन तस्य हि ॥ १०६२
विस्फुरन्शनकैर्भीमो न शशाक विचेष्टितुम् ।
नागायुतसमप्राणः सिंहस्कंधो महाभुजः ॥ १०६३
निगृह्यैनं महाबाहुं ततः स भुजगस्तदा ।
विमुच्यास्य भुजौ पीनाविदं वचनमब्रवीत् ॥ १०६४
दिष्टस्त्वं क्षुधितस्याद्य देवैर्भक्ष्यो महाभुज ।
दिष्ट्या कालस्य महतः प्रियाः प्राणा हि देहिनाम् ॥ १०६५
नहुषो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ।
तवैव पूर्वः पूर्वेषामार्योर्वंशधरः सुतः ॥ १०६६
सोऽहं शापादगस्त्यस्य ब्राह्मणानवमन्य च ।
इमामवस्थामापन्नः पश्य दैवमिदं मम ॥ १०६७
न हि मे मुच्यते कश्चित्कथंचित्प्रग्रहं गतः ।
गजो वा महिषो वापि षष्ठे काले नरोत्तम ॥ १०६८
तमुवाच महाबाहुर्भीमसेनो भुजंगमम् ।
न च कुप्ये महासर्प न चात्मानं विगर्हये ॥ १०६९

दैवं पुरुषकारेण को वंचयितुमर्हति ।
दैवमेव परं मन्ये पुरुषार्थो निरर्थकः ॥ १०७०
किं तु नाद्यानुशोचामि तथात्मानं विनाशितम् ।
यथा तु विपिने न्यस्तान्भ्रातॄन्राज्यपरिच्युतान् ॥ १०७१
विनष्टमथ मां श्रुत्वा भविष्यति निरुद्यमाः ।
मातरं चैव शोचामि कृपणां पुत्रगृद्धिनीम् ॥ १०७२
एवंविधं बहु तदा विललाप वृकोदरः ।
भुजंगभोगसंरुद्धो नाशकच्च विचेष्टितुम् ॥ १०७३
युधिष्ठिरस्तु कौंतेयो बभूवास्वस्थचेतनः ।
अनिष्टदर्शनान्घोरानुत्पातान्परिचिंतयन् ॥ १०७४
धर्मराजोऽपि मेधावी मन्यमानो महद्भयम् ।
द्रौपदीं परिपप्रच्छ क्व भीम इति भारत ॥ १०७५
शशंस तस्मै पांचाली चिरयातं वृकोदरम् ॥ १०७६
स प्राचीं दिशमास्थाय महतो गजयूथपान् ।
ददर्श पृथिवीं चिह्नैर्भीमस्य परिचिह्निताम् ॥ १०७७
स गत्वा तैस्तदा चिह्नैर्ददर्श गिरिगह्वरे ।
ईरिणे निर्जले देशे कंटकिद्रुमसकुले ।
गृहीतं भुजगेंद्रेण निश्चेष्टमनुजं तदा ॥ १०७८
भी० उ०—अयमार्य महासत्वो भक्ष्यार्थं मां गृहीतवान् ।
नहुषो नाम राजर्षिः प्राणवानिव संस्थितः ॥ १०७९
यु० उ०—मुच्यतामयमायुष्मन् भ्राता मेऽमितविक्रमः ।
वयमाहारमन्यं ते दास्यामः क्षुन्निवारणम् ॥ १०८०
अ० उ०—व्रतमेतन्महाबाहो विषयं मम यो व्रजेत् ।
स मे भक्ष्यो भवेत्तात त्वं चापि विषये मम ॥ १०८१
प्रश्नानुच्चारितानद्य व्याहरिष्यसि चेन्मम ।
अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् ॥ १०८२
यु० उ०—ब्रूहि सर्प यथाकामं प्रतिवक्ष्यामि ते वचः ।
अपि चेच्छक्नुयां प्रीतिमाहर्तुं ते भुजंगम ॥ १०८३
अ० उ०—ब्राह्मणः को भवेद्राजन् वेद्यं किं च युधिष्ठिर ।
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे ॥ १०८४

युधिष्ठिर उवाच—सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यंते यत्र नागेंद्र स ब्राह्मण इति स्मृतिः ॥ १०८५
वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखं च यत् ।
यत्र गत्वा न शोचंति भवतः किं विवक्षितम् ॥ १०८६
अ० उ०—चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि ॥ १०८७
शूद्रेष्वपि च सत्यं च दानमक्रोध एव च ।
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर ॥ १०८८
वेद्यं यच्चात्र निर्दुःखमसुखं च नराधिप ।
ताभ्यां हीनं पदं चान्यन्न तदस्तीति लक्षये ॥ १०८९
यु० उ०—शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ १०९०
यत्रैतल्लक्ष्यते सर्प वृत्त स ब्राह्मणः स्मृत. ।
यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत् ॥ १०९१
यत्पुनर्भवता प्रोक्तं न वेद्य विद्यतीति च ।
ताभ्यां हीनमतोऽन्यत्र पदं नास्तीति चेदपि ॥ १०९२
एवमेतन्मत सर्प ताभ्या हीनं न विद्यते ।
यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता ॥ १०९३
एवं वै सुखदुःखाभ्या हीनं नास्ति पदं क्वचित् ।
एषा मम मतिः सर्प यथा वा मन्यते भवान् ॥ १०९४
अ० उ०—यदि ते वृत्ततो राजन्ब्राह्मणः प्रसमीक्षितः ।
वृथा जातिस्तदायुष्मन्कृतिर्यावन्न विद्यते ॥ १०९५
यु० उ०—जातिरत्र महासर्प मनुष्यत्वे महामते ।
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥ १०९६
सर्वे सर्वास्वपत्यानि जनयंति सदा नराः ।
प्राङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥ १०९७
इदमार्षं प्रमाणं च ये यजामह इत्यपि ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥ १०९८
प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ १०९९
तावच्छूद्रसमो ह्येष यावद्वेदे न जायते ।
तस्मिन्नेवं मतिद्वैधे मनुः स्वायंभुवोऽब्रवीत् ॥ ११००

कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते ।
संकरस्तत्र नागेंद्र बलवान्प्रसमीक्षितः ॥ ११०१
यत्रेदानीं महासर्प सस्कृतं वृत्तमिष्यते ।
त ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तम ॥ ११०२
अ० उ०—श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर ।
भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरम् ॥ ११०३
यु० उ०—भवानेतादृशो लोके वेदवेदांगपारगः ।
ब्रूहि किं कुर्वतः कर्म भवेद्गतिरनुत्तमा ॥ ११०४
अ० उ०—पात्रे दत्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत ।
अहिंसानिरतः स्वर्गं गच्छेदिति मतिर्मम ॥ ११०५
तिस्रो वै गतयो राजन् परिदिष्टाः स्वकर्मभिः ।
मानुष्यं स्वर्गवासश्च तिर्यग्योनिश्च तत्त्रिधा ॥ ११०६
तत्र वै मानुषाल्लोकाद्दानादिभिरतंद्रितः ।
अहिंसार्थसमायुक्तैः कारणैः स्वर्गमश्नुते ॥ ११०७
कामक्रोधसमायुक्तो हिंसालोभसमन्वितः ।
मनुष्यत्वात्परिभ्रष्टस्तिर्यग्योनौ प्रसूयते ॥ ११०८
तिर्यग्योन्याः पृथग्भावो मनुष्यार्थे विधीयते ।
गवादिभ्यस्तथाऽश्वेभ्यो देवत्वमपि दृश्यते ॥ ११०९
सोऽयमेता गतीस्तात जंतुश्चरति कार्यवान् ।
नित्ये महति चात्मानमवस्थापयते द्विजः ॥ १११०
जातो जातश्च बलवान् भुंक्ते चात्मा सदेहवान् ।
फलार्थस्तात निष्पृक्तः प्रजालक्षणभावनः ॥ ११११
यु० उ०—मनसश्चापि बुद्धेश्च ब्रूहि मे लक्षणं परम् ।
एतदध्यात्मविदुषां परं कार्यं विधीयते ॥ १११२
अ० उ०—बुद्धिरात्मानुगातीव उत्पातेन विधीयते ।
तदाश्रिता हि सा ज्ञेया बुद्धिस्तस्यैषिणी भवेत् ॥ १११३
बुद्धिरुत्पद्यते कार्यान्मनस्तूत्पन्नमेवहि ।
बुद्धेर्गुणविधिर्नास्ति मनस्तद्गुणवद्भवेत् ॥ १११४
यु० उ०—अहो बुद्धिमतां श्रेष्ठ शुभा बुद्धिरियं तव ।
विदितं वेदितव्यं ते कस्मान्मामनुपृच्छसि ॥ १११५

सर्वज्ञं त्वां कथं मोह आविशत्स्वर्गवासिनम् ।
अ० उ०—सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरम् ॥ १११६
वर्तमानः सुखे सर्वो मुह्यतीति मतिर्मम ।
सोऽहमैश्वर्यमोहेन मदाविष्टो युधिष्ठिर ॥ १११७
पतितः प्रतिसंबुद्धस्त्वां तु संबोधयाम्यहम् ।
ब्रह्मर्षीणां सहस्रं हि उवाह शिबिकां मम ॥ १११८
तत्र ह्यगस्त्यः पादेन वहन् स्पृष्टो मया मुनिः ।
अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥ १११९
ततः स मामुवाचेदं प्रपतंतं कृपान्वितः ।
युधिष्ठिरो धर्मराजः शापात्त्वा मोक्षयिष्यति ॥ ११२०
ततो मे विस्मयो जातस्तदृष्ट्वा तपसो बलम् ।
ब्रह्म च ब्राह्मणत्वं च येन त्वाऽहमचूचुदम् ॥ ११२१
सत्यं दमस्तपो दानमहिंसा धर्मनित्यता ।
साधकानि सदा पुंसां न जातिर्न कुलं नृप ॥ ११२२
अरिष्ट एष ते भ्राता भीमसेनो महाबलः ।
स्वस्ति तेऽस्तु महाराज गमिष्यामि दिवं पुनः ॥ ११२३
इत्युक्त्वाऽजगर देहं मुक्त्वा स नहुषो नृप. ।
दिव्यं वपुः समास्थाय गतास्त्रिदिवमेव ह ॥ ११२४
युधिष्ठिरोऽपि धर्मात्मा भ्रात्रा भीमेन संगतः ।
धौम्येन सहितः श्रीमानाश्रम पुनरागमत् ॥ ११२५
ते वै मुमुदिरे वीराः प्रसन्नसलिला शिवाम् ।
पश्यंतो दृढधन्वानः परिपूर्णा सरस्वतीम् ॥ ११२६
तेषा पुण्यतमा रात्रिः पर्वसंधौ स्म शारदी ।
तत्रैव वसतामासीत् कार्तिकी जनेमजय ॥ ११२७
तमिस्राभ्युदये तस्मिन् धौम्येन सह पांडवाः ।
सूतैः पौरोगवैश्चैव काम्यकं प्रययुर्वनम् ॥ ११२८

---

## २२

ततस्ते पांडवाः शीघ्रं प्रययुर्धर्मकोविदाः ।
ब्राह्मणैः सहिता राजन् ये च तत्र सहोषिताः ।
इंद्रसेनादिभिश्चैव प्रेष्यैरनुगतास्तदा ॥ ११२९

ते यात्वाऽनुसृतैर्मार्गैः स्वच्छैः शुचिजलान्वितैः ।
ददृशुः काम्यकं पुण्यमाश्रमं तपसा युतम् ॥ ११३०
पांडवा मृगयाशीलाश्चरंतस्तन्महद्वनम् ।
विजह्रुरिंद्रप्रतिमाः कंचित्कालमरिंदम ॥ ११३१
ततस्ते यौगपद्येन ययुः सर्वे चतुर्दिशम् ।
मृगयां पुरुषव्याघ्रा ब्राह्मणार्थे परंतपाः ॥ ११३२
द्रौपदीमाश्रमे न्यस्य तृणबिंदोरनुज्ञया ।
महर्षेर्दीप्ततपसो धौम्यस्य च पुरोधसः ॥ ११३३
ततस्तु राजा सिंधूनां वार्धक्षत्रिर्महायशाः ।
विवाहकामः शाल्वेयान् प्रयातः सोऽभवत्तदा ॥ ११३४
तत्रापश्यत् प्रियां भार्यां पांडवाना यशस्विनीम् ।
तिष्ठंतीमाश्रमद्वारि द्रौपदीं निर्जने वने ॥ ११३५
विभ्राजमानां वपुषा बिभ्रन्तीं रूपमुत्तमम् ।
भ्राजयन्तीं वनोद्देशं नीलाभ्रमिव विद्युतम् ॥ ११३६
ततः स राजा सिंधूना वार्द्धक्षत्रिर्जयद्रथः ।
विस्मितस्त्वनवद्यांगीं दृष्ट्वा ता दुष्टमानसः ॥ ११३७
स कोटिकास्यं राजानमब्रवीत् काममोहितः ।
कस्य त्वेषानवद्यांगी यदि वाऽपि न मानुषी ॥ ११३८
एता दृष्ट्वा स्त्रियो मेऽन्या यथा शाखामृगस्त्रियः ।
प्रतिभाति महाबाहो सत्यमेतद् ब्रवीमि ते ॥ ११३९
तां समाचक्ष्व कल्याणी यदि स्याच्छैब्य मानुषी ॥ ११४०
को० उ०—एषा वै द्रौपदी कृष्णा राजपुत्री यशस्विनी ।
पंचानां पाडुपुत्राणां महिषी संमता भृशम् ॥ ११४१
एवमुक्तः प्रत्युवाच पश्यामि द्रौपदीमिति ।
पतिः सौवीरसिंधूनां दुष्टभावो जयद्रथः ॥ ११४२
स प्रविश्याश्रमं पुण्यं सिंहगोष्ठं वृको यथा ।
आत्मना सप्तमः कृष्णामिदं वचनमब्रवीत् ॥ ११४३
कुशलं ते वरारोहे भर्तारस्तेऽप्यनामयाः ।
येषां कुशलकामाऽसि तेऽपि कच्चिदनामयाः ॥ ११४४
द्रौ० उ०—अपि ते कुशलं राज्ये राष्ट्रे कोषे बले तथा ।
कौरव्यः कुशली राजा कुंतीपुत्रो युधिष्ठिरः ॥ ११४५

पाद्यं प्रतिगृहाणेदमासनं च नृपात्मज ।
मृगान् पंचशतं चैव प्रातराशं ददामि ते ॥ ११४६
ऐणेयान् पृषतान् न्यंकून् हरिणांश्छरभांश्छशान् ।
प्रदास्यति स्वयं तुभ्यं कुंतीपुत्रो युधिष्ठिरः ॥ ११४७
ज० उ०—कुशलं प्रातराशस्य सर्वं मे दित्सितं त्वया ।
एहि मे रथमारोह सुखमाप्नुहि केवलम् ॥ ११४८
गतश्रीकान् हृतराज्यान् कृपणान् गतचेतसः ।
अरण्यवासिनः पार्थान्नानुरोद्धुं त्वमर्हसि ॥ ११४९
श्रिया विहीना राष्ट्राच्च विनष्टाः शाश्वतीः समाः ।
अलं ते पांडुपुत्राणां भक्त्या क्लेशमुपासितुम् ॥ ११५०
भार्या मे भव सुश्रोणि त्यजैनान् सुखमाप्नुहि ।
अखिलान् सिंधुसौवीरानाप्नुहि त्वं मया सह ॥ ११५१
इत्युक्ता सिंधुराजेन वाक्यं हृदयकंपनम् ।
कृष्णा तस्मादपाक्रामद्देशात्सभ्रुकुटीमुखी ॥ ११५२
अवमत्यास्य तद्वाक्यमाक्षिप्य च सुमध्यमा ।
मैवमित्यब्रवीत्कृष्णा लज्जस्वेति च सैंधवम् ॥ ११५३
सा ताननुप्रेक्ष्य विशालनेत्रा जिघृक्षमाणानवभर्त्सयंती ।
प्रोवाच मा मा स्पृशतेति भीता धौम्यं प्रचुक्रोश पुरोहितं सा ॥ ११५४
जग्राह तामुत्तरवस्त्रदेशे जयद्रथस्तं समवाक्षिपत्सा ।
तया समाक्षिप्ततनुः स पापः पपात शाखीव निकृत्तमूलः ॥ ११५५
प्रगृह्यमाणा तु महाजवेन मुहुर्विनिश्वस्य च राजपुत्री ।
सा कृष्यमाणा रथमारुरोह धौम्यस्य पादावभिवाद्य कृष्णा ॥ ११५६
ततो दिशः संप्रविहृत्य पार्था मृगान् वराहान् महिषांश्च हत्वा ।
धनुर्धराः श्रेष्ठतमाः पृथिव्यां पृथक् चरंतः सहिता बभूवुः ॥ ११५७
भ्रातॄंश्च तानभ्यवदद्युधिष्ठिरः श्रुत्वा गिरो व्याहरतां मृगाणाम् ।
क्षिप्रं निवर्तध्वमलं मृगैर्नो मनो हि मे दूयति दह्यते च ॥ ११५८
सरः सुपर्णेन हृतोरगं यथा राष्ट्रं यथाऽराजकमात्तलक्ष्मि ।
एवंविधं मे प्रतिभाति काम्यकं शौंडैर्यथा पीतरसश्च कुंभः ॥ ११५९
ते सैंधवैरत्यनिलोग्रवेगैर्महाजवैर्वाजिभिरुह्यमानाः ।
युक्तैर्बृहद्भिः सुरथैर्नृवीरास्तदाश्रमायाभिमुखा बभूवुः ॥ ११६०

इत्येव ते तद्वनमाविशंतो महत्यरण्ये मृगयां चरित्वा ॥
बालामपश्यत तदा रुदतीं धात्रेयिकां प्रेष्यवधूं प्रियायाः ॥ ११६१
अथाब्रवीच्चारुमुखं विमृष्य धात्रेयिका सारथिमिंद्रसेनम् ।
जयद्रथेनापहृता प्रमथ्य पचेंद्रकल्पान्परिभूय कृष्णा ॥ ११६२
तिष्ठंति वर्त्मानि नवान्यमूनि वृक्षाश्च न म्लांति तथैव भग्नाः ।
गृह्णीत चापानि महाधनानि शरांश्च शीघ्रं पदवीं चरध्वम् ॥ ११६३
पुरा हि निर्भर्त्सनदण्डमोहिता प्रमोहचित्ता वदनेन शुष्यता ।
ददाति कस्मैचिदनर्हते तनुं वराज्यपूर्णामिव भस्मनि स्रुचम् ॥ ११६४
मा वः प्रियायाः सुनसं सुलोचनं चंद्रप्रभाच्छं वदनं प्रसन्नम् ।
स्पृश्याच्छुभं कश्चिदकृत्यकारी श्वा वै पुरोडाशमिवाध्वरस्थम् ॥ ११६५
यु०उ०—भद्रे प्रतिक्राम नियच्छ वाचं मास्मत्सकाशे परुषाण्यवोचः ।
एतावदुक्त्वा प्रययुर्हि शीघ्रं तान्येव वर्त्मान्यनुवर्तमानाः ॥ ११६६
मुहुर्मुहुर्व्यालवदुच्छ्वसंतो ज्यां विक्षिपंतश्च महाधनुर्भ्यः ।
ततोऽपश्यंस्तस्य सैन्यस्य रेणुमुध्दूतं वै वाजिखुरप्रणुन्नम् ॥ ११६७
पदातीनां मध्यगतं च धौम्यं विक्रोशंतं भीममभिद्रवेति ।
ते सांत्व्य धौम्यं परिदीनसत्वाः सुख भवानेत्विति राजपुत्राः ।
श्येना यथैवामिषसंप्रयुक्ता जवेन तत्सैन्यमथाभ्यधावन् ॥ ११६८
तेषां महेंद्रोपमविक्रमाणां संरब्धाना धर्षणाद्याज्ञसेन्याः ।
क्रोधः प्रजज्वाल जयद्रथं च दृष्ट्वा प्रियां तस्य रथे स्थितां च ॥ ११६९
प्रचुक्रुशुश्चाप्यथ सिंधुराज वृकोदरश्चैव धनंजयश्च ।
यमौ च राजा च महाधनुर्धरास्ततो दिशः संमुमुहुः परेषाम् ॥ ११७०

ततो घोरतमः शब्दो रणे समभवत्तदा ।
भीमार्जुनयमान् दृष्ट्वा सैन्यानां सयुधिष्ठिरान् ।
शिबिसौवीरसिंधूनां विषादश्चाप्यजायत ॥ ११७१
गजं तु सगजारोहं पदातींश्च चतुर्दश ।
जघान गदया भीमः सैंधवध्वजिनीमुखे ॥ ११७२
पार्थः पंचशतांश्छूरान्पार्वतीयान्महारथान् ।
परीप्समान सौवीरं जघान ध्वजिनीमुखे ॥ ११७३
राजा स्वयं सुवीराणां प्रवराणां प्रहारिणाम् ।
निमेषमात्रेण शतं जघान समरे तदा ॥ ११७४

ददृशे नकुलस्तत्र रथात्प्रस्कंद्य खड्गधृक् ।
शिरांसि पादरक्षाणां बीजवत्प्रवपन्मुहुः ॥ ११७५
सहदेवस्तु संधाय रथेन गजयोधिनः ।
पातयामास नाराचैर्द्रुमेभ्य इव बर्हिणः ॥ ११७६
द्वादशानां तु सर्वेषां सौवीराणां धनंजयः ।
चकर्त निशितैर्भल्लैर्धनुंषि च शिरांसि च ॥ ११७७
प्रच्छाद्य पृथिवीं तस्थुः सर्वमायोधनं प्रति ।
शरीराण्यशिरस्कानि विदेहानि शिरांसि च ॥ ११७८
हतेषु तेषु वीरेषु सिंधुराजो जयद्रथः ।
विमुच्य कृष्णां संत्रस्तः पलायनमनाऽभवत् ॥ ११७९
स तस्मिन्संकुले सैन्ये द्रौपदीमवतार्यताम् ।
प्राणप्रेप्सुरुपाधावद्वनं येन नराधमः ॥ ११८०
द्रौपदीं धर्मराजस्तु दृष्ट्वा धौम्यपुरस्कृताम् ।
माद्रीपुत्रेण वीरेण रथमारोपयत्तदा ॥ ११८१
भी० उ०—हतप्रवीरा रिपवो भूयिष्ठं विद्रुता दिशः ।
गृहीत्वा द्रौपदीं राजन्निवर्ततु भवानितः ॥ ११८२
यमाभ्यां सह राजेंद्र धौम्येन च महात्मना ।
प्राप्याश्रमपदं राजन् द्रौपदीं परिसांत्वय ॥ ११८३
न हि मे मोक्ष्यते जीवन् मूढः सैंधवको नृपः ।
पातालतलसंस्थोऽपि यदि शक्रोऽस्य सारथिः ॥ ११८४
यु० उ०—न हंतव्यो महाबाहो दुरात्माऽपि स सैंधवः ।
दुःशलामभिसंस्मृत्य गांधारीं च यशस्विनीम् ॥ ११८५
तच्छ्रुत्वा द्रौपदी भीममुवाच व्याकुलेंद्रिया ।
कुपिता ह्रीमती प्राज्ञा पती भीमार्जुनावुभौ ॥ ११८६
कर्तव्यं चेत्प्रियं मह्यं वध्यः स पुरुषाधमः ।
सैंधवापसदः पापो दुर्मतिः कुलपांसनः ॥ ११८७
इत्युक्तौ तौ नरव्याघ्रौ ययतुर्यत्र सैंधवः ।
राजा निववृते कृष्णामादाय सपुरोहितः ॥ ११८८
स प्रविश्याश्रमपदं व्यपविद्धबृसीमठम् ।
मार्कंडेयादिभिर्विप्रैरनुकीर्णं ददर्श ह ॥ ११८९

ते स्म तं मुदिता दृष्ट्वा पुनः प्रत्यागतं नृपम् ।
जित्वा तान् सिंधुसौवीरान् द्रौपदीं चाहृतां पुनः ॥ ११९०
स तैः परिवृतो राजा तत्रैवोपविवेश ह ।
प्रविवेशाश्रमं कृष्णा यमाभ्या सह भाविनी ॥ ११९१
भीमसेनार्जुनौ चापि श्रुत्वा क्रोशगतं रिपुम् ।
स्वयमश्वांस्तुदंतौ तौ जवेनैवाभ्यधावताम् ॥ ११९२
इदमत्यद्भुत चात्र चकार पुरुषोऽर्जुनः ।
क्रोशमात्रगतानश्वान् सैंधवस्य जघान यत् ॥ ११९३
स हि दिव्यास्त्रसंपन्नः कृच्छ्रकालेऽप्यसंभ्रमः ।
अकरोद्दुष्करं कर्म शरैरस्त्रानुमंत्रितैः ॥ ११९४
सैंधवस्तु हतान् दृष्ट्वा तथाऽश्वान् स्वान् सुदुःखितः ।
पलायनकृतोत्साहः प्राद्रवद्येन वै वनम् ॥ ११९५
तिष्ठ तिष्ठेति त भीमः सहसाभ्यद्रवद्बली ।
मा वधीरिति पार्थस्तं दयावान् प्रत्यभाषत ॥ ११९६
त भीमसेनो धावतमवतीर्य रथाद्बली ।
अभिद्रुत्य निजग्राह केशपक्षे ह्यमर्षणः ॥ ११९७
समुद्यम्य च त भीमो निष्पिपेष महीतले ।
शिरो गृहीत्वा राजानं ताडयामास चैव ह ॥ ११९८
पुनः संजीवमानस्य तस्योत्पतितुमिच्छतः ।
पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ॥ ११९९
किं नु शक्यं मया कर्तुं यद्राजा सततं घृणी ।
एवमुक्त्वा सटास्तस्य पंच चक्रे वृकोदरः ।
अर्धचंद्रेण बाणेन किंचिदब्रुवतस्तदा ॥ १२००
भी० उ०—दासोस्मीति त्वया वाच्यं संसत्सु च सभासु च ।
एवं ते जीवितं दद्यामेषयुद्धजितो विधिः ।
जै० उ०—एवमस्त्विति तं राजा प्रत्युवाच जयद्रथः ॥ १२०१
तत एनं विचेष्टंतं बध्वा पार्थो वृकोदरः ।
रथमारोपयामास विसंज्ञं पांसुगुंठितम् ॥ १२०२
ततस्तं रथमास्थाय भीमः पार्थानुगस्तदा ।
अभ्येत्याश्रममध्यस्थमभ्यगच्छद्युधिष्ठिरम् ॥ १२०३

राजानं चाब्रवीद्भीमो द्रौपद्याः कथ्यतामिति ।
दासभावं गतो ह्येष पांडूनां पापचेतनः ॥ १२०४
तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः ।
मुंचेममधमाचारं प्रमाणा यदि ते वयम् ॥ १२०५
द्रौपदी चाब्रवीद्भीममभिप्रेक्ष्य युधिष्ठिरम् ।
दासोऽयं मुच्यतां राज्ञस्त्वया पंचसटः कृतः ॥ १२०६
एवमुक्तस्तु सव्रीडं तूष्णीं किंचिदवाङ्मुखः ।
जगाम राजन् दुःखार्तो गंगाद्वाराय भारत ॥ १२०७
स देवं शरणं गत्वा विरूपाक्षमुमापतिम् ।
तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः ॥ १२०८

---

## २३.

यु० उ०—नात्मानमनुशोचामि नेमान्भ्रातॄन्महामुने ।
हरणं चापि राज्यस्य यथेमां द्रुपदात्मजाम् ॥ १२०९
द्यूते दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयम् ।
जयद्रथेन च पुनर्वनाच्चापि हृता बलात् ॥ १२१०
अस्ति सीमंतिनी काचिद्दृष्टपूर्वापि वा श्रुता ।
पतिव्रता महाभागा यथेयं द्रुपदात्मजा ॥ १२११
मा० उ०—आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ।
अपत्योत्पादनार्थं च तीव्रं नियममास्थितः ॥ १२१२
कस्मिंश्चित्तु गते काले स राजा नियतव्रतः ।
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ॥ १२१३
प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ।
क्रियाश्च तस्या मुदितश्चक्रे स नृपसत्तमः ॥ १२१४
सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि ।
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ॥ १२१५
सा विग्रहवतीव श्रीर्व्यवर्धत नृपात्मजा ।
कालेन चापि सा कन्या यौवनस्था बभूव ह ॥ १२१६
तां सुमध्यां पृथुश्रोणीं प्रतिमां कांचनीमिव ।
प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः ॥ १२१७

यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ॥ १२१८
पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम् ।
स्वमयन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥ १२१९
अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते भर्तरि पुत्रश्च वाच्यो मातुररक्षिता ॥ १२२०
इदं मे वचन श्रुत्वा भर्तुरन्वेषणे त्वर ।
देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥ १२२१
एवमुक्त्वा दुहितरं तथा वृद्धांश्च मंत्रिणः ।
व्यादिदेशानुयात्रं च गम्यता चेत्यचोदयत् ॥ १२२२
साऽभिवाद्य पितुः पादौ व्रीडितेव तपस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ १२२३
सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।
तपोवनानि रम्याणि राजर्षीणा जगाम ह ॥ १२२४
अथ मद्राधिपो राजा नारदेन समागत. ।
उपविष्टः सभामध्ये कथायोगेन भारत ॥ १२२५
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मंत्रिभि. ॥ १२२६
सा ब्रूहि विस्तरेणेति पित्रा संचोदिता शुभा ।
दैवतस्येव वचन प्रतिगृह्येदमब्रवीत् ॥ १२२७
आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चाच्चाधो बभूव ह ॥ १२२८
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ।
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन्पूर्ववैरिणा ॥ १२२९
स बालवत्सया सार्धं भार्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥ १२३०
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ॥ १२३१
ना० उ०—अहो बत महत्पापं सावित्र्या नृपते कृतम् ।
अजानंत्या यदनया गुणवान्सत्यवान्वृतः ॥ १२३२

एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति ।
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति ॥ १२३३
अ० उ०—एहि सावित्रि गच्छस्व अन्यं वरय शोभने ।
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः ॥ १२३४
सा० उ०—सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥ १२३५
दीर्घायुरथवाऽल्पायु सगुणो निर्गुणोऽपि वा ।
सकृद्वृता मया भर्ता न द्वितीय वृणोम्यहम् ॥ १२३६
ना० उ०—स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव ।
अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ॥ १२३७
साधयिष्याम्यह तावत्सर्वेषा भद्रमस्तु वः ।
एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिव गतः ॥ १२३८
राजापि दुहितुः सज्जं वैवाहिकमकारयत् ।
ततः सर्वान् समानीय द्विजानाश्रमवासिनः ॥ १२३९
यथाविधि समुद्वाहं कारयामासतुर्नृपौ ॥ १२४०
दत्वा सोऽश्वपतिः कन्या यथाऽर्हं च परिच्छदम् ।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥ १२४१
सत्यवानपि तां भार्यां लब्ध्वा सर्वगुणान्विताम् ।
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम् ॥ १२४२
गते पितरि सर्वाणि संन्यस्ताभरणानि सा ।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥ १२४३
परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च ।
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमादधे ॥ १२४४
श्वश्रूं शरीरसत्कारैः सर्वैराच्छादनादिभिः ।
श्वशुरं देवसत्कारैर्वाचः संयमनेन च ॥ १२४५
एवं तत्राश्रमे तेषां तदा निवसतां सताम् ।
कालतपस्यतां कश्चिदपाक्रामत भारत ॥ १२४६
सावित्र्या म्लानमानायास्तिष्ठंत्यास्तु दिवानिशम् ।
नारदेन यदुक्तं तद्वाक्यं मनसि वर्तते ॥ १२४७
चतुर्थेऽहनि मर्तव्यमिति संचिंत्य भाविनी ।
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताऽभवत् ॥ १२४८

श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ ।
दुःखान्वितायास्तिष्ठंत्या सा रात्रिर्व्यत्यवर्तत ॥ १२४९
अथ तद्दिवसं चेति हुत्वा दीप्तं हुताशनम् ।
युगमात्रोदिते सूर्ये कृत्वा पौर्वाह्णिकीः क्रियाः ॥ १२५०
ततः सर्वान्द्विजान्वृद्धान् श्वश्रूं श्वशुरमेव च ।
अभिवाद्यानुपूर्व्येण प्रांजलिर्नियता स्थिता ॥ १२५१
अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः ।
ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः ॥ १२५२
स्कंधे परशुमादाय सत्यवान्प्रस्थितो वनम् ।
सावित्री त्वाह भर्तारं नैकस्त्वं गंतुमर्हसि ॥ १२५३
सह त्वया गमिष्यामि न हि त्वां हातुमुत्सहे ।
उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः ।
गमने च कृतोत्साहां प्रतिषेद्धुं न माऽर्हसि ॥ १२५४
साऽभिवाद्याब्रवीच्छ्वश्रू श्वशुरं च महाव्रता ।
अयं गच्छति मे भर्ता फलाहारो महावनम् ॥ १२५५
इच्छेयमभ्यनुज्ञाता आर्यया श्वशुरेण ह ।
अनेन सह निर्गंतुं न मेऽद्य विरहः क्षमः ॥ १२५६
उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी ।
सह भर्त्रा हसंतीव हृदयेन विदूयता ॥ १२५७
अथ भार्यासहायः स फलान्यादाय वीर्यवान् ।
कठिनं पूरयामास ततः काष्ठान्यपाटयत् ॥ १२५८
तस्य पाटयतः काष्ठं स्वेदो वै समजायत ।
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ॥ १२५९
सोऽभिगम्य प्रियां भार्यामुवाच श्रमपीडितः ।
व्यायामेन ममानेन जाता शिरसि वेदना ॥ १२६०
शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम् ।
तत्स्वप्तुमिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे ॥ १२६१
सा समासाद्य सावित्री भर्तारमुपगम्य च ।
उत्संगेऽस्य शिरः कृत्वा निषसाद महीतले ॥ १२६२
मुहूर्तादेव चापश्यत्पुरुषं रक्तवाससम् ।
बद्धमौलिं वपुष्मंतमादित्यसमतेजसम् ॥ १२६३

श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम् ।
स्थित सत्यवतः पार्श्वे निरीक्षंतं तमेव च ॥ १२६४
तं दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनैः शिरः ।
कृतांजलिरुवाचार्ता हृदयेन प्रवेपति ॥ १२६५
दैवतं त्वाऽभिजानामि वपुरेतद्ध्यमानुषम् ।
कामया ब्रूहि देवेश कस्त्वं किं च चिकीर्षसि ॥ १२६६
य० उ०—पतिव्रतासि सावित्री तथैव च तपोऽन्विता ।
अतस्त्वामभिभाषामि विद्धि मा त्वं शुभे यमम् ॥ १२६७
अयं ते सत्यवान्भर्ता क्षीणायुः पार्थिवात्मजः ।
नेष्यामि तमहं बद्ध्वा विद्ध्येतन्मे चिकीर्षितम् ॥ १२६८
अयं च धर्मसयुक्तो रूपवान् गुणसागरः ।
नार्हो मत्पुरुषैर्नेतुमतोऽस्मि स्वयमागतः ॥ १२६९
ततः सत्यवतः कायात् पाशबद्धं वशंगतम् ।
अंगुष्ठमात्र पुरुषं निश्चकर्ष यमो बलात् ॥ १२७०
ततः समुध्दृतप्राणं गतश्वासं हतप्रभम् ।
निर्विचेष्टं शरीरं तद्बभूवाप्रियदर्शनम् ॥ १२७१
यमस्तु तं ततो बध्द्वा प्रयाता दक्षिणामुखः ।
सावित्री चैव दुःखार्ता यममेवान्वगच्छत ॥ १२७२
य० उ०—निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदेहिकम् ।
कृतं भर्तुस्त्वयानृण्यं यावद्गम्यं गत त्वया ॥ १२७३
सा० उ०—यत्र मे नीयते भर्ता स्वय वा यत्र गच्छति ।
मया च तत्र गंतव्यमेष धर्मः सनातनः ॥ १२७४
तपसा गुरुभक्त्या च भर्तुः स्नेहाद्व्रतेन च ।
तव चैव प्रसादेन न मे प्रतिहता गतिः ॥ १२७५
प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः ।
मित्रता च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ॥ १२७६
नानात्मवंतस्तु वने चरंति धर्मं च वासं च परिश्रयं च ।
विज्ञानतो धर्ममुदाहरंति तस्मात्संतो धर्ममाहुः प्रधानम् ॥ १२७७
य० उ०—निवर्त तुष्टोऽस्मि तवानया गिरा स्वराक्षरव्यंजनहेतुयुक्तया ।
वरं वृणीष्वेह विनास्य जीवितं ददामि ते सर्वमनिंदिते वरम् ॥ १२७८

सा० उ०—च्युतः स्वराज्याद्वनवासमाश्रितो विनष्टचक्षुः श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान्भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसन्निभः ॥ १२७९

य० उ०—ददामि तेऽहं तमनिंदिते वरं यथा त्वयोक्तं भविता च तत्तथा ।
तवाध्वना ग्लानिमिवोपलक्षये निवर्त गच्छस्व न ते श्रमो भवेत्॥ १२८०

सा० उ०–श्रमः कुतो भर्तृसमीपतो हि मे यतो हि भर्ता मम सा गतिर्ध्रुवा ।
यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे ॥ १२८१

सतां सकृत्संगतमीप्सितं परं ततः परं मित्रमिति प्रचक्षते ।
न चाफलं सत्पुरुषेण संगतं ततः सतां सन्निवसेत्समागमे ॥ १२८२

य० उ०—मनोऽनुकूलं बुधबुद्धिवर्धनं त्वया यदुक्तं वचनं हिताश्रयम् ।
विना पुनः सत्यवतोऽस्य जीवितं वरं द्वितीयं वरयस्व भाविनि ॥ १२८३

सा० उ०—हृतं पुरा मे श्वशुरस्य धीमतः स्वमेव राज्यं लभतां स पार्थिवः ।
जह्यात्स्वधर्मान्न च मे गुरुर्यथा द्वितीयमेतद् वरयामि ते वरम्॥ १२८४

य० उ०—स्वमेव राज्यं प्रतिपत्स्यतेऽचिरान्न च स्वधर्मात्परिहास्यते नृपः ।
कृतेन कामेन मया नृपात्मजे निवर्त गच्छस्व न ते श्रमो भवेत् ॥ १२८५

सा० उ०—अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥ १२८६

एवं प्रायश्च लोकोऽयं मनुष्याः शक्तिपेशलाः ।
संतस्ते चाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥ १२८७

य० उ०—पिपासितस्येव भवेद्यथा पयस्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं वरं वृणीष्वेह शुभे यदिच्छसि ॥१२८८

सा० उ०—ममानपत्यः पृथिवीपतिः पिता भवेत्पितुः पुत्रशतं तथौरसम् ।
कुलस्य संतानकरं च यद्भवेत्तृतीयमेतद्वरयामि ते वरम् ॥ १२८९

य० उ०—कुलस्य संतानकरं च सुवर्चसं शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे निवर्त दूरं हि पथस्त्वमागता ॥ १२९०

सा० उ०—आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः ।
तस्मात्सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥ १२९१

सौहृदात्सर्वभूतानां विश्वासो नाम जायते ।
तस्मात्सत्सु विशेषेण विश्वासं कुरुते जनः ॥ १२९२

य० उ०—उदाहृतं ते वचनं यदंगने शुभे न तादृक् त्वदृते श्रुतं मया ।
अनेन तुष्टोऽस्मि विनाऽस्य जीवितं वरं चतुर्थं वरयस्व गच्छ च ॥ १२९३

सा० उ०—ममात्मजं सत्यवतस्तथौरसं भवेदुभाभ्यामिह यत्कुलोद्वहम् ।
शतं सुतानां बलवीर्यशालिनामिदं चतुर्थं वरयामि ते वरम् ॥ १२९४
य० उ—शतं सुतानां बलवीर्यशालिनां भविष्यति प्रीतिकरं तवाबले ।
परिश्रमस्ते न भवेन्नृपात्मजे निवर्त दूरं हि पथस्त्वमागता ॥ १२९५
सा०उ०—सतां सदा शाश्वतधर्मवृत्तिः संतो न सीदंति न च व्यथंति ।
सतां सद्भिर्नाफलः संगमोऽस्ति सद्भ्यो भयं नानुवर्तंति संतः ॥ १२९६
संतो हि सत्येन नयंति सूर्यं संतो भूमिं तपसा धारयंति ।
संतो गतिर्भूतभव्यस्य राजन् सतां मध्ये नावसीदंति संतः ॥ १२९७
आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम् ।
संतः परार्थं कुर्वाणा नावेक्षंति परस्परम् ॥ १२९८
न च प्रसादःसत्पुरुषेषु मोघा न चाप्यर्थो नश्यति नापि मानः ।
यस्मादेतन्नियतं सत्सु नित्यं तस्मात्संतो रक्षितारो भवंति ॥ १२९९
य० उ०—यथा यथा भाषसि धर्मसंहितं मनोऽनुकूलं सुपदं महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा वरं वृणीष्वाप्रतिमं पतिव्रते ॥ १३००
सा० उ०—न तेऽपवर्गःसुकृताद्विना कृतस्तथा यथाऽन्येषु वरेषु मानद ।
वरं वृणे जीवतु सत्यवानयं यथा मृता ह्येवमहं पतिं विना ॥ १३०१
न कामये भर्तृविनाकृता सुखं न कामये भर्तृविनाकृता दिवम् ।
न कामये भर्तृविनाकृता श्रियं न भर्तृहीना व्यवसामि जीवितुम् १३०२
वरातिसर्गःशतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानयं तवैव सत्यं वचनं भविष्यति ॥ १३०३
तथेत्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः ।
धर्मराजःप्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥ १३०४
एष भद्रे मया मुक्तो भर्ता ते कुलनंदिनि ।
अरोगस्तव नेयश्च सिद्धार्थः स भविष्यति ॥ १३०५
चतुर्वर्षशतायुश्च त्वया सार्धमवाप्स्यति ।
त्वयि पुत्रशतं चैव सत्यवाञ्जनयिष्यति ॥ १३०६
ते चापि सर्वे राजानः क्षत्रियाः पुत्रपौत्रिणः ।
ख्यातास्त्वन्नामधेयाश्च भविष्यंतीह शाश्वताः ॥ १३०७
पितुश्च ते पुत्रशतं भविता तव मातरि ।
मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः ।
भ्रातरस्ते भविष्यंति क्षत्रियास्त्रिदशोपमाः ॥ १३०८

एवं तस्यै वरं दत्वा धर्मराजः प्रतापवान् ।
निवर्तयित्वा सावित्रीं स्वमेव भवनं ययौ ॥ १३०९
सावित्र्यपि यमे याते भर्तारं प्रतिलभ्य च ।
जगाम तत्र यत्रास्य भर्तुः शावं कलेवरम् ॥ १३१०
सा भूमौ प्रेक्ष्य भर्तारमुपसृत्योपगृह्य च ।
उत्संगे शिर आरोप्य भूमावुपविवेश ह ॥ १३११
संज्ञां च स पुनर्लब्ध्वा सावित्रीमभ्यभाषत ।
प्रोष्यागत इव प्रेम्णा पुनःपुनरुदीक्ष्य वै ॥ १३१२
स० उ०—सुचिरं बत सुप्तोऽस्मि किमर्थं वा न बोधितः ।
क्व चासौ पुरुषः श्यामो योऽसौ मां संचकर्ष ह ॥ १३१३
सा० उ०—सुचिरं त्वं प्रसुप्तोऽसि ममांके पुरुषर्षभ ।
गतः स भगवान् देवः प्रजासंयमनो यमः ॥ १३१४
विश्रांतोऽसि महाभाग विनिद्रश्च नृपात्मज ।
यदि शक्यं समुत्तिष्ठ विगाढां पश्य शर्वरीम् ॥ १३१५
उपलभ्य ततः संज्ञां सुखसुप्त इवोत्थितः ।
दिशः सर्वा वनांतांश्च निरीक्ष्योवाच सत्यवान् ॥ १३१६
स० उ०—यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे ।
स्वप्नेन यदि वा दृष्टो मयि वा सत्यमेव तत् ॥ १३१७
तमुवाचाथ सावित्री रजनी व्यवगाहते ।
श्वस्ते सर्वं यथावृत्तमाख्यास्यामि नृपात्मज ॥ १३१८
सावित्री तत उत्थाय केशान्संयम्य भाविनी ।
पतिमुत्थापयामास बाहुभ्या परिगृह्य वै ॥ १३१९
उत्थाय सत्यवांश्चापि प्रमृज्यांगानि पाणिना ।
सर्वा दिशः समालोक्य कठिने दृष्टिमादधे ॥ १३२०
सा० उ०—तमुवाचाथ सावित्री श्वः फलानि हरिष्यसि ।
योगक्षेमार्थमेतत्ते नेष्यामि परशुं त्वहम् ॥ १३२१
कृत्वा कठिनभारं सा वृक्षशाखाऽवलंबिनम् ।
गृहीत्वा परशुं भर्तुः सकाशे पुनरागमत् ॥ १३२२
वामे स्कंधे तु वामोरूर्भर्तुर्बाहुं निवेश्य च ।
दक्षिणेन परिष्वज्य जगाम गजगामिनी ॥ १३२३

स्वस्थोऽस्मि बलवानस्मि दिदृक्षुः पितरावुभौ ।
ब्रुवन्नेव त्वरायुक्तः संप्रायादाश्रमं प्रति ॥ १३२४
एतस्मिन्नेव काले तु द्युमत्सेनो महाबलः ।
लब्धचक्षु. प्रसन्नायां दृष्ट्यां सर्वं ददर्श ह ॥ १३२५
ततो मुहूर्तात्सावित्री भर्त्रा सत्यवता सह ।
आजगामाश्रम रात्रौ प्रहृष्टा प्रविवेश ह ॥ १३२६
ब्रा० उ०—समागमेन पुत्रस्य साविञ्या दर्शनेन च ।
चक्षुषश्चात्मनो लाभात्रिभिर्दिष्ट्या विवर्धसे ॥ १३२७
ततो राज्ञा सहासीनाः सर्वे ते वनवासिनः ।
जातकौतूहला. पार्थ पप्रच्छुर्नृपतेः सुतम् ॥ १३२८
गौ० उ०—अकस्माच्चक्षुषः प्राप्तिर्द्युमत्सेनस्य ते पितुः ।
नास्य त्वं कारणं वेत्सि सावित्री वक्तुमर्हति ॥ १३२९
सा० उ०—एवमेतद्यथा वेत्थ संकल्पो नान्यथा हि वः ।
न हि किंचिद्रहस्यं मे श्रूयतां तथ्यमेव तत् ॥ १३३०
मृत्युर्मे पत्युराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ॥ १३३१
सुप्तं चैनं यमः साक्षादुपागच्छत्सकिंकर : ।
स एनमनयद्बध्द्वा दिशं पितृनिषेविताम् ॥ १३३२
अस्तौषं तमहं देवं सत्येन वचसा विभुम् ।
पंच वै तेन मे दत्ता वराः शृणुत तान् मम ॥ १३३३
चक्षुषी च स्वराज्यं च द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्रशतं पुत्राणां चात्मनः शतम् ॥ १३३४
चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् ।
भर्तुर्हि जीवितार्थं तु मया चीर्णं त्विदं व्रतम् ॥ १३३५
ऋ० उ०—निमज्यमानं व्यसनैरभिद्रुतं कुलं नरेंद्रस्य तमोमये ह्रदे ।
त्वया सुशीलव्रतपुण्यया कुलं समुद्धृतं साध्वि पुनः कुलीनया ॥ १३३६
ततः प्रकृतयः सर्वाः शाल्वेभ्योऽभ्यागता नृप ।
आचख्युर्निहतं चैव स्वेनामात्येन तं द्विषम् ॥ १३३७
ऐकमत्यं च सर्वस्य जनस्याथ नृपं प्रति ।
सचक्षुर्वाऽप्यचक्षुर्वा स नो राजा भवत्विति ॥ १३३८
ततोऽभिवाद्य तान्वृद्धान् द्विजानाश्रमवासिनः ।

तैश्चाभिपूजितः सर्वैः प्रययौ नगरं प्रति ॥ १३३९
ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः ।
पुत्रं चास्य महात्मानं यौवराज्येऽभ्यषेचयन् ॥ १३४०
ततः कालेन महता सावित्र्याः कीर्तिवर्धनम् ।
तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम् । १३४१
भ्रातृणां सोदराणां च तथैवास्या भवच्छतम् ।
मद्राधिपस्याश्वपतेर्मालव्यां सुमहद्बलम् ॥ १३४२
एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ।
भर्तुः कुल च सावित्र्या सर्वं कृच्छ्रात्समुद्धृतम् ॥ १३४३
तथैवैषापि कल्याणी द्रौपदी शीलसंमता ।
तारयिष्यति वः सर्वान् सावित्रीव कुलांगना ॥ १३४४

## २४

वै० उ०—एवं हृतायां भार्यायां प्राप्य क्लेशमनुत्तमम् ।
विहाय काम्यकं राजा सह भ्रातृभिरच्युतः ॥ १३४५
पुनर्द्वैतवन रम्यमाजगाम युधिष्ठिरः ।
स्वादुमूलफल रम्यं विचित्रबहुपादपम् ॥ १३४६
अनुभुक्तफलाहाराः सर्व एव मिताशनाः ।
न्यवसन् पांडवास्तत्र कृष्णया सह भार्यया ॥ १३४७
अज्ञातवासं वत्स्यंतश्छन्ना वर्षं त्रयोदशम् ।
उपोपविश्य विद्वांसः सहिताः संशितव्रताः ॥ १३४८
ये तद्भक्ता वसति स्म वनवासे तपस्विनः ।
तानब्रुवन्महात्मानः स्थिताः प्रांजलयस्तदा ॥ १३४९
विदितं भवता सर्वं धार्तराष्ट्रैर्यथा वयम् ।
छद्मना हृतराज्याश्चानयाश्च बहुशः कृताः ॥ १३५०
उषिताश्च वने कृच्छ्रं वयं द्वादशवत्सरान् ।
अज्ञातवाससमयं शेषं वर्षं त्रयोदशम् ॥ १३५१
तद्वत्स्यामो वयं छन्नास्तदनुज्ञातुमर्हथ ।
सुयोधनश्च दुष्टात्मा कर्णश्च सहसौबल : ॥ १३५२
जानन्तो विषमं कुर्युरस्मास्वत्यंतवैरिणः ।
युक्तचाराश्च युक्ताश्च पौरस्य स्वजनस्य च ॥ १३५३

अपि नस्तद्भवेद्भूयो यद्वयं ब्राह्मणैः सह ।
समस्ताः स्वेषु राष्ट्रेषु स्वराज्यस्था भवेमहि ॥ १३५४
इत्युक्त्वा दुःखशोकार्तः शुचिर्धर्मसुतस्तदा ।
संमूर्च्छितोऽभवद्राजा साश्रुकंठो युधिष्ठिरः ॥ १३५५
तमथाश्वासयन्सर्वे ब्राह्मणाः परमाशिषः ।
प्रयुज्यापृच्छय भरतान्यथा स्वान्स्वान्ययुर्गृहान् ॥ १३५६
सह धौम्येन विद्वांसस्तथा पच च पांडवाः ।
उत्थाय प्रययुर्वीराः कृष्णामादाय धन्विनः ॥ १३५७
क्रोशमात्रमुपागम्य तस्माद्देशान्निमित्ततः ।
श्वोभूते मनुजव्याघ्राश्छन्नवासार्थमुद्यताः ॥ १३५८
पृथक्शास्त्रविदः सर्वे सर्वे मंत्रविशारदाः ।
संधिविग्रहकालज्ञा मंत्राय समुपाविशन् ॥ १३५९

॥ इति श्रीसक्षिप्तमहाभारते वनपर्व समाप्तम् ॥ श्लो स १३५९.



# ४ विराटपर्व.

## १

यु० उ०—विराटनगरे तात संवत्सरमिमं वयम् ।
कुर्वतस्तस्य कर्माणि विहरिष्याम भारत ॥ १
सभास्तारो भविष्यामि तस्य राज्ञो महात्मनः ।
कंको नाम द्विजो भूत्वा मताक्षः प्रियदेवनः ॥ २

भी० उ०—पौरोगवो ब्रुवाणोऽहं बल्लवो नाम भारत ।
सूपानस्य करिष्यामि कुशलोऽस्मि महानसे ॥ ३
द्विपा वा बलिनो राजन् वृषभा वा महाबलाः ।
विनिग्राह्या यदि मया निग्रहीष्यामि तानपि ॥ ४
ये च केचिन्नियोत्स्यंति समाजेषु नियोधकाः ।
तानहं निहनिष्यामि रतिं तस्य विवर्धयन् ॥ ५

अ० उ०—प्रतिज्ञां षंढकोऽस्मीति करिष्यामि महीपते ।
ज्याघातौ हि महांतौ मे संवर्तुं नृप दुष्करौ ॥ ६
वलयैश्छादयिष्यामि बाहू किणकृताविमौ ।
पिनद्धकंबुः पाणिभ्यां तृतीयां प्रकृतिं गतः ॥ ७
वेणीकृतशिरा राजन्नाम्ना चैव बृहन्नडा ।
गीतं नृत्तं विचित्रं च वादित्रं विविधं तथा ॥ ८
शिक्षयिष्याम्यहं राजन् विराटस्य पुरस्त्रियः ।

न० उ०—अश्वबंधो भविष्यामि विराटनृपतेरहम् ॥ ९
ग्रंथिको नाम नाम्नाहं कर्मैतत्सुप्रियं मम ।
कुशलोऽस्म्यश्वशिक्षायां तथैवाश्वचिकित्सने ॥ १०

स० उ०—गोसंख्याता भविष्यामि विराटस्य महीपतेः ।
प्रतिषेद्धा च दोग्धा च संख्याने कुशलो गवाम् ॥ ११
तंतिपाल इति ख्यातो नाम्नाहं विदितस्तथा ।
निपुणं च चरिष्यामि व्येतु ते मानसो ज्वरः ॥ १२
अहं हि सततं गोषु भवता प्रहितः पुरा ।
वृषभानपि जानामि राजन् पूजितलक्षणान् ॥ १३
येषां मूत्रमुपाघ्राय अपि वंध्या प्रसूयते ।

यु० उ०—इयं हि नः प्रिया भार्या प्राणेभ्योऽपि गरीयसी ॥ १४

मातेव परिपाल्या च पूज्या ज्येष्ठेव च स्वसा ।
केन स्म द्रौपदी कृष्णा कर्मणा विचरिष्यति ॥ १५

द्रौ० उ०—सैरंध्र्यो रक्षिता लोके भुजिष्याः संति भारत ।
नैवमन्याः स्त्रियो यांति इति लोकस्य निश्चयः ॥ १६

साहं ब्रुवाणा सैरंध्री कुशला केशकर्मणि ।
सुदेष्णां प्रत्युपस्थास्ये राजभार्यां यशस्विनीम् ॥ १७

यु० उ०—कल्याणं भाषसे कृष्णे कुले जातासि भामिनि ।
न पापमभिजानासि साध्वी साधुव्रते स्थिता ॥ १८

पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु ।
सूतपौरोगवैः सार्धं द्रुपदस्य निवेशने ॥ १९

इंद्रसेनादयश्चेमे रथानादाय केवलान् ।
यांतु द्वारवतीं शीघ्रमिति मे वर्तते मतिः ॥ २०

धौ० उ०—विदितं वो यथा सर्वं लोकवृत्तमिदं बत ।
विदितेऽपि च वक्तव्यं सुहृद्भिरनुरागतः ॥ २१

दृष्टद्वारो लभेद्द्रष्टुं रहस्येषु न विश्वसेत् ।
तदेवासनमन्विच्छेद्यत्र नाभिपतेत्परः ॥ २२

यो न यानं न पर्यंकं न पीठं न गजं रथम् ।
आरोहेत्संमतोऽस्मीति स राजवसतिं वसेत् ॥ २३

यत्र यत्रैनमासीनं शंकेरन् दुष्टचारिणः ।
न तत्रोपविशेद्यो वै स राजवसतिं वसेत् ॥ २४

न चानुशिष्याद्राजानमपृच्छंतं कदाचन ।
तूष्णीं त्वेनमुपासीत काले समभिपूजयेत् ॥ २५

नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कथंचन ।
अंतःपुरचरा ये च द्वेष्टि यानाहिताश्च ये ॥ २६

समर्थनासु सर्वासु हितं च प्रियमेव च ।
संवर्णयेत्तदेवास्य प्रियादपि हितं वदेत् ॥ २७

नाहमस्य प्रियोऽस्मीति मत्वा सेवेत पंडितः ।
अप्रमत्तश्च सततं हितं कुर्यात्प्रियं च यत् ॥ २८

रक्षिणां ह्यात्तशस्त्राणां स्थानं पश्चाद्विधीयते ।
नचोष्ठौ न भुजौ जानू न च वाक्यं समाक्षिपेत् ॥ २९

हास्यवस्तुषु चाप्यस्य वर्तमानेषु केषुचित् ।
नातिगाढं प्रहृष्येत न चाप्युन्मत्तवद्धसेत् ॥ ३०
श्रेयः सदात्मनो दृष्ट्वा परं राज्ञा न संवदेत् ।
विशेषयेन्ना राजानं योग्यभूमिषु सर्वदा ॥ ३१
अम्लानो बलवान् शूरश्छायेवानुगतः सदा ।
सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत् ॥ ३२
अन्यस्मिन्प्रेष्यमाणे तु पुरस्तात्य समुत्पतेत् ।
अहं किंकरवाणीति स राजवसतिं वसेत् ॥ ३३
यो वै गृहेभ्यः प्रवसन् प्रियाणां नानुसंस्मरेत् ।
दुःखेन सुखमन्विच्छेत् स राजवसतिं वसेत् ॥ ३४
समवेषं न कुर्वीत नोच्चैः सन्निहितो वसेत् ।
न मंत्रं बहुधा कुर्यादेवं राज्ञः प्रियो भवेत् ॥ ३५
न कर्मणि नियुक्तः सन् धनं किंचिदपि स्पृशेत् ।
प्राप्नोति हि हरन् द्रव्य बंधनं यदि वा वधम् ॥ ३६
यानं वस्त्रमलंकारं यच्चान्यत्संप्रयच्छति ।
तदेव धारयेन्नित्यमेवं प्रियतरो भवेत् ॥ ३७
एवं संयम्य चित्तानि यत्नतः पांडुनंदनाः ।
संवत्सरमिमं तात तथाशीला बुभूषत ॥ ३८
यु० उ०—अनुशिष्टाः स्म भद्रं ते नैतद्वक्तास्ति कश्चन ।
कुंतीमृते मातरं नो विदुरं वा महामतिम् ॥ ३९
एवमुक्तस्ततो राज्ञा धौम्योऽथ द्विजसत्तमः ।
तेषां समिध्य तानग्नीन् मंत्रवच्च जुहाव सः ।
समृद्धिवृद्धिलाभाय पृथिवीविजयाय च ॥ ४०
ते वीरा बद्धनिस्त्रिंशास्तथा बद्धकलापिनः ।
बद्धगोधांगुलित्राणाः कालिंदीमभितो ययुः ॥ ४१
विध्यंतो मृगजातानि महेष्वासा महाबलाः ॥ ४२
लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन् वनात् ।
धन्विनो बद्धनिस्त्रिंशा विवर्णाः श्मश्रुधारिणः ॥ ४३
स राजधानीं संप्राप्य कौंतेयोऽर्जुनमब्रवीत् ।
क्वायुधानि समासज्य प्रवेक्ष्यामः पुरं वयम् ॥ ४४
अ० उ०—इयं कूटे मनुष्येंद्र गहना महती शमी ।
भीमशाखा दुरारोहा श्मशानस्य समीपतः ॥ ४५

न चापि विद्यते कश्चिन्मनुष्य इति मे मतिः ।
योऽस्मान्निदधतो द्रष्टा भवेच्छस्त्राणि पांडवाः ।
समाधायायुधं शम्यां गच्छामो नगरं प्रति ॥ ४६
अथान्वशासन्नकुलं कुंतीपुत्रो युधिष्ठिरः ।
आरुह्येमां शमीं वीर धनूंष्येतानि निक्षिप ॥ ४७
तामुपारुह्य नकुलो धनूंषि निदधे स्वयम् ।
यत्र चापश्यत स वै तिरोवर्षाणि वर्षति ॥ ४८
शरीरं च शवस्यैकं समबध्नंत पांडवाः ।
विवर्जयिष्यंति नरा दूरादेव शमीमिमाम् ॥ ४९
विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।
अस्तौच्च मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ॥ ५०
यशोदागर्भसंभूतां नारायणवरप्रियाम् ।
नंदगोपकुले जाता मांगल्यां कुलवर्धनीम् ॥ ५१
ततो विराटं प्रथम युधिष्ठिरो राजा सभायामुपविष्टमाव्रजत् ।
वैडूर्यरूपान्प्रतिमुच्य कांचनानक्षान् स कक्षे परिगृह्य वाससा ॥ ५२
अथापरो भीमबलः श्रिया ज्वलन्नुपाययौ सिंहविलासविक्रमः ।
खजां च दर्वीं च करेण धारयन्नसिं च कालागमकोशमव्रणम् ॥ ५३
ततः केशान्समुत्क्षिप्य रेचिताग्राननिंदितान् ।
जुगूह दक्षिणे पार्श्वे मृदूनसितलोचना ॥ ५४
वासश्च परिधायैकं कृष्णं सुमलिनं महत् ।
कृत्वा वेषस्तु सैरंध्र्यास्ततो व्यचरदार्तवत् ॥ ५५
विराटस्य तु कैकेयी भार्या परमसंमता ।
आलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजाम् ॥ ५६
सहदेवोऽपि गोपानां कृत्वा वेशमनुत्तमम् ।
भाषां चैषां समास्थाय विराटं समुपाययौ ॥ ५७
अथापरो दृश्यत रूपसंपदा स्त्रीणामलंकारधरो बृहत्पुमान् ।
प्राकारवप्रे प्रतिमुच्य कुंडले दीर्घे च कंबूपरि हाटके शुभे ॥ ५८
अथापरो दृश्यत पाण्डवः प्रभुर्विराटराजं तरसा समेयिवान् ।
स वै हयानैक्षत तांस्ततस्ततो विराटराज्ञा मुदितेन पूजितः ॥ ५९

## २

वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा ।
महारथेषु छन्नेषु मासा दश समाययुः ॥ ६०
तस्मिन्वर्षे गतप्राये कीचकस्तु महाबलः ।
सेनापतिर्विराटस्य ददर्श द्रुपदात्मजाम् ॥ ६१
तां दृष्ट्वा देवगर्भाभां चरंतीं देवतामिव ।
कीचकः कामयामास कामबाणप्रपीडितः ॥ ६२
की० उ०—का त्वं कस्यासि कल्याणि कुतो वा त्वं वरानने ।
प्राप्ता विराटनगरं तत्त्वमाचक्ष्व शोभने ॥ ६३
लक्ष्मीः पद्मालया का त्वमथ भूतिः सुमध्यमे ।
अतीव भ्राजसे सुभ्रु प्रभेवेंदोरनुत्तमा ॥ ६४
अपि चेक्षणपक्ष्माङ्कं स्मितज्योत्स्नोपमं शुभम् ।
दिव्यांशुरश्मिभिर्वृत्तं दिव्यकांति मनोरमम् ॥ ६५
निरीक्ष्य चंद्रवक्त्रं ते लक्ष्म्यानुपमया युतम् ।
को नेह कृत्स्ने जगति कामस्य वशगो भवेत् ॥ ६६
कुड्मलांबुरुहाकारौ तव सुभ्रु पयोधरौ ।
कामप्रतोदाविव मां तुदतश्चारुहासिनि ॥ ६७
बलीविभंगचतुरं स्तनभारविनामितम् ।
कराग्रसंमितं मध्य तवेदं तनुमध्यमे ॥ ६८
कामं प्रकामं सेव त्व मया सह विलासिनि ।
नार्हसीहासुखं वस्तुं सुखार्हा सुखवर्जिता ॥ ६९
सै० उ०—अप्रार्थनीयामिह मां सूतपुत्राभिमन्यसे ।
निहीनवर्णां सैरध्रीं बीभत्सां केशकारिणीम् ॥ ७०
परदारास्मि भद्रं ते न युक्तं त्वयि सांप्रतम् ।
दयिताः प्राणिनां दारा धर्मं समनुचिंतय ॥ ७१
की० उ०—नार्हस्येवं वरारोहे प्रत्याख्यातुं वरानने ।
मां मन्मथसमाविष्टं त्वत्कृते चारुहासिनि ॥ ७२
अहं हि सुभ्रु राज्यस्य कृत्स्नस्यास्य सुमध्यमे ।
प्रभुर्वासयिता चैव वीर्येणाप्रतिमः क्षितौ ॥ ७३
पृथिव्यां मत्समो नास्ति कश्चिदन्यः पुमानिह ।
रूपयौवनसौभाग्यैर्भोगैश्चानुत्तमैः शुभैः ॥ ७४

सर्वकामसमृद्धेषु भोगेष्वनुपमेष्विह ।
भोक्तव्येषु च कल्याणि कस्माद्दास्ये रता ह्यसि ॥ ७५
सै० उ०—मा सूतपुत्र मुह्यस्व माऽद्यात्याक्षीः स्वजीवितम् ।
जानीहि पंचभिर्वीरैर्नित्यं मामभिरक्षिताम् ॥ ७६
न चाप्यहं त्वया लभ्या गंधर्वाः पतयो मम ।
ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः ॥ ७७
यथा निश्चेतनो बालः कूलस्थः कूलमुत्तरम् ।
तर्तुमिच्छति मंदात्मा तथा त्वं कर्तुमिच्छसि ॥ ७८
वै० उ०—प्रत्याख्यातो राजपुत्र्या सुदेष्णां कीचकोऽब्रवीत् ।
अमर्यादेन कामेन घोरेणाभिपरिप्लुतः ॥ ७९
यथा कैकेयि सैरंध्री समेयात्तद्विधीयताम् ।
येनोपायेन सैरंध्री भजेन्मा गजगामिनी ।
तं सुदेष्णे परीप्सस्व मोहात्प्राणान्प्रहासिषम् ॥ ८०
तस्य सा बहुशः श्रुत्वा वाचं विलपतस्तदा ।
विराटमहिषी देवी कृपां चक्रे मनस्विनी ॥ ८१
सु० उ०—उत्तिष्ठ गच्छ सैरंध्री कीचकस्य निवेशनम् ।
पानमानय कल्याणि पिपासा मा प्रबाधते ॥ ८२
सै० उ०—न गच्छेयमहं तस्य राजपुत्रि निवेशनम् ।
त्वमेवं राज्ञि जानासि यथा स निरपत्रपः ॥ ८३
सु० उ०—नैव त्वां जातु हिंस्यात्स इतः संप्रेषितां मया ।
इत्युक्त्वा प्रददौ पात्रं सपिधानं हिरण्मयम् ॥ ८४
सा शंकमाना रुदती दैवं शरणमीयुषी ।
प्रातिष्ठत सुराहारी कीचकस्य निवेशनम् ॥ ८५
तां मृगीमिव संत्रस्तां दृष्ट्वा कृष्णां समीपगाम् ।
उदतिष्ठन्मुदा सूतो नावं लब्ध्वेव पारगः ॥ ८६
की० उ०—स्वागतं ते सुकेशांते सुव्युष्टा रजनी मम ।
स्वामिनी त्वमनुप्राप्ता प्रकुरुष्व मम प्रियम् ॥ ८७
अस्ति मे शयनं दिव्यं त्वदर्थमुपकल्पितम् ।
एहि तत्र मया सार्धं पिबस्व मधुमाधवीम् ॥ ८८
सै० उ०—अप्रैषीद्राजपुत्री मां सुराहारीं तवांतिकम् ।
पानमाहर मे क्षिप्रं पिपासा मयि चाब्रवीत् ॥ ८९

की० उ०—अन्या भद्रे नयिष्यंति राजपुत्र्याः प्रतिश्रुतम् ।
इत्येतां दक्षिणे पाणौ सूतपुत्रः परामृशत् ॥ ९०
सा गृहीता विधुन्वाना भूमावाक्षिप्य कीचकम् ।
सभां शरणमागच्छद्यत्र राजा युधिष्ठिरः ॥ ९१
तां कीचकः प्रधावंती केशपाशे परामृशत् ।
अथैनां पश्यतो राज्ञः पातयित्वा पदाऽवधीत् ॥ ९२
सा सभाद्वारमागत्य रुदती मत्स्यमब्रवीत् ॥
दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा ॥ ९३
येषां वैरी न स्वपिति षष्ठेपि विषये वसन् ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥ ९४
सर्वलोकमिमं हन्युर्धर्मपाशासितास्तु ये ।
तेषां वै मानिनी भार्या सूतपुत्रः पदावधीत् ॥ ९५
कथं ते सूतपुत्रेण वध्यमानां प्रियां सतीम् ।
मर्षयंति यथा क्लीबा बलवंतोऽमितौजसः ॥ ९६
मयात्र शक्यं किं कर्तुं विराटे धर्मदूषके ।
यः पश्यन्मां मर्षयति वध्यमानामनागसम् ॥ ९७
अथाब्रवीद्राजपुत्री कौरव्यो महिषीं प्रियाम् ।
गच्छ सैरंध्रि मात्र स्थाः सुदेष्णाया निवेशनम् ॥ ९८
भर्तारमनुरुंधंत्यः क्लिश्यते वीरपत्नयः ।
शुश्रूषया क्लिश्यमानाः पतिलोकं जयंत्युत ॥ ९९
मन्ये न कालं क्रोधस्य पश्यंति पतयस्तव ।
तेन त्वां नाभिधावंति गंधर्वाः सूर्यवर्चसः ॥ १००
सै० उ०—अतीव तेषां घृणिनामर्थेऽहं धर्मचारिणी ।
तस्य तस्यैव ते वध्या येषां ज्येष्ठोऽक्षदेविता ॥ १०१
इत्युक्त्वा प्राद्रवत्कृष्णा सुदेष्णाया निवेशनम् ।
केशान्मुक्त्वा च सुश्रोणी संरंभाल्लोहितेक्षणा ॥ १०२
वै० उ०—सा हता सूतपुत्रेण राजपुत्री यशस्विनी ।
वधं कृष्णा परीप्संती सेनावाहस्य भामिनी ॥ १०३
किं करोमि क गच्छामि कथं कार्यं भवेन्मम ।
इत्येवं चिंतयित्वा सा भीमं वै मनसागमत् ॥ १०४

तत उत्थाय रात्रौ सा विहाय शयनं स्वकम् ।
प्राद्रवन्नाथमिच्छंती कृष्णा नाथवती सती ॥ १०५
सर्वश्वेतेव माहेयी वने जाता त्रिहायनी ।
उपातिष्ठत पांचाली वासितेव नरर्षभम् ॥ १०६
सा लतेव महाशालं फुल्लं गोमतितीरजम् ।
परिष्वजति पांचाली मध्यमं पांडुनंदनम् ॥ १०७
अभ्यभाषत पांचाली भीमसेनमनिंदिता ।
उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन यथा मृतः ॥ १०८
नामृतस्य हि पापीयान्भार्यामालभ्य जीवति ॥ १०९
स संप्रहाय शयनं राजपुत्र्या प्रबोधितः ।
उपातिष्ठत मेघाभः पर्यंके सोपसंग्रहे ॥ ११०
अथाब्रवीद्राजपुत्रीं कौरव्यो महिषी प्रियाम् ।
केनास्यर्थेन संप्राप्ता त्वरितेव ममान्तिकम् ।
न ते प्रकृतिमान् वर्णः कृशा पांडुश्च लक्ष्यसे ॥ १११
सै० उ०—योऽयं राज्ञो विराटस्य कीचको नाम सारथिः ।
त्यक्तधर्मा नृशंसश्च नरस्त्रीसंमतः प्रियः ॥ ११२
दारामर्षी महाभाग लभतेऽर्थान् बहूनपि ।
आहरेदपि वित्तानि परेषां क्रोशतामपि ॥ ११३
पश्यतो धर्मराजस्य कीचको मा पदावधीत् ॥ ११४
त्वया ह्यहं परित्राता तस्माद् घोराज्जटासुरात् ।
जहीममपि पापिष्ठं योऽयं मामवमन्यते ॥ ११५
यो निमित्तमनर्थानां बहूना मम भारत ।
तं चेज्जीवंतमादित्यः प्रातरभ्युदयिष्यति ।
विषमालोड्य पास्यामि मा कीचकवशं गमम् ॥ ११६
श्रेयो हि मरणं मह्यं भीमसेन तवाग्रतः ।
इत्युक्त्वा प्रारुदत्कृष्णा भीमस्योरःसमाश्रिता ॥ ११७
भीमश्च तां परिष्वज्य महत्सांत्वं प्रयुज्य च ।
प्रमृज्य वदनं तस्याः पाणिनाश्रुसमाकुलम् ।
कीचकं मनसाऽगच्छत्सृक्किणी परिलेलिहन् ॥ ११८
भी० उ०—तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
अद्य तं सूदयिष्यामि कीचकं सहबांधवम् ॥ ११९

अस्याः प्रदोषे शर्वर्याः कुरुष्वानेन संमतम् ॥ १२०
येषा नर्तनशालेयं मत्स्यराजेन कारिता ।
दिवात्र कन्या नृत्यंति रात्रौ यांति तथा गृहम् ॥ १२१
तत्रास्ति शयनं दिव्यं दृढांगं सुप्रतिष्ठितम् ।
तत्रास्य दर्शयिष्यामि पूर्वप्रेतान् पितामहान् ॥ १२२
यथा च त्वां न पश्येयुः कुर्वाणां तेन संविदम् ।
कुर्यास्तथा त्वं कल्याणि यथा सन्निहितो भवेत् ॥ १२३
वै० उ०—तथा तौ कीर्तयित्वा तु बाष्पमुत्सृज्य दुःखितौ ।
रात्रिशेषं तमत्युग्रं धारयामासतुर्हृदि ॥ १२४
तस्यां रात्र्यां व्यतीतायां प्रातरुत्थाय कीचकः ।
गत्वा राजकुलायैव द्रौपदीमिदमब्रवीत् ॥ १२५
सभायां पश्यतो राज्ञः पातयित्वा पदाऽहनम् ।
नचैवालभसे त्राणमभिपन्ना बलीयसा ॥ १२६
प्रवादेन च मत्स्यानां राजा नाम्नायमुच्यते ।
अहमेव हि मत्स्यानां राजा वै वाहिनीपतिः ॥ १२७
मां सुखं प्रतिपद्यस्व दासो भीरु भवामि ते ।
अह्नाय तव सुश्रोणि शतं निष्कं ददाम्यहम् ॥ १२८
वै० उ०—एवं मे समयं त्वद्य प्रतिपद्यस्व कीचक ।
न त्वां सखा वा भ्राता वा जानीयात्संगतं मया ॥ १२९
अनुप्रवादाद्भीतास्मि गंधर्वाणां यशस्विनाम् ।
यदेतन्नर्तनागारं मत्स्यराजेन कारितम् ॥ १३०
तमिस्रे तत्र गच्छेथा गंधर्वास्तन्न जानते ॥ १३१
वै० उ०—तमर्थं प्रतिजल्पंत्याः कृष्णायाः कीचकेन ह ।
दिवसार्धं समभवन्मासेनैव समं नृप ॥ १३२
ततः सा भीमसेनस्य तमर्थं प्रत्यवेदयत् ॥ १३३
कीचकोऽथ गृहं गत्वा भृशं हर्षपरिप्लुतः ।
सैरंध्रीरूपिणं मूढो मृत्युं तां नावबुध्यत ॥ १३४
गंधाभरणमाल्येषु व्यासक्तः स विशेषतः ।
अलंचक्रे तदात्मानं सत्वरं काममोहितः ॥ १३५
तस्य तत्कुर्वतः कर्म कालो दीर्घ इवाभवत् ।
अनुचिंतयतश्चापि तामेवायतलोचनाम् ॥ १३६

आसीदभ्यधिका चापि श्रीः श्रियं प्रमुमुक्षतः ।
निर्वाणकाले दीपस्य वर्तीमिव दिधक्षतः ॥ १३७
भीमोऽथ प्रथमं गत्वा रात्रौ छन्न उपाविशत् ।
मृगं हरिरिवादृश्यः प्रत्याकांक्षत कीचकम् ॥ १३८
कीचकश्चाप्यलंकृत्य यथाकाममुपागमत् ।
प्रविवेश च तद्वेश्म तमसा संवृतं महत् ॥ १३९
पूर्वागतं ततस्तत्र भीममप्रतिमौजसम् ।
एकांतावस्थितं चैनमाससाद स दुर्मतिः ।
शयानं शयने तत्र सूतपुत्रः परामृशत् ॥ १४०
उपसंगम्य चैवैनं कीचकः काममोहितः ।
हर्षोन्मथिताचित्तात्मा स्मयमानोऽभ्यभाषत ॥ १४१
प्रापितं ते मया वित्तं बहुरूपमनंतकम् ।
त्वत्कृते धनरत्नाढ्यं दासीशतपरिच्छदम् ॥ १४२
अकस्मान्मां प्रशंसंति सदा गृहगताः स्त्रियः ।
सुवासा दर्शनीयश्च नान्योऽस्ति त्वादृशः पुमान् ॥ १४३
भी० उ०—दिष्ट्या त्वं दर्शनीयोऽथ दिष्ट्यात्मानं प्रशंससि ।
ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित् ॥ १४४
इत्युक्त्वा तं महाबाहुर्भीमो भीमपराक्रमः ।
सहसोत्पत्य कौंतेयः प्रहस्येदमुवाच ह ॥ १४५
निराबाधा त्वयि हते सैरंध्री विचरिष्यति ।
सुखमेव चरिष्यंति सैरंध्र्याः पतयः सदा ॥ १४६
ततो जग्राह केशेषु माल्यवत्सु महाबलः ॥ १४७
स केशेषु परामृष्टो बलेन बलिनां वरः ।
आक्षिप्य केशान्वेगेन बाह्वोर्जग्राह पांडवम् ॥ १४८
बाहुयुद्धं तयोरासीत्क्रुद्धयोर्नरसिंहयोः ।
वसंते वासिताहेतोर्बलवद्गजयोरिव ॥ १४९
स्पर्धया च बलोन्मत्तौ तावुभौ सूतपांडवौ ।
निशीथे पर्यकर्षेतां बलिनौ निर्जने स्थले ॥ १५०
ततस्तद्भवनं श्रेष्ठं प्राकंपत मुहुर्मुहुः ।
बलवच्चापि संक्रुद्धावन्योन्यं प्रतिगर्जताम् ॥ १५१

तत एनं परिश्रांतमुपलभ्य वृकोदरः ।
योक्त्रयामास बाहुभ्यां पशुं रशनया यथा ॥ १५२
प्रगृह्य तरसा दोर्भ्यां कंठं तस्य वृकोदरः ।
अपीडयत कृष्णायास्तदा कोपोपशांतये ॥ १५३
अथ तं भग्नसर्वांगं व्याविद्धनयनांबरम् ।
आक्रम्य च कटीदेशे जानुना कीचकाधमम् ।
अपीडयत बाहुभ्यां पशुमारममारयत् ॥ १५४
तस्य पादौ च पाणी च शिरो ग्रीवां च सर्वशः ।
काये प्रवेशयामास पशोरिव पिनाकधृक् ॥ १५५
ततोऽग्निं तत्र प्रज्वाल्य दर्शयित्वा तु कीचकम् ।
पांचालीं स तदा वीर इदं वचनमब्रवीत् ॥ १५६
प्रार्थयंति सुकेशांते ये त्वां शीलगुणान्विताम् ।
एवं ते भीरु वध्यते कीचकः शोभते तथा ॥ १५७
तत्कृत्वा दुष्करं कर्म कृष्णाया प्रियमुत्तमम् ।
आमंत्र्य द्रौपदीं कृष्णा क्षिप्रमायान्महानसम् ॥ १५८
कीचकं घातयित्वा तु द्रौपदी योषितां वरा ।
प्रहृष्टा गतसंतापा सभापालानुवाच ह ॥ १५९
कीचकोऽयं हतः शेते गंधर्वैः पतिभिर्मम ।
परस्त्रीकामसंमत्तस्तत्र गच्छत पश्यत ॥ १६०
तच्छ्रुत्वा भाषितं तस्या नर्तनागाररक्षिणः ।
सहसैव समाजग्मुरादायोल्काः सहस्रशः ॥ १६१
निरीक्षंति ततः सर्वे परं विस्मयमागताः ।
अमानुषं कृतं कर्म तं दृष्ट्वा विनिपातितम् ॥ १६२
क्वास्य ग्रीवा क्व चरणौ क्व पाणी क्व शिरस्तथा ।
इति स्म तं परीक्षंते गंधर्वेण हतं तदा ॥ १६३
तस्मिन्काले समागम्य सर्वे तत्रास्य बांधवाः ।
रुरुदुः कीचकं दृष्ट्वा परिवार्य समंततः ।
संस्कारयितुमिच्छंतो बहिर्नेतुं प्रचक्रमुः ॥ १६४
ददृशुस्ते ततः कृष्णां सूतपुत्राः समागताः ।
अदूराद्नवद्यांगीं स्तंभमालिंग्य तिष्ठतीम् ॥ १६५

समवेतेषु सर्वेषु तामूचुरुपकीचकाः ।
हन्यतां शीघ्रमसती यत्कृते कीचको हतः ॥ १६६
अथ वा नैव हंतव्या दह्यतां कामिना सह ।
मृतस्यापि प्रियं कार्यं सूतपुत्रस्य सर्वथा ॥ १६७
तां समासाद्य वित्रस्तां कृष्णां कमललोचनाम् ।
मोमुह्यमानां ते तत्र जगृहुः कीचका भृशम् ॥ १६८
ततस्तु तां समारोप्य निबध्य च सुमध्यमाम् ।
जग्मुरुद्यम्य ते सर्वे श्मशानाभिमुखास्तदा ॥ १६९
ह्रीयमाणा तु सा राजन् सूतपुत्रैरनिंदिता ।
प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती ॥ १७०
तस्यास्ता कृपणा वाचः कृष्णायाः परिदेविता ।
श्रुत्वैवाभ्यापतद्भीमः शयनादविचारयन् ॥ १७१
स भीमसेनः प्राकारमारुह्य तरसा द्रुतम् ।
श्मशानाभिमुख प्रायाद्यत्र ते कीचका गताः ॥ १७२
जवेन पतितो भीमः सूतानामग्रतस्तदा ॥ १७३
तमंतकमिवायांतं गंधर्वं प्रेक्षते तदा ।
दिधक्षंतस्तदा ज्येष्ठं भ्रातरं ह्युपकीचकाः ॥ १७४
परस्परमथोचुस्ते विषादभयकंपिताः ।
सैरंध्री मुच्यतां शीघ्रं यतो न भयमागतम् ॥ १७५
द्रवतस्तास्तु संप्रेक्ष्य स वज्री दानवानिव ।
शतं पंचाधिकं भीमः प्राहिणोद्यमसादनम् ॥ १७६
उवाच च महाबाहुः पांचालीं तत्र द्रौपदीम् ।
अश्रुपूर्णमुखीं दीनां दुर्धर्षः स वृकोदरः ॥ १७७
एवं ते भीरु वध्यते ये त्वां क्लिश्यंत्यनागसम् ।
प्रैहि त्वं नगरं कृष्णे न भयं विद्यते तव ॥ १७८
अथ मुक्ता भयात्कृष्णा सूतपुत्राच्छिरस्य तु ।
मोक्षिता भीमसेनेन जगाम नगरं प्रति ॥ १७९
तां दृष्ट्वा पुरुषा राजन् प्राद्रवंत दिशो दश ।
गंधर्वाणां भयत्रस्ताः केचिदक्षीण्यमीलयन् ॥ १८०
ततो महानसद्वारि भीमसेनमवस्थितम् ।
ददर्श राजन्पांचाली यथा मत्तं महाद्विपम् ॥ १८१

तं विस्मयंती शनकैः संज्ञाभिरिदमब्रवीत् ।
गंधर्वराजाय नमो येनास्मि प्रतिमोचिता ॥

---

## ३

अथ वै धार्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः ।
मृगयित्वा बहून्ग्रामान् राष्ट्राणि नगराणि च ॥ १८३
दुर्योधन सभामध्ये आसीनमिदमब्रुवन् ।
नरेंद्र बहुशोऽन्विष्टा नैव विद्मश्च पांडवान् ॥ १८४
अत्यंतं वा विनष्टास्ते भद्रं तुभ्यं नरर्षभ ।
अन्वेषणे पांडवानां भूयः किं करवामहे ॥ १८५
इमां च नः प्रियां वीर वाचं भद्रवतीं शृणु ।
येन त्रिगर्ता निहता बलेन महता नृप ॥ १८६
सूतेन राज्ञो मत्स्यस्य कीचकेन बलीयसा ।
स हतः पतितः शेते गंधर्वैर्निशि भारत ॥ १८७
प्रियमेतदुपश्रुत्य शत्रूणां च पराभवम् ।
कृतकृत्यश्च कौरव्य विधत्स्व यदनंतरम् ॥ १८८
दु० उ०—सुशर्मायं यथोद्दिष्टं देशं यातु महारथः ।
त्रिगर्तैः सहितो राजा समग्रबलवाहनः ॥ १८९
जघन्यतो वयं तत्र यास्यामो द्विवसांतरे ॥ १९०
ते यांतु सहितास्तत्र विराटनगरं प्रति ।
क्षिप्रं गोधनमासाद्य गृह्णंतु विपुलं धनम् ॥ १९१
गवां शतसहस्राणि श्रीमंति गुणवंति च ।
वयमप्यनुगृह्णीमो द्विधा कृत्वा वरूथिनीम् ॥ १९२
आददे गाः सुशर्माथ कृष्णपक्षस्य सप्तमीम् ।
अपरे दिवसे सर्वे राजन्संभूय कौरवाः ।
अष्टम्यां ते न्यगृह्णंत गोकुलानि सहस्रशः ॥ १९३
कीचके तु हते राजा विराटः पर[illegible]
परां संभावनां चक्रे कुंतीपुत्रे युधि[illegible] ॥ १९४
ततस्त्रयोदशस्यांते तस्य वर्षस्य भारत ।
सुशर्मणा गृहीतं तद्गोधनं तरसा बहु ॥ १९५

याते त्रिगर्तान्मत्स्ये तु पशूंस्तान्वै परीप्सति ।
दुर्योधनः सहामात्यो विराटमुपयादथ ॥ १९६
भीष्मो द्रोणश्च कर्णश्च कृपश्च परमास्त्रवित् ।
द्रौणिश्च सौबलश्चैव तथा दुःशासनः प्रभो ॥ १९७
एते मत्स्यानुपागम्य विराटस्य महीपतेः ।
घोषान्विद्राव्य तरसा गोधनं जहुरोजसा ।
षष्टिं गवां सहस्राणि कुरवः कालयंति च ॥ १९८
गोपाध्यक्षो भयत्रस्तो रथमास्थाय सत्वरः ।
जगाम नगरायैव परिक्रोशंस्तदार्तवत् ॥ १९९
दृष्ट्वा भूमिंजयं नाम पुत्रं मत्स्यस्य मानिनम् ।
तस्मै तत्सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम् ॥ २००
गो० उ०—राजपुत्र हितप्रेप्सुः क्षिप्रं निर्याहि वै स्वयम् ॥
त्वां हि मत्स्यो महीपालः शून्यपालमिहाकरोत् ॥ २०१
त्वां वै परिषदो मध्ये श्लाघते स नराधिपः ।
पुत्रो ममानुरूपश्च शूरश्चापि कुलोद्वहः ॥ २०२
स्त्रीमध्य उक्तस्तेनासौ तद्वाक्यमभयंकरम् ।
अंतःपुरे श्लाघ्यमान इदं वचनमब्रवीत् ॥ २०३
अद्याहमनुगच्छेयं दृढधन्वा गवां पदम् ।
यदि मे सारथिः कश्चिद्भवेदश्वेषु कोविदः । २०४
तं त्वहं नाधिगच्छामि यो मे यंता भवेन्नरः ।
यत्तदासीन्महद्युद्धं तत्र मे सारथिर्हतः ॥ २०५
पश्येयुरद्य मे वीर्यं कुरवस्ते समागताः ।
किं नु पार्थोऽर्जुनः साक्षादयमस्मान्प्रबाधते ॥ २०६
अथैनमुपसंगम्य स्त्रीमध्यात्सा तपस्विनी ।
व्रीडमानेव शनकैरिदं वचनमब्रवीत् ॥ २०७
सै० उ०—योऽसौ बृहद्वारणाभो युवा सुप्रियदर्शनः ।
बृहन्नडेति विख्यातो पार्थस्यासीत्स सारथिः ॥ २०८
येयं कुमारी सुश्रोणी भगिनी ते यवीयसी ।
अस्याः सा वीर वचनं करिष्यति न संशयः ॥ २०९
यदि वै सारथिः सः स्यात्कुरून् सर्वान्नसंशयः ।
जित्वा गाश्च समादाय ध्रुवमागमनं भवेत् ॥ २१०

एवमुक्तस्तु सैरंध्र्या भगिनी प्रत्यभाषत ।
गच्छ त्वमनवद्यांगि तामानय बृहन्नलाम् ॥ २११
स तत्र नर्मसंयुक्तमकरोत्पांडवो बहु ।
उत्तरायाः प्रमुखतः सर्वं जानन्नरिंदम ॥ २१२
ऊर्ध्वमुत्क्षिप्य कवचं शरीरे प्रत्यमुंचत ।
कुमार्यस्तत्र तं दृष्ट्वा प्राहसन्पृथुलोचनाः ॥ २१३
स तु दृष्ट्वा विमुह्यतं स्वयमेवोत्तरस्तत ।
कवचेन महार्हेण समनह्यद्बृहन्नडाम् ॥ २१४
स बिभ्रत्कवचं चाग्र्यं स्वयमप्यंशुमत्प्रभम् ।
ध्वजं सिंहं समुच्छ्रित्य सारथ्ये समकल्पयत् ॥ २१५
अथोत्तरा च कन्याश्च सख्यस्तामब्रुवंस्तदा ॥ २१६
बृहन्नडे आनयेथा वासांसि रुचिराणि च ।
पाचालिकार्थं सूक्ष्माणि चित्राणि विविधानि च ॥ २१७
एवं ता ब्रुवतीः कन्याः सहिताः पांडुनंदनः ।
प्रत्युवाच हसन्पार्थो मेघदुंदुभिनिस्वनः ॥ २१८
यद्युत्तरोऽयं संग्रामे विजेष्यति महारथान् ।
अथाहरिष्ये वासांसि दिव्यानि रुचिराणि च ॥ २१९
स राजधान्या निर्याय वैराटिरकुतोभय ।
प्रयाहीत्यब्रवीत्सूत यत्र ते कुरवो गताः ॥ २२०
नातिदूरमथो गत्वा मत्स्यपुत्रधनंजयौ ।
अवेक्षेताममित्रघ्नौ कुरूणां बलिनां बलम् ॥ २२१
श्मशानाभिमुखो गत्वा आससाद कुरूनथ ।
तां शमीमन्ववीक्षेतां व्यूढानीकांश्च सर्वशः ॥ २२२
तदनीकं महत्तेषां विबभौ सागरोपमम् ।
सर्पमाणमिवाकाशे वनं बहुलपादपम् ॥ २२३
ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता ।
दृष्टिप्रणाशो भूतानां दिवस्पृक् कुरुसत्तम ॥ २२४
तदनीकं महद्दृष्ट्वा गजाश्वरथसंकुलम् ।
कर्णदुर्योधनकृपैर्गुप्तं शांतनवेन च ॥ २२५
द्रोणेन च सपुत्रेण महेष्वासेन धीमता ।
हृष्टरोमा भयोद्विग्नः पार्थं वैराटिरब्रवीत् ॥ २२६

नोत्सहे कुरुभिर्योद्धुं रोमहर्षं हि पश्य मे ॥ २२७
बहुप्रवीरमत्युग्रं देवैरपि दुरासदम् ।
प्रतियोद्धुं न शक्ष्यामि कुरुसैन्यमनंतकम् ।
नाशंसे भारतीं सेनां प्रवेष्टुं भीमकार्मुकाम् ॥ २२८
दृष्ट्वैव हि कुरूनेतान्व्यूढानीकान्प्रहारिणः ।
हृषितानि च रोमाणि कश्मलं चागतं मम ॥ २२९
त्रिगर्तान्मे पिता यातः शून्ये संप्रणिधाय माम् ।
सर्वां सेनामुपादाय न मे संतीह सैनिकाः ॥ २३०
सोऽहमेको बहून्बालः कृतास्त्रानकृतश्रमः ।
प्रतियोद्धुं न शक्ष्यामि निवर्तस्व बृहन्नडे ॥ २३१

अ० उ०—भयेन दीनरूपोसि द्विषतां हर्षवर्धनः ।
न च तावत्कृतं कर्म परैः किंचिद्रणाजिरे ॥ २३२
तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च ।
कत्थमानोऽभिनिर्याय किमर्थं न युयुत्ससे ॥ २३३
न चेद्विजित्य गास्तास्त्वं गृहान्वै प्रतियास्यसि ।
प्रहसिष्यंति वीरास्त्वां नरा नार्यश्च संगताः ॥ २३४
अहमप्यत्र सैरंध्र्या ख्यातः सारथ्यकर्मणि ।
न हि शक्ष्याम्यनिर्जित्य गाः प्रयातुं पुरं प्रति ॥ २३५

उ० उ०—कामं हरंतु मत्स्यानां भूयांसः कुरवो धनम् ।
प्रहसंतु च मां नार्यो नरा वापि बृहन्नडे ॥ २३६
युद्धेन नास्ति कार्यं मे गावो गच्छंतु चापि मे ।
शून्यं मे नगरं चापि पितुश्चैव बिभेम्यहम् ॥ २३७
इत्युक्त्वा प्राद्रवद्भीतो रथात्प्रस्कंद्य कुंडली ।
त्यक्त्वा मानं च दर्पं च विसृज्य सशरं धनुः ।
दीर्घां वेणीं विधुन्वानः साधुरक्ते च वाससी ॥ २३८
उत्तरं तं प्रधावंतमभिद्रुत्य धनंजयः ।
गत्वा पदशतं तूर्णं केशपक्षे परामृशत् ॥ २३९
सोऽर्जुनेन परामृष्टः पर्यदेवयदार्तवत् ।
बहुलं कृपणं चैव विराटस्य सुतस्तदा ॥ २४०
शृणुयास्त्वं हि कल्याणि बृहन्नडे सुमध्यमे ।
निवर्तय रथं क्षिप्रं जीवन्भद्राणि पश्यति ॥ २४१

शातकुंभस्य शुद्धस्य शत निष्कान्ददामि ते ।
मणीनष्टौ च वैडूर्यान्हेमबद्धान्महाप्रभान् ॥ २४२
एवमार्तानि वाक्यानि विलपंतमचेतसम् ।
प्रहस्य पुरुषव्याघ्रो रथस्यांतिकमानयत् ॥ २४३
अथैनमब्रवीत्पार्थो भयार्तं नष्टचेतसम् ।
यदि नोत्सहसे योद्धुं शत्रुभिः शत्रुकर्षण ॥ २४४
एहि मे त्वं हयान्यच्छ युध्यमानस्य शत्रुभिः ।
मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परंतप ॥ २४५
अहं वै कुरुभिर्योत्स्ये विजेष्यामि च ते पशून् ॥ २४६
तत एवं विचेष्टंतमकामं भयपीडितम् ।
रथमारोपयामास पार्थः प्रहरतां वरः ॥ २४७
तां शमीमुपसंगम्य पार्थो वैराटिमब्रवीत् ।
समादिष्टो मया क्षिप्रं धनूंष्यवहरोत्तर ॥ २४८
अस्यां हि पांडुपुत्राणा धनूंषि निहितान्युत ।
युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ॥ २४९
अत्र चैतन्महावीर्यं धनुः पार्थस्य गांडिवम् ।
एकं शतसहस्रेण संमितं राष्ट्रवर्धनम् ॥ २५०
व्यायामसहमत्यर्थं तृणराजसमं महत् ।
सर्वायुधमहामात्रं शत्रुसंबाधकारकम् ॥ २५१
एवमुक्तः स पार्थेन रथात्प्रस्कन्द्य कुंडली ।
आरुरोह शमीवृक्ष वैराटिरवशस्तदा ॥ २५२
सोऽपहृत्य महार्हाणि धनूंषि पृथुवक्षसाम् ।
परिवेष्टनपत्राणि विमुच्य समुपानयत् ॥ २५३
तेषां विमुच्यमानानां धनुषामर्कवर्चसाम् ।
विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव ॥ २५४
उ० उ०—क्व नु स्विदर्जुनः पार्थः कौरव्यो वा युधिष्ठिरः ।
नकुलः सहदेवश्च भीमसेनश्च पांडवः ॥ २५५
द्रौपदी क्व नु पांचाली स्त्रीरत्नमिति विश्रुता ।
जितानक्षैस्तदा कृष्णा तानेवान्वगमद्वनम् ॥ २५६
अ० उ०—अहमस्म्यर्जुनः पार्थः सभास्तारो युधिष्ठिरः ।
बल्लवो भीमसेनश्च पितुस्ते रसपाचकः ॥ २५७

अश्वबंधोऽथ नकुलः सहदेवस्तु गोकुले ।
सैरंध्रीं द्रौपदीं विद्धि यत्कृते कीचका हताः ॥ २५८
ततः पार्थः स वैराटिरभ्यवादयदंतिकात् ।
अहं भूमिंजयो नाम नाम्नाहमपि चोत्तरः ।
दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनंजय ॥ २५९
लोहिताक्ष महाबाहो नागराजकरोपम ।
यदज्ञानादवोचं त्वां क्षंतुमर्हसि तन्मम ॥ २६०
यतस्त्वया कृतं पूर्वं विचित्रं कर्म दुष्करम् ।
अतो भयं व्यतीतं मे प्रीतिश्च परमा त्वयि ॥ २६१
आस्थाय विपुलं वीर रथं सारथिना मया ।
कतमं यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया ॥ २६२
अ० उ०—प्रीतोऽस्मि पुरुषव्याघ्र न भयं विद्यते तव ॥ २६३
सर्वान्नुदामि ते शत्रून् रणे रणविशारद ।
अहं वै कुरुभिर्योत्स्याम्यवजेष्यामि ते पशून् ॥ २६४
वै० उ०—उत्तरं सारथिं कृत्वा शमीं कृत्वा प्रदक्षिणम् ।
आयुधं सर्वमादाय ततः प्रायाद्धनंजयः ॥ २६५
स्वनवंतं महाशंखं बलवानरिमर्दनः ।
प्राधमद्बलमास्थाय द्विषतां रोमहर्षणम् ॥ २६६
उत्तरश्चापि संलीनो रथोपस्थ उपाविशत् ।
तस्य शंखस्य शब्देन रथनेमिस्वनेन च ॥ २६७
द्रो० उ०—यथा रथस्य निर्घोषो यथा मेघ उदीर्यते ।
कंपते च यथा भूमिर्नैषोऽन्यः सव्यसाचिनः ॥ २६८
शस्त्राणि न प्रकाशंते प्रहृष्यंति न वाजिनः ।
अग्नयश्च न भासंते समिद्धास्तच्च शोभनम् ॥ २६९
ध्रुवं विनाशो युद्धेन क्षत्रियाणां प्रदृश्यते ।
अथ दुर्योधनो राजा समरे भीष्ममब्रवीत् ॥ २७०
पराजितैर्हि वस्तव्यं तैश्च द्वादशवत्सरान् ।
वने जनपदेऽज्ञातैरेवमेव पणो हि नः ॥ २७१
तेषां न तावन्निर्वृत्तं वर्तते तु त्रयोदशम् ।
अज्ञातवासो बीभत्सुरथास्माभिः समागतः ॥ २७२

अर्थानां तु पुनर्द्वैधे नित्यं भवति संशयः ।
स्वार्थे सर्वे विमुह्यंति येऽपि धर्मविदो जनाः ॥ २७३
भी० उ०—कलाः काष्ठाश्च युज्यंते मुहूर्ताश्च दिनानि च ।
अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा ॥ २७४
ऋतवश्चापि युज्यंते तथा संवत्सरा अपि ।
एवं कालविभागेन कालचक्रं प्रवर्तते ॥ २७५
तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात् ।
पंचमे पंचमे वर्षे द्वौ मासावुपजायतः ॥ २७६
एषामप्यधिका मासाः पंच द्वादश च क्षपाः ।
त्रयोदशानां वर्षाणामिति मे वर्तते मतिः ॥ २७७
सर्वं यथावच्चरितं यद्यदेभिः परिश्रुतम् ।
एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः ॥ २७८
अलुब्धाश्चैव कौंतेयाः कृतवंतश्च दुष्करम् ।
न चापि केवलं राज्यमिच्छेयुस्तेऽनुपायतः ॥ २७९
प्राप्ते काले तु प्राप्तव्यं नोत्सृजेयुर्नरर्षभाः ।
अपि वज्रभृता गुप्तं तथावीर्या हि पांडवाः ॥ २८०
प्रतियुद्ध्येम समरे सर्वशस्त्रभृतां वरम् ।
तस्माद्यदत्र कल्याणं लोके सद्भिरनुष्ठितम् ।
तत्संविधीयतां शीघ्रं मा वो ह्यर्थोऽभ्यगात्परान् ॥ २८१
अथ संगम्य ते सर्वे कौरवाणां महारथाः ।
अर्जुनं सहिता यत्ताः प्रत्यविध्यन्त भारत ॥ २८२
स सायकमयैर्जालैः सर्वतस्तान्महारथान् ॥
प्राच्छादयदमेयात्मा नीहारेणेव पर्वतान् ॥ २८३
नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः ।
भेरीशंखनिनादैश्च स शब्दस्तुमुलोऽभवत् ॥ २८४
नागाश्वकायान्निर्भिद्य लोहानि कवचानि च ।
पार्थस्य शरजालानि विनिष्पेतुः सहस्रशः ॥ २८५
छन्नमायोधनं सर्वं शरीरैर्गतचेतसाम् ।
गजाश्वसादिनां तत्र शितबाणात्तजीवितैः ॥ २८६
रथोपस्थाभिपतितैरास्तृता मानवैर्मही ।
प्रनृत्यतीव संग्रामे चापहस्तो धनंजयः ॥ २८७

वित्रासयित्वा तत्सैन्यं द्रावयित्वा महारथान् ।
अर्जुनो जयतां श्रेष्ठः पर्यवर्तत भारत ॥ १८८
ततः प्रहस्य बीभत्सुर्दिव्यमैंद्रं महारथः ।
अस्त्रमादित्यसंकाशं गांडीवे समयोजयत् ॥ १८९
यथा बलाहकं विद्युत्पावको वा शिलोच्चयं ।
तथा गांडीवमभवदिंद्रायुधमिवाततम् ॥ १९०
नागाश्च रथिनः सर्वे मुमुहुस्तत्र भारत ।
सर्वे शांतिपरा योधाः स्वचित्तानि न लेभिरे ॥ १९१
एवं सर्वाणि सैन्यानि भग्नानि भरतर्षभ ।
व्यद्रवन्त दिशः सर्वा निराशानि स्वजीविते ॥ १९२
संमोहनं शत्रुसहोऽन्यदस्त्रं प्रादुश्चकारैंद्रिरवारणीयम् ।
ततो दिशश्चानुदिशो विवृत्य शरावरणैर्नभःस्थलेन च ॥
भयतादयत्स प्रदिशो दिशः खं भुवं च पार्थो द्विषतां निहंता ॥ १९३
उत्सृज्य चापानि दुरासदानि सर्वे तदा शांतिपरा बभूवुः ॥ १९४
तथा विसंज्ञेषु बलेषु पार्थः स्मृत्वा च वाक्यानि तथोत्तरायाः ।
निर्याहि मध्यादिति मत्स्यपुत्रमुवाच यावत्कुरवो विसंज्ञाः ॥ १९५
रश्मीन् समुत्सृज्य ततो महात्मा रथादवप्लुत्य विराटपुत्रः ।
वस्त्राण्युपादाय महारथानां तूर्णं पुनः स्वं रथमारुरोह ॥ १९६
दृष्ट्वा प्रयातांस्तु कुरून्किरीटी हृष्टोऽब्रवीत्तत्र स मत्स्यपुत्रम् ।
आवर्तयाश्वान् पशवो जितास्ते याताः परे याहि पुरं प्रहृष्टः ।
प्रायात्स मत्स्यो नगरं प्रहृष्टः किरीटिना सारथिना महात्मा ॥ १९७
पार्थस्तु कृत्वा परमार्यकर्म निहत्य शत्रून्द्विषता निहंता ।
चकार वेणीं च तथैव भूयो जग्राह रश्मीन्पुनरुत्तरस्य ॥ १९८

---

## ४

धनं च बहु जित्वाशु विराटो वाहिनीपतिः ।
विवेश नगरं हृष्टश्चतुर्भिः पांडवैः सह ॥ १९९
जित्वा त्रिगर्तान्संग्रामे गाश्चैवादाय सर्वशः ।
अशोभत महाराज सह पार्थैः श्रिया वृतः ॥ २००
उत्तरं परिपप्रच्छ क्व यात इति चाब्रवीत् ।
आचख्युस्तस्य तत्सर्वं स्त्रियः कन्याश्च वेश्मनि ॥ २०१

वि० उ०—सर्वथा कुरवस्ते हि ये चान्ये वसुधाधिपाः ।
त्रिगर्तान्निर्जिताञ्श्रुत्वा न स्थास्यंति कदाचन ॥ ३०२
तस्माद्गच्छंतु मे योधा बलेन महता वृताः ।
उत्तरस्य परीप्सार्थं ये त्रिगर्तैरविक्षताः ॥ ३०३
कुमारमाशु जानीत यदि जीवति वा न वा ।
यस्य यंता गतः षंढो मन्येऽहं न स जीवति ॥ ३०४
अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः ।
विराटनगरं प्राप्य विजय समवेदयन् ॥ ३०५
यु० उ०—दिष्ट्या विनिर्जिता गावः कुरवश्च पलायिताः ।
नाद्भुतं त्वेव मन्येह यत्ते पुत्रोऽजयत्कुरून् ॥ ३०६
ध्रुव एव जयस्तस्य यस्य यंता बृहन्नडा ॥ ३०७
ततो विराटो नृपतिः संप्रहृष्टतनूरुहः ।
श्रुत्वा स विजय तस्य कुमारस्यामितौजसः ।
आच्छादयित्वा दूतांस्तान् मंत्रिणः सोऽभ्यचोदयत् ॥ ३०८
राजमार्गाः क्रियंतां मे पताकाभिरलंकृताः ।
पुष्पोपहारैरर्च्यंतां देवताश्चापि सर्वशः ॥ ३०९
कुमारयोधमुख्याश्च गणिकाश्च स्वलंकृताः ।
वादित्राणि च सर्वाणि प्रत्युद्यांतु सुत मम ॥ ३१०
घंटावान्मानवः शीघ्रं मत्तमारुह्य वारणम् ।
शृंगाटकेषु सर्वेषु आख्यातु विजयं मम ॥ ३११
प्रस्थाप्य सेनां कन्याश्च गणिकाश्च स्वलंकृताः ।
मत्स्यराजो महाप्राज्ञः प्रहृष्ट इदमब्रवीत् ॥ ३१२
अक्षानाहर सैरंध्रि कंक द्यूतं प्रवर्तताम् ।
यु० उ०—न देवितव्यं हृष्टेन कितवेनेति नः श्रुतम् ॥ ३१३
तं त्वामद्य मुदा युक्तं नाहं देवितुमुत्सहे ।
प्रियं तु ते चिकीर्षामि वर्ततां यदि मन्यसे ॥ ३१४
प्रवर्तमाने द्यूते तु मत्स्यः पांडवमब्रवीत् ।
पश्य पुत्रेण मे युद्धे तादृशाः कुरवो जिताः ॥ ३१५
ततोऽब्रवीन्महात्मा स एनं राजा युधिष्ठिरः ।
बृहन्नडा यस्य यंता स कथं न विजेष्यति ॥ ३१६

इत्युक्तः कुपितो राजा मत्स्यः पांडवमब्रवीत् ।
वि० उ०—समं पुत्रेण मे षंढं ब्रह्मबंधो प्रशंससि ॥ ३१७
वयस्यत्वात्तु ते ब्रह्मन्नपराधमिमं क्षमे ।
नेदृशं तु पुनर्वाच्यं यदि जीवितुमिच्छसि ॥ ३१८
यु० उ०—यत्र द्रोणस्तथा भीष्मो द्रौणिर्वैकर्तनः कृपः ।
दुर्योधनश्च राजेंद्रस्तथान्ये सुमहारथाः ॥ ३१९
कोऽन्यो बृहन्नडायास्तान् प्रतियुद्ध्येत संगतान् ।
यस्य बाहुबले तुल्यो न भूतो न भविष्यति ॥ ३२०
वि० उ०—बहुशः प्रतिषिद्धोऽसि न च वाचं नियच्छसि ।
नियंता चेन्न विद्येत न कश्चिद्धर्ममाचरेत् ॥ ३२१
ततः प्रकुपितो राजा तमक्षेणाहनद्भृशम् ।
मुखे युधिष्ठिरं कोपान्नैवमित्येव भर्त्सयन् ॥ ३२२
बलेन प्रतिविद्धस्य नस्तः शोणितमावहत् ।
तदप्राप्तं महीं पार्थः पाणिभ्यां प्रत्यगृह्णत ॥ ३२३
अवैक्षत स धर्मात्मा द्रौपदीं पार्श्वतः स्थिताम् ॥ ३२४
सा ज्ञात्वा तमभिप्रायं भर्तुश्चित्तवशानुगा ।
पात्रं गृहीत्वा सौवर्णं जलपूर्णमनिंदिता ।
तच्छोणित प्रत्यगृह्णाद्यत्प्रसुस्राव नस्ततः ॥ ३२५
अथोत्तरः शुभैर्गंधैर्माल्यैश्च विविधैस्तथा ।
अवकीर्यमाणः संहृष्टो नगरं स्वैरमागतः ।
आसाद्य भवनद्वारं पित्रे संप्रत्यवेदयत् ॥ ३२६
ततो राज्ञः सुतो ज्येष्ठः प्राविशत्पृथिवींजयः ।
सोऽभिवाद्य पितुः पादौ कंकं चाप्युपतिष्ठत ॥ ३२७
ततो रुधिरसंसिक्तमनेकाग्रमनागसम् ।
भूमावेकांतमासीनं सैरंध्र्या प्रत्युपस्थितम् ॥ ३२८
दृष्ट्वा पप्रच्छ पितरं त्वरमाण इवोत्तरः ।
केनायं ताडितो राजन् केन पापमिदं कृतम् ॥ ३२९
वि० उ०—ममायं ताडितो जिह्मो न चाप्येतावदर्हति ।
प्रशस्यमाने यच्छूरे त्वयि षंढं प्रशंसति ॥ ३३०
उ० उ०—अकार्यं ते कृतं राजन् क्षिप्रमेव प्रसाद्यताम् । ३३१

स पुत्रस्य वचः श्रुत्वा विराटो राष्ट्रवर्धनः ।
क्षमयामास कौंतेयं भस्मच्छन्नमिवानलम् ॥ ३३२

क्षमयंतं तु राजानं पांडवः प्रत्यभाषत ।
चिरं क्षांतमिदं राजन्न मन्युर्विद्यते मम ॥ ३३३

ततोऽर्जुनस्य वैराटिः कथयामास विक्रमम् ।
अथ स द्विषतां हंता मृगाणामिव केसरी ।
अचरद्रथवृंदेषु निघ्नंस्तेषां वरान् रथान् ॥ ३३४

अनेन मत्तमातंगो महानेकेषुणा हतः ।
सुवर्णकक्षः संग्रामे दंताभ्यामगमन्महीम् ॥ ३३५

अनेन विजिता गावो जिताश्च कुरवो युधि ।
अस्य शंखप्रणादेन कर्णौ मे बधिरीकृतौ ॥ ३३६

अस्य तत्कर्म वीरस्य न मया तात तत्कृतम् ।
अस्य बाहुबलेनास्मि जीवन्प्रत्यागतः पुनः ॥ ३३७

तस्य तद्वचनं श्रुत्वा मत्स्यराजः प्रतापवान् ।
उत्तरं प्रत्युवाचेदमभिपन्ने युधिष्ठिरे ॥ ३३८

प्रसादनं पांडवस्य प्राप्तकालं हि रोचते ।
उत्तरां च प्रयच्छामि पार्थाय यदि मन्यसे ॥ ३३९

आर्याः पूज्याश्च मान्याश्च प्राप्तकालं च मे मतम् ।
पूज्यतां पूजनार्हाश्च महाभागाश्च पांडवाः ॥ ३४०

अहं खल्वपि संग्रामे शत्रूणां वशमागतः ।
मोचितो भीमसेनेन गवश्चापि जितास्तथा ॥ ३४१
प्रसादयामो भद्रं ते सानुजं पांडवर्षभम् ॥ ३४२
यदस्माभिरजानद्भिः किंचिदुक्तो नराधिपः ।
क्षंतुमर्हति तत्सर्वं धर्मात्मा ह्येष पांडवः ॥ ३४३
पांडवांश्च ततः सर्वान् मत्स्यराजः प्रतापवान् ।
धनंजयं पुरस्कृत्य दिष्ट्या दिष्ट्येति चाब्रवीत् ॥ ३४४
एवमुक्तो धर्मराजः पार्थमैक्षद्धनंजयम् ।
ईक्षितश्चार्जुनो भ्रात्रा मत्स्यं वचनमब्रवीत् ॥ ३४५
प्रतिगृह्णाम्यहं राजन् स्नुषां दुहितरं तव ।
युक्त एव हि संबंधो मत्स्यभारतयोरपि ॥ ३४६

वि० उ०—किमर्थं पांडवश्रेष्ठ भार्यां दुहितरं तव ।
प्रतिग्रहीतुं नेमां त्वं मया दत्तामिहेच्छसि ॥ ३४७

अ० उ०—अंतःपुरेऽहमुषितः सदा पश्यन्सुतां तव ।
रहस्यं च प्रकाशं च विश्वस्ता पितृवन्मयि ॥ ३४८
प्रियो बहुमतश्चाहं नर्तको गीतकोविदः ।
आचार्यवच्च मां नित्यं मन्यते दुहिता तव ॥ ३४९
वयस्थयाऽनया राजन् सह संवत्सरोषितः ।
अतिशंका भवेत्स्थाने तव लोकस्य वा विभो ॥ ३५०
तस्मान्न ग्रहणीयेयं दुहिता ते नराधिप ।
शुद्धो जितेंद्रियो दांतस्तस्याः शुद्धिः कृता मया ॥ ३५१
स्नुषाया दुहितुर्वापि पुत्रे चात्मनि वा पुनः ।
अत्र शंकां न पश्यामि तेन शुद्धिर्भविष्यति ॥ ३५२
स्वस्रीयो वासुदेवस्य साक्षाद्देवशिशुर्यथा ।
दयितश्चक्रहस्तस्य एक एवास्त्रकोविदः ॥ ३५३
अभिमन्युर्महाबाहुः पुत्रो मम विशांपते ।
जामाता तव युक्तो वै भर्ता च दुहितुस्तव ॥ ३५४

वि० उ०—उपपन्नं कुरुश्रेष्ठे कुंतीपुत्रे धनंजये ।
य एव धर्मनित्यश्च जातज्ञानश्च पांडवः ॥ ३५५
यत्कृत्यं मन्यसे पार्थ क्रियतां तदनंतरम् ।
सर्वे कामाः समृद्धा मे संबंधी यस्य चार्जुनः ॥ ३५६
एवं ब्रुवति राजेंद्रे कुंतीपुत्रो युधिष्ठिरः ।
अन्वशासत्स संयोगं समये मत्स्यपार्थयोः ॥ ३५७
ततो मित्रेषु सर्वेषु वासुदेवे च भारत ।
प्रेषयामास कौंतेयो विराटश्च महीपतिः ॥ ३५८
तत्र त्रयोदशे वर्षे निवृत्ते पंच पांडवाः ।
उपप्लव्यं विराटस्य समपद्यंत सर्वशः ॥ ३५९
ततो विवाहो विधिवद्ववृधे मत्स्यपार्थयोः ॥ ३६०
सुदेष्णां च पुरस्कृत्य मत्स्यानां च वरस्त्रियः ।
आजग्मुश्चारुसर्वांग्यः सुमृष्टमणिकुंडलाः ।
सर्वाश्चाभ्यभवत्कृष्णा रूपेण यशसा श्रिया ॥ ३६१

परिवार्योत्तरां तास्तु राजपुत्रीमलंकृताम् ।
सुतामिव महेंद्रस्य पुरस्कृत्योपतस्थिरे ॥ ३६२
तां प्रत्यगृह्णात्कौंतेयः सुतस्यार्थे धनंजयः ।
सौभद्रस्यानवद्यांगीं विराटतनयां तदा ॥ ३६३
प्रतिगृह्य च तां पार्थः पुरस्कृत्य जनार्दनम् ।
विवाहं कारयामास सौभद्रस्य महात्मनः ॥ ३६४
तस्मै सप्तसहस्राणि हयानां वातरंहसाम् ।
द्वे च नागशते मुख्ये प्रादान्मत्स्यपतिस्तदा ॥ ३६५
हुत्वा सम्यक्समिद्धाग्निमर्चयित्वा द्विजन्मनः ।
राज्यं बलं च कोशं च सर्वमात्मानमेव च ॥ ३६६
कृते विवाहे तु तदा धर्मपुत्रो युधिष्ठिरः ।
ब्राह्मणेभ्यो ददौ वित्तं यदुपाहरदच्युतः ॥ ३६७
भोजनानि च हृद्यानि पानानि विविधानि च ।
आबालवृद्धपर्यंतं ददौ वित्तानि कृत्स्नशः ॥ ३६८
तन्महोत्सवसंकाशं हृष्टपुष्टजनायुतम् ।
नगरं मत्स्यराजस्य शुशुभे भरतर्षभ ॥ ३६९

इति श्रीसंक्षिप्तमहाभारते विराटपर्व समाप्तम् । श्लो. स. ३६९.



## ५ उद्योगपर्व.

### १

ततः सत्कृत्य वार्ष्णेयं विराटः पृथिवीपतिः ।
गृहान्प्रस्थापयामास सगणं सहबांधवम् ॥ १
द्वारकां तु गते कृष्णे युधिष्ठिरपुरोगमाः ।
चक्रुः सांग्रामिकं सर्वं विराटश्च महीपतिः ॥ २
ततः संप्रेषयामास विराट सह बांधवैः ।
सर्वेषां भूमिपालानां द्रुपदश्च महीपतिः ॥ ३
वचनात्कुरुसिंहानां मत्स्यपांचालयोश्च ते ।
समाजग्मुर्महीपालाः संप्रहृष्टा महाबलाः ॥ ४
तच्छ्रुत्वा पांडुपुत्राणां समागच्छन्महद्बलम् ।
धृतराष्ट्रसुताश्चापि समानिन्युर्महीपतीन् ॥ ५
सर्वमागमयामास पांडवानां विचेष्टितम् ।
धृतराष्ट्रात्मजो राजा गूढैः प्रणिहितैश्चरैः ॥ ६
स श्रुत्वा माधवं यांतं सदश्वैरनिलोपमैः ।
बलेन चातिमहता द्वारकामभ्ययात्पुरीम् ॥ ७
तमेव दिवसं चापि कौंतेयः पाण्डुनंदनः ।
आनर्तनगरीं रम्यां जगामाशु धनंजयः ॥ ८
तौ यात्वा पुरुषव्याघ्रौ द्वारकां कुरुनंदनौ ।
सुप्तं ददृशतुः कृष्णं शयानं चापि जग्मतुः ॥ ९
ततः शयाने गोविंदे प्रविवेश सुयोधनः ।
उच्छीर्षतश्च कृष्णस्य निषसाद वरासने ॥ १०
ततः किरीटी तस्यानुप्रविवेश महामनाः ।
पश्चार्धे च स कृष्णस्य प्रह्वोऽतिष्ठत्कृतांजलिः ॥ ११
प्रतिबुद्धः स वार्ष्णेयो ददर्शाग्रे किरीटिनम् ॥ १२
स तयोः स्वागतं कृत्वा यथावत्प्रतिपूज्य तौ ।
तदागमनहेतुं च पप्रच्छ मधुसूदनः ॥ १३
ततो दुर्योधनः कृष्णमुवाच प्रहसन्निव ।
विग्रहेऽस्मिन्भवान्साह्यं मम दातुमिहार्हऽसि ॥ १४
समं हि भवतः सख्यं मयि चैवार्जुनेऽपि च ।

तथा संबन्धकं तुल्यमस्माकं त्वयि माधव ॥ १५
अहं चाभिगतः पूर्वं त्वामद्य मधुसूदन ।
पूर्वं चाभिगत संतो भजंते पूर्वसारिण· ॥ १६
कृ० उ०—भवानभिगतः पूर्वमत्र मे नास्ति संशयः ।
दृष्टस्तु प्रथमं राजन् मया पार्थो धनंजयः ॥ १७
तव पूर्वाभिगमनात्पूर्वं चाप्यस्य दर्शनात् ।
सहाय्यमुभयोरेव करिष्यामि सुयोधन ॥ १८
प्रवारणं तु बालानां पूर्वं कार्यमिति श्रुतिः ।
तस्मात्प्रवारणं पूर्वमर्हः पार्थो धनंजयः ॥ १९
मत्संहननतुल्यानां गोपानामर्बुदं महत् ।
नारायणा इति ख्याताः सर्वे संग्रामयोधिनः ॥ २०
ते वा युधि दुराधर्षा भवंत्वेकस्य सैनिकाः ।
अयुध्यमानः सग्रामे न्यस्तशस्त्रोऽहमेकतः ॥ २१
आभ्यामन्यतरं पार्थ यत्ते कृत्यतरं मतम् ।
तद्वृणीतां भवानग्रे प्रवार्यस्त्वं हि धर्मतः ॥ २२
एवमुक्तस्तु कृष्णेन कुंतीपुत्रो धनंजयः ।
अयुध्यमानं संग्रामे वरयामास केशवम् ॥ २३
दुर्योधनस्तु तत्सैन्यं सर्वमावरयत्तदा ।
सहस्राणां सहस्रं तु योधानां प्राप्य भारत ।
कृष्णं चापहृतं ज्ञात्वा संप्राप परमां मुदम् ॥ २४
ततोऽभ्ययाद्भीमबलो रोहिणेयं महाबलम् ।
प्रत्युवाच ततःशौरिर्धार्तराष्ट्रमिदं वचः ॥ २५
नाहं सहायः पार्थस्य नापि दुर्योधनस्य वै ।
इति मे निश्चिता बुद्धिर्वासुदेवमवेक्ष्य ह ॥ २६
जातोऽसि भारते वंशे सर्वपार्थिवपूजिते ।
गच्छ युद्ध्यस्व धर्मेण क्षात्रेण पुरुषर्षभ ॥ २७
इत्येवमुक्तस्तु तदा परिष्वज्य हलायुधम् ।
कृष्णं चापहृतं ज्ञात्वा युद्धान्मेनेपि तं जयम् ॥ २८
युयुधानस्ततो वीरः सात्वतानां महारथः ।
महता चतुरंगेण बलेनागाद्युधिष्ठिरम् ॥ २९

तस्य योधा महावीर्या नानादेशसमागताः ।
नानाप्रहरणा योधाः शोभयांचक्रिरे बलम् ॥ ३०
तथैवाक्षौहिणीं गृह्य चेदीनामृषभो बली ।
धृष्टकेतुरुपागच्छत्पाण्डवानमितौजसः ॥ ३१
मागधश्च जयत्सेनो जरासंधिर्महाबलः ।
अक्षौहिण्यैव सैन्यस्य धर्मराजमुपागमत् ॥ ३२
तथैव पांड्यो राजेन्द्र सागरानूपवासिभिः ।
वृतो बहुविधैर्योधैर्युधिष्ठिरमुपागमत् ॥ ३३
द्रुपदस्याप्यभूत्सेना नानादेशसमागतैः ।
शोभिता पुरुषैः शूरैः पुत्रैश्चास्य महारथैः ॥ ३४
तथैव राजा मत्स्यानां विराटो वाहिनीपतिः ।
पार्वतीयैर्महीपालैः सहितः पांडवानियात् ॥ ३५
इतश्चेतश्च पांडूनां समाजग्मुर्महात्मनाम् ।
अक्षौहिण्यस्तु सप्तैता विविधध्वजसंकुलाः ॥ ३६
तथैव धार्तराष्ट्रस्य हर्षं समभिवर्धयन् ।
भगदत्तो महीपालः सेनामक्षौहिणीं ददौ ॥ ३७
तस्य चीनैः किरातैश्च कांचनैरिव संवृतम् ।
बभौ बलमनाधृष्यं कर्णिकारवनं यथा ॥ ३८
तथा भूरिश्रवाः शूरः शल्यश्च कुरुनंदन ।
दुर्योधनमुपायातामक्षौहिण्या पृथक् पृथक् ॥ ३९
कृतवर्मा च हार्दिक्यो भोजांधकुकुरैः सह ।
अशोभत यथा मत्तैर्वन प्रक्रीडितैर्गजैः ॥ ४०
जयद्रथमुखाश्चान्ये सिंधुसौवीरवासिनः ।
आजग्मुः पृथिवीपालाः कंपयत इवाचलान् ॥ ४१
सुदक्षिणश्च कांबोजो यवनैश्च शकैस्तथा ।
उपाजगाम कौरव्यमक्षौहिण्या विशांपते ।
तस्य सेनासमावायः शलभानामिवाबभौ ॥ ४२
तथा माहिष्मतीवासी नीलो नीलायुधैः सह ॥
महीपालो महावीर्यो दक्षिणापथवासिभिः ॥ ४३
आवंत्यौ च महीपालौ महाबलसुसंवृतौ ।
पृथगक्षौहिणीभ्यां तावभियातौ सुयोधनम् ॥ ४४

कैकेयाश्च नरव्याघ्राः सोदर्याः पंच पार्थिवाः ।
संहर्षयंतः कौरव्यमक्षौहिण्या समाद्रवन् ॥ ४५
ततस्ततस्तु सर्वेषां भूमिपानां महात्मनाम् ।
तिस्रोऽन्याः समवर्तंत वाहिन्यो भरतर्षभ ॥ ४६
एवमेकादश वृताः सेना दुर्योधनस्य ताः ॥ ४७

---

२

धृ० उ०—प्राप्तानाहुः संजय पाण्डुपुत्रानुपप्लव्ये तान् विजानीहि गत्वा ।
अजातशत्रुं च सभाजयेथा दिष्ट्यानघ स्थानमुपस्थितस्त्वम् ॥ ४८
सर्वान्वदेः संजय स्वस्तिमंतः कृच्छ्रं वासमतदर्हा निरुष्य ।
तेषां शांतिर्विद्यतेऽस्मासु शीघ्रं मिथ्यापेतानामुपकारिणां सतां ॥ ४९
दोषं ह्येषां नाध्यगच्छं परीच्छन्नित्यं कंचिद्येन गर्हेय पार्थान् ।
धर्मार्थाभ्यां कर्म कुर्वंति नित्यं सुखप्रियेनानुरुध्यंति कामात् ॥ ५०
घर्मं शीतं क्षुत्पिपासे तथैव निद्रां तन्द्रीं क्रोधहर्षौ प्रमादम् ।
धृत्या चैव प्रज्ञया चाभिभूय धर्मार्थयोगा न्प्रयतंति पार्थाः ॥ ५१
त्यजंति मित्रेषु धनानि काले न संवासाज्जीर्यति तेषु मैत्री ।
यथार्हमानार्थकरा हि पार्थास्तेषां द्वेष्टा नास्त्याजमीढस्य पक्षे ॥ ५२
अन्यत्र पापाद्विषमान्मंदबुद्धेर्दुर्योधनात्क्षुद्रतराच्च कर्णात् ।
तेषां हीमा हीनसुखप्रियाणां महात्मनां वर्धयतो हि तेजः ॥ ५३
समानीतान् पांडवान् सृंजयाश्च जनार्दनं युयुधानं विराटम् ।
अनामयं मद्वचनेन पृच्छेः सर्वांस्तथा द्रौपदेयांश्च पंच ॥ ५४
यद्यत्तत्र प्राप्तकालं परेभ्यस्त्वं मन्येथा भारतानां हितं च ।
तत्तद्भाषेथाः संजय राजमध्ये न मूर्च्छयेद्यन्न च युद्धहेतुः ॥ ५५
राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य संजयः ।
उपप्लव्यं ययौ द्रष्टुं पांडवानामितौजसः ॥ ५६
स तु राजानमासाद्य कुंतीपुत्रं युधिष्ठिरम् ।
अभिवाद्य ततः पूर्वं सूतपुत्रोऽभ्यभाषत ॥ ५७
सं० उ०—धर्मे नित्या पांडव ते विचेष्टा लोके श्रुता दृश्यते चापि पार्थ ।
महास्रावं जीवितं चाप्यनित्यं संपश्यंस्त्वं पांडव मा व्यनीनशः ॥ ५८
न चेद्भागं कुरवोऽन्यत्र युद्धात्प्रयच्छेरंस्तुभ्यमजातशत्रो ।
भैक्ष्यचर्यामंधकवृष्णिराज्ये श्रेयो मन्ये न तु युद्धेन राज्यम् ॥ ५९

अल्पकालं जीवितं यन्मनुष्ये महास्रावं नित्यदुःखं चलं च ।
भूयश्च तद्यशसो नानुरूपं तस्मात्पापं पांडव मा कुथास्त्वम् ॥ ६०
कामा मनुष्यं प्रसजंत एते धर्मस्य ये विघ्नमूलं नरेन्द्र ।
निबंधनी ह्यर्थतृष्णेह पार्थ तामिच्छतां बाध्यते धर्म एव ।
धर्मं तु यः प्रवृणीते स बुद्धः कामे गृद्धो हीयतेऽर्थानुरोधात् ॥ ६१
यु० उ०—असंशयं संजय सत्यमेतद्धर्मो वरः कर्मणां यत्वमात्थ ।
ज्ञात्वा तु मां संजय गर्हयेस्त्वा यदि धर्मं यद्यधर्मं चरेयम् ॥ ६२
यत्राधर्मो धर्मरूपाणि धत्ते धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः ।
बिभ्रद्धर्मो धर्मरूपं तथा च विद्वांसस्तं संप्रपश्यंति बुद्ध्या ॥ ६३
एवं तथैवाऽऽपदि लिंगमेतद्धर्माधर्मौ नित्यवृत्ती भजेताम् ।
आद्यं लिंगं यस्य तस्य प्रमाणमापद्धर्मं संजय तन्निबोध ॥ ६४
यदि ह्यहं विसृजन्स्याम गर्ह्यो नियुद्ध्यमानो यदि जह्यां स्वधर्मम् ॥
महायशाः केशवस्तद्ब्रवीतु वासुदेवस्तूभयोरर्थकामः ॥ ६५
वा० उ०—अविनाशं संजय पांडवानामिच्छाम्यहं भूतिमेषां प्रियं च ।
तथा राज्ञो धृतराष्ट्रस्य सूत समाशंसे बहुपुत्रस्य वृद्धिम् ॥ ६६
न त्वं धर्मं विचरं संजयेह मत्तश्च जानासि युधिष्ठिराच्च ।
अथो कस्मात्संजय पांडवस्य उत्साहिनः पूरयतः स्वकर्म ॥ ६७
यथाख्यातमावसतः कुटुम्बे पुराकस्मात्साधु विलोपमात्थ ।
कर्मणाऽऽहुः सिद्धिमेके परत्र हित्वा कर्म विद्यया सिद्धिमेके ।
नाभुंजानो भक्ष्यभोज्यस्य तृप्येद्विद्वानपीह विहितं ब्राह्मणानाम् ॥ ६८
यदा गृध्येत्परभूतौ नृशंसो विधिप्रकोपाद्बलमाददानः ।
ततो राज्ञामभवद्युद्धमेतत्तत्र जातं वर्म शस्त्रं धनुश्च ॥ ६९
तत्र राजा धृतराष्ट्रस्य पुत्रो धर्म्यं हरेत्पाण्डवानामकस्मात् ।
नावेक्ष्यंते राजधर्मं पुराणं तदन्वयाः कुरवः सर्व एव ॥ ७०
सोऽयं लोभान्मन्यते धर्ममेतं यमिच्छति क्रोधवशानुगामी ।
भागः पुनः पांडवानां निविष्टस्तं नः कस्मादाददीरन्परे वै ॥ ७१
जानासि त्वं संजय सर्वमेतद्द्यूते वाक्यं गर्ह्यमेवं यथोक्तम् ।
स्वयं त्वहं प्रार्थये तत्र गन्तुं समाधातुं कार्यमेतद्विपन्नम् ॥ ७२
अहापयित्वा यदि पांडवार्थं शमं कुरूणामपि चेच्चरेयम् ।
पुण्यं च मे स्याच्चरितं महोदयं मुच्येरंश्च कुरवो मृत्युपाशात् ॥ ७३

वनं राजा धृतराष्ट्रः सपुत्रो व्याघ्रास्ते वै संजय पाण्डुपुत्राः ।
मा वनं छिंधि सव्याघ्रं मा व्याघ्रा नीनशन्वनात् ॥ ७४

यु० उ०—उत संतमसंतं वा बालं वृद्धं च संजय ।
उतावलं बलीयांसं धाता प्रकुरुते वशे ॥ ७५
उत बालाय पांडित्यं पंडितायोत बालताम् ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ ७६
गावल्गणे कुरून् गत्वा धृतराष्ट्रं महाबलम् ।
अभिवाद्योपसंगृह्य ततः पृच्छेरनामयम् ॥ ७७
ब्रूयाश्चैनं त्वामासीनं कुरुभिः परिवारितम् ।
तवैव राजन्वीर्येण सुखं जीवन्ति पांडवाः ॥ ७८
तव प्रसादाद्बालास्ते प्राप्ता राज्यमरिंदम ।
राज्ये तान् स्थापयित्वाग्रे नोपेक्षीर्विनशिष्यतः ॥ ७९
सर्वमप्येतदेकस्य नालं संजय कस्यचित् ।
तात संहत्य जीवामो द्विषतां मा वशं गमः ॥ ८०
अभिवाद्य च वक्तव्यस्ततोऽस्माकं पितामहः ।
भवता शंतनोर्वंशो निमग्नः पुनरुद्धृतः ॥ ८१
स त्वं कुरु तथा तात स्वमतेन पितामह ।
यथा जीवन्ति ते पौत्राः प्रीतिमन्तः परस्परम् ॥ ८२
अथ दुर्योधनं ब्रूया राजपुत्रममर्षणम् ।
मध्ये कुरूणामासीनमनुनीय पुनः पुनः ॥ ८३
अपापां यदुपैक्षस्त्वं कृष्णामेतां सभागताम् ।
तद्दुःखमतितिक्षाम मा वधिष्म कुरूनिति ॥ ८४
एवं पूर्वापरान्क्लेशानतितिक्षंत पांडवाः ।
बलीयांसोऽपि संता यत्तत्सर्वं कुरवो विदुः ॥ ८५
यन्नः प्राव्राजयः सौम्य अजिनैः प्रतिवासितान् ।
तद्दुःखमतितिक्षाम मा वधिष्म कुरूनिति ॥ ८६
यत्कुन्तीं समतिक्रम्य कृष्णां केशेष्वधर्षयत् ।
दुःशासनस्तेऽनुमते तच्चास्माभिरुपेक्षितम् ॥ ८७
यथोचितं स्वकं भाग लभेमहि परंतप ।
निवर्तय परद्रव्याद्बुद्धिं गृद्धां नरर्षभ ॥ ८८

शांतिरेवं भवेद्राजन् प्रीतिश्चैव परस्परम् ।
राज्यैकदेशमपि नः प्रयच्छ शममिच्छताम् ॥ ८९
कुशस्थलं वृकस्थलं माकंदीं वारणावतम् ।
अवसानं भवत्वत्र किंचिदेकं च पंचमम् ॥ ९०
भ्रातॄणां देहि पंचानां पंच ग्रामान् सुयोधन ।
शांतिर्नोऽस्तु महाप्राज्ञ ज्ञातिभिः सह संजय ॥ ९१
भ्राता भ्रातरमन्वेतु पिता पुत्रेण युज्यताम् ।
स्मयमानाः समायांतु पांचालाः कुरुभिः सह ॥ ९२
अलमेव शमायास्मि तथा युद्धाय संजय ।
धर्मार्थयोरलं चाहं मृदवे दारुणाय च ॥ ९३
वै० उ०—अनुज्ञातः पांडवेन प्रययौ संजयस्तदा ।
शासनं धृतराष्ट्रस्य सर्वं कृत्वा महात्मनः ॥ ९४
संप्राप्य हास्तिनपुरं शीघ्रमेव प्रविश्य च ।
अंतःपुरं समास्थाय द्वाःस्थं वचनमब्रवीत् ।
आचक्ष्व धृतराष्ट्राय द्वाःस्थ मां समुपागतम् ॥ ९५
द्वा० उ०—संजयोऽयं भूमिपते नमस्ते दिदृक्षया द्वारमुपागतस्ते ।
प्राप्तो दूतः पांडवानां सकाशात्प्रशाधि राजन् किमयं करोतु ॥ ९६
धृ० उ०—आचक्ष्व मां सुखिनं कल्पमस्मै प्रवेश्यतां स्वागतं संजयाय ।
न हि चाहमेतस्य भवाम्यकल्पः स मे कस्माद्द्वारि तिष्ठेच्च सक्तः ॥ ९७
वै० उ०—ततः प्रविश्यानुमते नृपस्य महद्वेश्म प्राज्ञशूरार्यगुप्तम् ।
सिंहासनस्थं पार्थिवमाससाद वैचित्रवीर्यं प्रांजलिः सूतपुत्रः ॥ ९८
सं० उ०—सहामात्यः कुशली पांडुपुत्रो बुभूषते यच्च तेऽग्रे मनोऽभूत् ।
निर्णिक्तधर्मार्थकरो मनस्वी बहुश्रुतो दृष्टिमाञ्शीलवांश्च ॥ ९९
स त्वां गर्हे भारतानां विरोधादंतो नूनं भवितायं प्रजानाम् ।
नो चेदिदं तव कर्मापराधात् कुरून् दहेत्कृष्णवर्त्मेव कक्षम् ॥ १००
धृ० उ०—अनुज्ञातोऽस्यावसथं परेहि प्रपद्यस्व शयनं सूतपुत्र ।
प्रातः श्रोतारः कुरवः सभायामजातशत्रोर्वचनं त्वयोक्तम् ॥ १०१

---

## ३

वै० उ०—द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ॥
विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम् ॥ १०२

ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् ।
अब्रवीत्प्रांजलिर्वाक्यं चिंतयन्तं नराधिपम् ॥ १०३

वि० उ०—विदुरोऽहं महाप्राज्ञ संप्राप्तस्तव शासनात् ।
यदि किंचन कर्तव्यमयमस्मि प्रशाधि माम् ॥ १०४

धृ० उ० —संजयो विदुर प्राप्तो गर्हयित्वा च मां गतः ।
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥ १०५
जाग्रतो दह्यमानस्य श्रेयो यदनु पश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ १०६

वि० उ०—अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरमाविशंति प्रजागराः ॥ १०७
दुर्योधने सौबले च कर्णे दुःशासने तथा ।
एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ १०८
आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता ।
यमर्थान्नापकर्षन्ति स वै पंडित उच्यते ॥ १०९
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तंभो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पंडित उच्यते ॥ ११०
नाप्राप्यमभिवांछन्ति नष्टं नेच्छंति शोचितुम् ।
आपत्सु च न मुह्यंति नराः पण्डितबुद्धयः ॥ १११
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवंध्यकालो वश्यात्मा स वै पंडित उच्यते ॥ ११२
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्याचरति मित्रार्थे यश्च मूढः स उच्यते ॥ ११३
अकामान् कामयति यः कामयानान् परित्यजेत् ।
बलवंतं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ११४
अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ११५
परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ ११६
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ११७

एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।
पंच जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥ ११८
एकः स्वादु न भुंजीत एकश्चार्थान्न चिंतयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ ११९
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ १२०
द्वे कर्मणी नरः कुर्वन्नस्मिँल्लोके विरोचते ।
अब्रुवन् परुषं किंचिदसतोऽनर्चयंस्तथा ॥ १२१
द्वाविमौ कंटकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ १२२
द्वाविमौ पुरुषव्याघ्र सूर्यमंडलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ १२३
त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥ १२४
हरणं च परस्वानां परदाराभिमर्शनम् ।
सुहृदश्च परित्यागस्त्रयो दोषा भयावहाः ॥ १२५
चत्वारि राज्ञा तु महाबलेन वर्ज्यान्याहुः पंडितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्यान्न दीर्घसूत्रैरलसैश्चारणैश्च ॥ १२६
चत्वारि ते तात गृहे वसंतु श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी चानपत्या ॥ १२७
पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥ १२८
पचेंद्रियस्य मर्त्यस्य छिद्रं चेदेकमिंद्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ १२९
षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तंद्री भयं क्रोध आलस्यं दीर्घसूत्रता ॥ १३०
षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ १३१
षडिमानि विनश्यंति मुहूर्तमनवेक्षणात् ।
गावः सेवा कृषिर्भार्या विद्या वृषलसंगतिः ॥ १३२

ईर्षुर्घृणी न संतुष्टः क्रोधनो नित्यशंकितः ।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ १३३

सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥ १३४

स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पंचमम् ।
महच्च दडपारुष्यमर्थदूषणमेव च ॥ १३५

वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥ १३६

यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः ।
तद्वदर्थान् मनुष्येभ्य आदद्यादविहिंसया ॥ १३७

पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथांगारकारकः ॥ १३८

धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धिनी ॥ १३९

अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः ।
प्रतिसंवेष्टते भूमिरग्नौ चर्माहितं यथा ॥ १४०

य एव यत्नः क्रियते परराष्ट्रविमर्दने ।
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने ॥ १४१

सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ १४२

य ईर्षुः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखसौभाग्यसत्कारे तस्य व्याधिरनंतकः ॥ १४३

नान्यत्र विद्यातपसोर्नान्यत्रेंद्रियनिग्रहात् ।
नान्यत्र लोभसंत्यागाच्छांतिं पश्यामि तेऽनघ ॥ १४४

तंतवोप्यायता नित्यं तनवो बहुलाः समाः ।
बहून् बहुत्वादायासान् संहतीत्युपमा सताम् ॥ १४५

धूमायंति व्यपेतानि ज्वलंति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ १४६

ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च ।
वृंताद्दिव फलं पक्वं धृतराष्ट्र पतंति ते ॥ १४७

अवध्या ब्राह्मणा गावो ज्ञातयः शिशवः स्त्रियः ।
येषां चान्नानि भुंजीत ये च स्युः शरणागताः ॥ १४८

मेढीभूतः कौरवाणां त्वमद्य त्वय्याधीनं कुरुकुलमाजमीढ ।
पार्थान् बालान् वनवासप्रतप्तान् गोपायस्व स्वं यशस्तात रक्षन् ॥ १४९

जरा रूपं हरति धैर्यमाशा मृत्युः प्राणान् धर्मचर्यामसूया ।
कामो ह्रियं वृत्तमनार्यसेवा क्रोधः श्रिय सर्वमेवाभिमानः ॥ १५०

धृ० उ०—शतायुरुक्तः पुरुषः सर्ववेदेषु वै यदा ।
नाप्नोत्यथ च तत्सर्वमायुः केनेह हेतुना ॥ १५१

वि० उ०—अतिमानोऽतिवादश्च तथाऽत्यागो नराधिप ।
क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् ॥ १५२

एत एवासयस्तीक्ष्णाः कृंतंत्यायूंषि देहिनाम् ।
एतानि मानवान् घ्नंति न मृत्युर्भद्रमस्तु ते ॥ १५३

सुलभाः पुरुषा राजन् सततं प्रियवादिन ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १५४

त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थ आत्मार्थे पृथिवीं त्यजेत् ॥ १५५

आपदर्थं धन रक्षेद्दारान् रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १५६

द्यूतमेतत्पुरा कल्पे दृष्टं वैरकरं नृणाम् ।
तस्माद्द्यूत न सेवेत हास्यार्थमपि बुद्धिमान् ॥ १५७

न भृत्यानां वृत्तिसंरोधनेन राज्यं धनं संजिघृक्षेदपूर्वम् ।
त्यजंति ह्येनं वंचिता वै विरुद्धा स्निग्धा ह्यमात्याः परिहीनभोगाः ॥ १५८

अस्तब्धमक्लीबमदीर्घसूत्रं सानुक्रोश श्लक्ष्णमहार्यमन्यैः ।
अरोगजातीयमुदारवाक्य भृत्यं वदंत्यष्टगुणोपपन्नम् ॥ १५९

न विश्वासाज्जातु परस्य गेहे गच्छेन्नरः संशयानो विकाले ।
न चत्वरे निशि तिष्ठेन्निगूढो न राजकाम्यां योषितं प्रार्थयीत ॥ १६०

घृणी राजा पुंश्चली राजभृत्यः पुत्रो भ्राता विधवा बालपुत्रा ।
सेनाजीवी चोद्धृतभूतिरेव व्यवहारेषु वर्जनीयाः स्युरेते ॥ १६१

अष्टौ गुणाः पुरुषं दीपयंति प्रज्ञा च कौल्यं च श्रुतं दमश्च ।
पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥ १६२

एतान्गुणांस्तात महानुभावानेको गुणः संश्रयते प्रसह्य ।
राजा यदा सत्कुरुते मनुष्यं सर्वान् गुणानेष गुणो बिभर्ति ॥ १६३
गुणा दश स्नानशीलं भजंते बल रूपं स्वरवर्णप्रशुद्धिः ।
स्पर्शश्च गधश्च विशुद्धताच श्रीः सौकुमार्य प्रवराश्च नार्यः ॥ १६४
गुणाश्च षण्मितभुक्तं भजंते आरोग्यमायुश्च बलं सुखं च ।
अनाविल चास्य भवत्यपत्य न चैनमाद्यून इति क्षिपंति ॥ १६५
अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् ।
निराहाराः प्रजाः शोच्याः शोच्यं राज्यमराजकम् ॥ १६६
अध्वा जरा देहवतां पर्वतानां जलं जरा ।
असभोगो जरा स्त्रीणा वाक्शल्य मनसो जरा ॥ १६७
सहस्रिणोऽपि जीवंति जीवंति शतिनस्तथा ।
धृतराष्ट्र विमुंचेच्छां न कथंचिन्न जीव्यते ॥ १६८
यत्पृथिव्यां व्रीहियवं हिरण्या पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ॥ १६९
मृतं पुत्र दुःखपुष्टं मनुष्या उत्क्षिप्य राजन् स्वगृहान्निर्हरंति ।
तं मुक्तकेशाः करुणं रुदंति चितामध्ये काष्ठमिव क्षिपंति ॥ १७०
अन्यो धनं प्रेतगतस्य भुंक्ते वयासि चाग्निश्च शरीरधातून् ।
द्वाभ्यामय स गच्छत्यमुत्र पुण्येन पापेन च वेष्ट्यमानः ॥ १७१
उत्सृज्य विनिवर्तंते ज्ञातयः सुहृदः सुताः ।
अपुष्पानफलान् वृक्षान् यथा तात पतत्रिणः ॥ १७२
अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयं कृतम् ।
तस्मात्तु पुरुषो यत्नाद्धर्मं सचिनुयाच्छनैः ॥ १७३
आत्मा नदी भारत पुण्यतीर्था सत्योदका धृतिकूला दयोर्मिः ।
तस्यां स्नातः पूयते पुण्यकर्मा पुण्यो ह्यात्मा नित्यमलोभ एव ॥ १७४
वै० उ०—एवं सनत्सुजातेन विदुरेण च धीमता ।
सार्धं कथयतो राज्ञः सा व्यतीयाय शर्वरी ॥ १७५
तस्यां रजन्यां व्युष्टायां राजानः सर्व एव ते ।
सभामाविविशुर्हृष्टाः सूतस्योपदिदृक्षया ॥ १७६
शुश्रूषमाणाः पार्थानां वाचो धर्मार्थसंहिताः ।
धृतराष्ट्रमुखाः सर्वे ययू राजसभां शुभाम् ॥ १७७

उपेयाय स तु क्षिप्रं रथात्प्रस्कंद्य कुंडली ।
प्रविवेश सभां पूर्णां महीपालैर्महात्मभिः ॥ १७८

सं० उ०—प्राप्तोऽस्मि पांडवान् गत्वा तद्विजानीत कौरवाः ।
यथावयः कुरून् सर्वान् प्रतिनंदंति पांडवाः ॥ १७९

अभिवादयंति वृद्धांश्च वयस्यांश्च वयस्यवत् ।
यूनश्चाभ्यवदन् पार्थाः प्रतिपूज्य यथावयः ॥ १८०

धृ० उ०—क्षत्रतेजा ब्रह्मचारी कौमारादपि पांडवः ।
तेन संयुगमेष्यन्ति मंदा विलपतो मम ॥ १८१

दुर्योधन निवर्तस्व युद्धाद्भरतसत्तम ।
न हि युद्धं प्रशंसंति सर्वावस्थमरिंदम ॥ १८२

अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवितुम् ।
प्रयच्छ पांडुपुत्राणां यथोचितमरिंदम ॥ १८३

एतद्धि कुरवः सर्वे मन्यन्ते धर्मसंहितम् ।
यत्त्वं प्रशांतिं मन्येथाः पांडुपुत्रैर्महात्मभिः ॥ १८४

अंगेमां समवेक्षस्व पुत्र स्वामेव वाहिनीम् ।
जात एव तवाभावस्त्वं तु मोहान्न बुध्यसे ॥ १८५

न ह्यहं युद्धमिच्छामि नैतदिच्छति बाह्लिकः ।
न च भीष्मो न च द्रोणो नाश्वत्थामा न संजयः ॥ १८६

येषु संप्रति निष्ठेयुः कुरवः पीडिताः परै. ।
ते युद्धं नाभिनंदंति तत्तुभ्य तात रोचताम् ॥ १८७

नं त्वं करोषि कामेन कर्णः कारयिता तव ।
दुःशासनश्च पापात्मा शकुनिश्चापि सौबलः ॥ १८८

दु० उ०—नाहं भवति न द्रोणे नाश्वत्थाम्नि न संजये ।
न भीष्मे न च कांबोजे न कृपे न च बाह्लिके ॥ १८९

सत्यव्रते गुरुमित्रे भूरिश्रवसि वा पुनः ।
अन्येषु वा तावकेषु भारं कृत्वा समाह्वये ॥ १९०

अहं च तात कर्णश्च रणयज्ञं वितत्य वै ।
युधिष्ठिरं पशुं कृत्वा दीक्षितौ पुरुषर्षभौ ॥ १९१

आत्मयज्ञेन नृपते इष्ट्वा वैवस्वतं रणे ।
विजित्य च समेष्यावो हतामित्रौ श्रिया वृतौ ॥ १९२

अहं च तात कर्णश्च भ्राता दुःशासनश्च मे ।
एते वयं हनिष्यामः पांडवान् समरे त्रयः ॥ १९३
अहं हि पांडवान् हत्वा प्रशास्ता पृथिवीमिमाम् ।
मां वा हत्वा पांडुपुत्रा भोक्तारः पृथिवीमिमाम् ॥ १९४
त्यक्तं मे जीवितं राज्यं धनं सर्वं च पार्थिव ।
न जातु पांडवैः सार्धं वसेयमहमच्युत ॥ १९५
यावद्धि सूच्यास्तीक्ष्णाया विद्ध्येदग्रेण मारिष ।
तावदप्यपरित्याज्य भूमेर्नः पांडवान् प्रति ॥ १९६
धृ० उ०—सर्वान् वस्तात शोचामि त्यक्तो दुर्योधनो मया ।
ये मंदमनुयास्यध्वं यांत वैवस्वतक्षयम् ॥ १९७
रुरूणामिव यूथेषु व्याघ्राः प्रहरतां वराः ।
वरान् वरान् हनिष्यंति समेता युधि पांडवाः ॥ १९८
प्रतीपमिव मे भाति युयुधानेन भारती ।
व्यस्ता सीमंतिनी ग्रस्ता प्रमृष्टा दीर्घबाहुना ॥ १९९
संपूर्णं पूरयन् भूयो बलं पार्थस्य माधवः ।
शैनेयः समरे स्थाता बीजवत्प्रवपञ्शरान् ॥ २००
सेनामुखे प्रयुद्धाना भीमसेनो भविष्यति ।
तं सर्वे संश्रयिष्यंति प्राकारमकुतोभयम् ॥ २०१
महद्वो भयमागामि न चेच्छाम्यथ पांडवैः ।
गदया भीमसेनेन हताः शममुपैष्यथ ॥ २०२
महावनमिव छिन्नं यदा द्रक्ष्यसि पातितम् ॥
बलं कुरूणां भीमेन तदा स्मर्तासि मे वचः ॥ २०३
आत्मजेषु परं स्नेहं सर्वभूतानि कुर्वते ।
प्रियाणि चैषां कुर्वंति यथाशक्ति हितानि च ॥ २०४
जातिवृद्ध्याभिपन्नाश्च पांडवानामनेकशः ।
धर्मादयः समेष्यंति समाहूता दिवौकसः ॥ २०५
भीष्मद्रोणकृपादीनां भयादशनिसन्निभम् ।
रिरक्षिषंतः संरंभं गमिष्यंतीति मे मतिः ॥ २०६
दु० उ०—अशक्या देवसाचिव्याः पार्थाः स्युरिति यद्भवान् ।
मन्यते तद्भयं व्येतु भवतो राजसत्तम ।
नैव मानुषवद्देवाः प्रवर्तंते कदाचन ॥ २०७

यद्वा ह्यग्निश्च वायुश्च धर्म इंद्रोऽश्विनावपि ।
कामयोगात्प्रवर्तेरन्न पार्था दुःखमाप्नुयुः ॥ २०८
अथ चेत्कामसंयोगाद्द्वेषो लोभश्च लक्ष्यते ।
द्वेषेषु दैवप्रामाण्यान्नैषा तद्विक्रमिष्यति ॥ २०९
मयाभिमंत्रितः शश्वज्जातवेदाः प्रशाम्यति ।
दिधक्षुः सकलॉल्लोकान् परिक्षिप्य समंततः ॥ २१०
यद्वा परमक तेजो येन युक्ता दिवौकसः ।
ममाप्यनुपमं भूयो देवेभ्यो विद्धि भारत ॥ २११
लोकसाक्षिकमेतन्मे महात्म दिक्षु विश्रुतम् ।
आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृप ॥ २१२
पांडवांश्चैव मत्स्यांश्च पांचालान् कैकयैः सह ।
सात्यकिं वासुदेवं च श्रोतासि विजितान्मया ॥ २१३
परा बुद्धिः परं तेजो वीर्यं च परमं मम ।
परा विद्या परो योगो मम तेभ्यो विशिष्यते ॥ २१४
पितामहश्च द्रोणश्च कृप शल्यः शलस्तथा ।
अस्त्रेषु यत्प्रजानंति सर्वं तन्मयि विद्यते ॥ २१५

क० उ०—मिथ्या प्रतिज्ञाय मया यदस्त्रं रामात्कृतं ब्रह्ममयं पुरस्तात् ।
विज्ञाय तेनास्मि तदैवमुक्तस्तेनाऽन्तकाले प्रतिभास्यतीति ॥ २१६
महापराधे ह्यपि यन्न तेन महर्षिणाऽहं गुरुणा च शप्तः ।
शक्तः प्रदग्धुं ह्यपि तिग्मतेजाः ससागरामप्यवनिं महर्षि ॥ २१७
प्रसादितं ह्यस्य मया मनोऽभूच्छुश्रूषया स्वेन च पौरुषेण ।
तदस्ति चास्त्र मम सावशेषं तस्मात्समर्थोऽस्मि ममैष भारः ॥ २१८
निमेषमात्रात्तमृषेः प्रसादमवाप्य पांचालकरूषमत्स्यान् ।
निहत्य पार्थान् सह पुत्रपौत्रैर्लोकानहं शस्त्रजितान् प्रपत्स्ये ॥ २१९
पितामहस्तिष्ठतु ते समीपे द्रोणश्च सर्वे च नरेंद्रमुख्याः ।
यथाप्रधानेन बलेन गत्वा पार्थान् हनिष्यामि ममैष भारः ॥ २२०
एवं ब्रुवंतं तमुवाच भीष्मः किं कत्थसे कालपरीतबुद्धे ।
न कर्ण जानासि यथा प्रधाने हते हताः स्युर्धृतराष्ट्रपुत्राः ॥ २२१
यत्खांडवं दाहयता कृतं हि कृष्णाद्वितीयेन धनंजयेन ।
श्रुत्वैव तत्कर्म नियंतुमात्मा युक्तस्त्वया वै सह बांधवेन ॥ २२२

यां चापि शक्तिं त्रिदशाधिपस्ते ददौ महात्मा भगवान् महेन्द्रः ।
भस्मीकृतां तां समरे विशीर्णां चक्राहतां द्रक्ष्यसि केशवेन ॥ २२३
यस्ते शरः सर्पमुखो विभाति सदाग्र्यमाल्यैर्महितः प्रयत्नात् ।
बाणस्य भौमस्य च कर्ण हंता किरीटिनं रक्षति वासुदेवः ।
यस्त्वादृशानां च वरीयसां च हंता रिपूणां तुमुले प्रगाढे ॥ २२४
क० उ०—असंशयं वृष्णिपतिर्यथोक्तस्तथा च भूयांश्च ततो महात्मा ।
अहं यदुक्तः पुरुषं तु किंचित् पितामहस्तस्य फलं शृणोतु ॥ २२५
न्यस्यामि शस्त्राणि न जातु संख्ये पितामहो द्रक्ष्यति मां सभायाम् ।
त्वयि प्रशांते तु मम प्रभावं द्रक्ष्यंति सर्वे भुवि भूमिपालाः ॥ २२६
इत्येवमुक्त्वा स महाधनुष्मान् हित्वा सभा स्वं भवनं जगाम ।
भीष्मस्तु दुर्योधनमेव राजन् मध्ये कुरूणा प्रहसन्नुवाच ॥ २२७
सत्यप्रतिज्ञः किल सूतपुत्रस्तथा स भारं विषहेत कस्मात् ।
व्यूहं प्रतिव्यूह्य शिरांसि भित्त्वा लोकक्षयं पश्यत भीमसेनात् ॥ २२८
आवन्त्यकालिंगजयद्रथेषु चेदिध्वजे तिष्ठति बाह्लिके च ।
अहं हनिष्यामि सदा परेषा सहस्रशश्चायुतशश्च योधान् ॥ २२९
यदैव रामे भगवत्यनिंद्ये ब्रह्म ब्रुवाणः कृतवांस्तदस्त्रम् ।
तदैव धर्मश्च तपश्च नष्टं वैकर्तनस्याधमपूरुषस्य ॥ २३०
धृ० उ०—दुर्योधन विजानीहि यस्त्वां वक्ष्यामि पुत्रक ।
उत्पथं मन्यसे मार्गमनभिज्ञ इवाध्वग. ॥ २३१
पंचानां पांडुपुत्राणा यत्तेजः प्रजिहीर्षसि ।
पंचानामिव भूतानां महतां लोकधारिणाम् ॥ २३२
वै० उ०—दुर्योधने धार्तराष्ट्रे तद्वचो नाभिनंदति ।
तूष्णींभूतेषु सर्वेषु समुत्तस्थुर्नरर्षभाः ॥ २३३
यु० उ०—श्रुतं ते धृतराष्ट्रस्य सपुत्रस्य चिकीर्षितम् ।
एतद्धि सकलं कृष्ण संजयो मां यदब्रवीत् ॥ २३४
तन्मतं धृतराष्ट्रस्य सोऽस्यात्मा विवृतांतरः ।
यथोक्तं दूत आचष्टे वध्यः स्यादन्यथाब्रुवन् ॥ २३५
अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति ।
लुब्धः पापेन मनसा चरन्नसममात्मनः ॥ २३६
स्थाता नः समये तस्मिन् धृतराष्ट्र इति प्रभो ।
नाहास्म समयं कृष्ण तद्धि नो ब्राह्मणा विदुः ॥ २३७

वृद्धो राजा धृतराष्ट्रः स्वधर्मं नानुपश्यति ।
वश्यत्वात्पुत्रगृद्धित्वान्मंदस्यान्वेति शासनम् ॥ २३८
इतो दुःखतरं किं नु यदहं मातुरंततः ।
संविधातुं न शक्नोमि मित्राणां वा जनार्दन ॥ २३९
काशिभिश्चेदिपांचालैर्मत्स्यैश्च मधुसूदन ।
भवता चैव नाथेन पंचग्रामा वृता मया ॥ २४०
न च तानपि दुष्टात्मा धार्तराष्ट्रोऽनुमन्यते ।
साम्यमात्मनि मत्वासावतो दुःखतर नु किम् ॥ २४१
नातः पापीयसी कांचिदवस्था शंबरोऽब्रवीत् ।
यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ २४२
धनमाहुः पर धर्मं धने सर्वं प्रतिष्ठितम् ।
जीवंति धनिनो लोके मृता ये त्वधना नराः ॥ २४३
ते वयं न श्रियं हातुमलं न्यायेन केनचित् ।
अत्र नो यतमानाना वधश्चेदपि साधु तत् ॥ २४४
तत्र नः प्रथमः कल्पो यद्वयं ते च माधव ।
प्रशान्ताः शमभूताश्च श्रियं तामश्नुवीमहि ॥ २४५
तत्रैषा परमा काष्ठा रौद्रकर्मक्षयोदया ।
यद्वयं कौरवान् हत्वा तानि राष्ट्राण्यवाप्नुमः ॥ २४६
पापः क्षत्रियधर्मोऽयं वयं च क्षत्रबांधवाः ।
स नः स्वधर्मोऽधर्मो वा वृत्तिरन्या विगर्हिता ॥ २४७
शूद्रः करोति शुश्रूषा वैश्यो वै पण्यजीविकाम् ।
वयं वधेन जीवामः कपालं ब्राह्मणैर्वृतम् ॥ २४८
क्षत्रियः क्षत्रियं हन्ति मत्स्यो मत्स्येन जीवति ।
श्वा श्वानं हन्ति दाशार्ह पश्य धर्मो यथागतः ॥ २४९
एको ह्यपि बहून् हन्ति घ्नंत्येकं बहवोप्युत ।
शूरं कापुरुषो हन्ति अयशस्वी यशस्विनम् ॥ २५०
लांगूलचालनं क्ष्वेडा प्रतिरावो विवर्तनम् ।
दंतदर्शनमारावस्ततो युद्ध प्रवर्तते ॥ २५१
तत्र यो बलवान् कृष्ण जित्वा सोऽत्ति तद्वामिषम् ।
एवमेव मनुष्येषु विशेषो नास्ति कश्चन ॥ २५२

ईदृशे ह्यर्थकृच्छ्रेऽस्मिन् कमन्यं मधुसूदन ।
उपसंप्रष्टुमर्हामि त्वामृते पुरुषोत्तम ॥ २५३
प्रियश्च प्रियकामश्च गतिज्ञः सर्वकर्मणाम् ।
को हि कृष्णास्ति नस्त्वादृक् सर्वनिश्चयवित्सुहृद् ॥ २५४
एवमुक्तः प्रत्युवाच धर्मराजं जनार्दनः ।
उभयोरेव वामर्थे यास्यामि कुरुसंसदम् ॥ २५५
शम तत्र लभेयं चेद्युष्मदर्थमहापयन् ।
पुण्यं मे सुमहद्राजंश्चरितं स्यान्महाफलम् ॥ २५६
मोचयेयं मृत्युपाशात् संरब्धान् कुरुसंजयान् ।
पाडवान् धार्तराष्ट्राश्च सर्वां च पृथिवीमिमाम् ॥ २५७
यु० उ०—यत्तुभ्यं रोचते कृष्ण स्वस्ति प्राप्नुहि कौरवान् ।
कृतार्थं स्वस्तिमन्तं त्वा द्रक्ष्यामि पुनरागतम् ॥ २५८
विष्वक्सेन कुरून् गत्वा भारताञ्शमये प्रभो ।
यथा सर्वे सुमनसः सह स्याम सुचेतसः ॥ २५९
अस्मान् वेत्थ परान् वेत्थ वेत्थार्थान् वेत्थ भाषितुम् ।
यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यः सुयोधनः ॥ २६०
भी० उ०—यथा यथैव शांतिः स्यात्कुरूणां मधुसूदन ।
तथा तथैव भाषेथा मास्म युद्धेन भीषयेः ॥ २६१
अमर्षी जातसंरंभः श्रेयोद्वेषी महामनाः ।
नोग्रं दुर्योधनो वाच्यः साम्नैवैनं समाचरेः ॥ २६२
प्रकृत्या पापसत्वश्च तुल्यचेतास्तु दस्युभिः ।
ऐश्वर्यमदमत्तश्च कृतवैरश्च पांडवैः ॥ २६३
अदीर्घदर्शी निष्ठुरो क्षेप्ता क्रूरपराक्रमः ।
दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः ।
म्रियेतापि न भज्येत नैव जह्यात्स्वकं मतम् ॥ २६४
सह० उ०—यदेतत्कथितं राज्ञा धर्म एष सनातनः ।
यथा च युद्धमेव स्यात्तथा कार्यमरिंदम ॥ २६५
यदि प्रशममिच्छेयुः कुरवः पांडवैः सह ।
तथापि युद्धं दाशार्ह योजयेथाः सहैव तैः ॥ २६६
कथं नु दृष्ट्वा पांचालीं तथा कृष्ण सभागताम् ।
अवधेन प्रशाम्येत मम मन्युः सुयोधने ॥ २६७

यदि भीमार्जुनौ कृष्ण धर्मराजश्च धार्मिकः ।
धर्ममुत्सृज्य तेनाऽहं योद्धुमिच्छामि संयुगे ॥ २६८

सात्य० उ०—सत्यमाह महाबाहो सहदेवो महामतिः ।
दुर्योधनवधे शान्तिस्तस्य कोपस्य मे भवेत् ॥ २६९

तस्मान्माद्रीसुतः शूरो यदाह रणकर्कशः ।
वचनं सर्वयोधानां तन्मतं पुरुषोत्तम ॥ २७०

एवं वदति वाक्यं तु युयुधाने महामतौ ।
सुभीमः सिंहनादोऽभूद्योधानां तत्र सर्वशः ॥ २७१

सर्वे हि सर्वशो वीरास्तद्वचः प्रत्यपूजयन् ।
साधु साध्विति शैनेयं हर्षयन्तो युयुत्सवः ॥ २७२

राज्ञस्तद्वचनं श्रुत्वा धर्मार्थसहितं हितम् ।
कृष्णा दाशार्हमासीनमब्रवीच्छोककर्शिता ॥ २७३

सुता द्रुपदराजस्य स्वसितायतमूर्धजा ।
संपूज्य सहदेवं च सात्यकिं च महारथम् ॥ २७४

भीमसेनं च संशान्तं दृष्ट्वा परमदुर्मनाः ।
अश्रुपूर्णेक्षणा वाक्यमुवाचेदं मनस्विनी ॥ २७५

द्रौ० उ०—अप्रदानेन राज्यस्य यदि कृष्ण सुयोधनः ।
संधिमिच्छेन्न कर्तव्यस्तत्र गत्वा कथंचन ॥ २७६

साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः ।
योक्तव्यस्तेषु दण्डः स्याज्जीवितं परिरक्षता ॥ २७७

दुःशासनभुजं श्यामं संछिन्नं पांसुगुण्ठितम् ।
यद्यहं तु न पश्यामि का शान्तिर्हृदयस्य मे ॥ २७८

त्रयोदश हि वर्षाणि प्रतीक्षन्त्या गतानि मे ।
निधाय हृदये मन्युं प्रदीप्तमिव पावकम् ॥ २७९

विदीर्यते मे हृदयं भीमवाक्शल्यपीडितम् ।
योऽयमद्य महाबाहुर्धर्ममेवानुपश्यति ॥ २८०

इत्युक्त्वा बाष्परुद्धेन कंठेनायतलोचना ।
रुरोद कृष्णा सोत्कंपं सस्वरं बाष्पगद्गदम् ॥ २८१

तामुवाच महाबाहुः केशवः परिसांत्वयन् ।
अचिराद्द्रक्ष्यसे कृष्णे रुदतीर्भरतस्त्रियः ॥ २८२

एव ता भीरु रोत्स्यंति निहतज्ञातिबांधवाः ।
हतमित्रा हतबला येषा क्रुद्धासि भामिनि ॥ २८३
अहं च तत्करिष्यामि भीमार्जुनयमैः सह ।
युधिष्ठिरनियोगेन दैवाच्च विधिनिर्मितात् ॥ २८४
धार्तराष्ट्राः कालपक्का न चेच्छ्रृण्वति मे वचः ।
शेष्यते निहता भूमौ श्वशृगालादनीकृता ॥ २८५
सत्यं ते प्रतिजानामि कृष्णे बाष्पो निगृह्यताम् ।
हतामित्राञ्श्रियायुक्तानचिराद्द्रक्ष्यसे पतीन् ॥ २८६
अ० उ०—कुरूणामद्य सर्वेषा भवान् सुहृदनुत्तमः ।
संबधी दयितो नित्यमुभयो पक्षयोरपि ॥ २८७
त्वामितः पुडरीकाक्ष सुयोधनममर्षणम् ।
शात्यर्थं भ्रातर ब्रूया यत्तद्वाच्यममित्रहन् ॥ २८८
त्वया धर्मार्थयुक्तं चेदुक्तं शिवमनामयम् ।
हित नादास्यते बालो दिष्टस्य वशमेष्यति ॥ २८९

---

५

वै० उ०—ततो व्यपेते तमासि सूर्ये विमलता गते ।
मैत्रे मुहूर्ते संप्राप्ते मृदुर्चिषि दिवाकरे ॥ २९०
कौमुदे मासि रेवत्या शरदंते हिमागमे ।
स्फीतसरयसुखे काले कल्पः सत्ववता वरः ॥ २९१
कृत्वा पौर्वाह्णिक कृत्यं स्नातः शुचिरलंकृतः ।
उपतस्थे विवस्वंतं पावक च जनार्दनः ॥ २९२
ऋषभ पृष्ठ आलभ्य ब्राह्मणानभिवाद्य च ।
आरुरोह रथ शौरिर्विमानमिव कामगम् ॥ २९३
ततः सात्यकिमारोप्य प्रययौ पुरुषोत्तमः ।
पृथिवीं चान्तरिक्षं च रथघोषेण नादयन् ॥ २९४
स शालीभवनं रम्यं सर्वसस्यसमाचितम् ।
सुखं परमधर्मिष्ठमभ्यगाद्भरतर्षभ ॥ २९५
पश्यन् बहुपशून् ग्रामान् रम्यान् हृदयतोषणान् ।
पुराणि च व्यतिक्रामन् राष्ट्राणि विविधानि च ॥ २९६

नित्यं हृष्टाः सुमनसो भारतैरभिरक्षिताः ।
नोद्विग्नाः परचक्राणां व्यसनानामकोविदाः ॥ २९७
उपप्लव्यादथागम्य जनाः पुरनिवासिनः ।
पर्यतिष्ठन्त सहिता विष्वक्सेनदिदृक्षया ॥ २९८
वृकस्थलं समासाद्य केशवः परवीरहा ।
प्रकीर्णरश्मावादित्ये व्योम्नि वै लोहितायति ॥ २९९
अवतीर्य रथात्तूर्णं कृत्वा शौचं यथाविधि ।
रथमोचनमादिश्य सध्यामुपविवेश ह ॥ ३००
सुमृष्टं भोजयित्वा च ब्राह्मणांस्तत्र केशवः ।
भुक्त्वा च सह तैः सर्वैरवसत्तां क्षपा सुखम् ॥ ३०१
प्रातरुत्थाय कृष्णस्तु कृतवान् सर्वमाह्निकम् ।
ब्राह्मणैरभ्यनुज्ञातः प्रययौ नगरं प्रति ॥ ३०२
धार्तराष्ट्रास्तमायातं प्रत्युज्जग्मुः स्वलंकृताः ।
दुर्योधनादृते सर्वे भीष्मद्रोणकृपादयः ॥ ३०३
पौराश्च बहुला राजन् हृषीकेश दिदृक्षवः ।
यानैर्बहुविधैरन्ये पद्भिरेव तथा परे ॥ ३०४
स वै पथि समागम्य भीष्मेणाक्लिष्टकर्मणा ।
द्रोणेन धार्तराष्ट्रैश्च तैर्वृतो नगरं ययौ ॥ ३०५
कृष्णसंमाननार्थं च नगरं समलंकृतम् ।
बभूव राजमार्गश्च बहुरत्नसमन्वितः ॥ ३०६
आवृतानि वरस्त्रीभिर्गृहाणि सुमहांत्यपि ।
प्रचलंतीव भारेण दृश्यंते स्म महीतले ॥ ३०७
स गृह धृतराष्ट्रस्य प्राविशच्छत्रुकर्शनः ।
पांडुरं पुंडरीकाक्षः प्रासादैरुपशोभितम् ॥ ३०८
तिस्रः कक्षा व्यतिक्रम्य केशवो राजवेश्मनः ।
वैचित्रवीर्यं राजानमभ्यगच्छदरिंदमः ॥ ३०९
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नराधिपः ।
सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः ॥ ३१०
ततो राजानमासाद्य धृतराष्ट्रं यशस्विनम् ।
सभीष्मं पूजयामास वार्ष्णेयो वाग्भिरंजसा ॥ ३११

तत्रासीदूर्जितं मृष्टं कांचनं महदासनम् ।
शासनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः ॥ ३१२
अथ गां मधुपर्कं चाप्युदकं च जनार्दनम् ।
उपजह्रुर्यथान्यायं धृतराष्ट्रपुरोहिताः ॥ ३१३
कृतातिथ्यस्तु गोविंदः सर्वान् परिहसन् कुरून् ।
आस्ते सांबंधिकं कुर्वन् कुरुभिः परिवारितः ॥ ३१४
सोऽर्चितो धृतराष्ट्रेण पूजितश्च महायशाः ।
राजानं समनुज्ञाप्य निरक्रामदरिंदमः ॥ ३१५
विदुरावसथं रम्यमुपातिष्ठत माधवः ।
अर्चयामास दाशार्हं सर्वकामैरुपस्थितम् ॥ ३१६
कृतातिथ्य तु गोविंद विदुरः सर्वधर्मवित् ।
कुशलं पांडुपुत्राणामपृच्छन्मधुसूदनम् ॥ ३१७
प्रीयमाणस्य सुहृदो विदुषो वृष्णिसत्तमः ।
धर्मार्थनित्यस्य सतो गतरोषस्य धीमतः ॥ ३१८
तस्य सर्वं सविस्तारं पांडवानां विचेष्टितम् ।
क्षत्तुराचष्ट दाशार्हः सर्वं प्रत्यक्षदर्शिवान् ॥ ३१९
तया कथयतोरेव तयोर्बुद्धिमतोस्तदा ।
शिवा नक्षत्रसंपन्ना सा व्यतीताय शर्वरी ॥ ३२०

---

## ६.

तत उत्थाय दाशार्ह ऋषभः सर्वसात्वताम् ।
सर्वमावश्यकं चक्रे प्रातःकार्यं जनार्दनः ॥ ३२१
अथ दुर्योधनः कृष्णं शकुनिश्चापि सौबलः ।
संध्यां तिष्ठंतमभ्येत्य दाशार्हमपराजितम् ॥ ३२२
आचक्षेतां तु कृष्णस्य धृतराष्ट्रं सभागतम् ।
कुरूंश्च भीष्मप्रमुखान् राज्ञः सर्वांश्च पार्थिवान् ॥ ३२३
ततो विमल आदित्ये ब्राह्मणेभ्यो जनार्दनः ।
ददौ हिरण्यं वासांसि गाश्चाश्वांश्च परंतपः ॥ ३२४
अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश्च जनार्दनः ।
कौस्तुभं मणिमामुच्य श्रिया परमया ज्वलन् ॥ ३२५

कुरुभिः स वृतः कृष्णो वृष्णिभिश्चाभिरक्षितः ।
आतिष्ठत रथं शौरिः सर्वयादवनंदनः ॥ ३२६
अन्वारुरोह दाशार्हं विदुरः सर्वधर्मवित् ।
सर्वप्राणभृतां श्रेष्ठं सर्वबुद्धिमतां वरम् ॥ ३२७
ततोऽभ्याशगते कृष्णे समहृष्यन्नराधिपाः ।
श्रुत्वा तं रथनिर्घोषं पर्जन्यनिनदोपमम् ॥ ३२८
आसाद्य तु सभाद्वारमृषभः सर्वसात्वताम् ।
अवतीर्य रथाच्छौरिः कैलासशिखरोपमात् ॥ ३२९
नवमेघप्रतीकाशां ज्वलंतीमिव तेजसा ।
महेन्द्रसदनप्रख्यां प्रविवेश सभा ततः ॥ ३३०
धृतराष्ट्रं पुरस्कृत्य भीष्मद्रोणादयस्ततः ।
आसनेभ्योऽचलन् सर्वे पूजयंतो जनार्दनम् ॥ ३३१
उत्तिष्ठति महाराजे धृतराष्ट्रे जनेश्वरे ।
तानि राजसहस्राणि समुत्तस्थुः समंततः ॥ ३३२
निषसादासने कृष्णो राजानश्च यथासनम् ।
दुःशासनः सात्यकये ददावासनमुत्तमम् ॥ ३३३
अविदूरे तु कृष्णस्य कर्णदुर्योधनावुभौ ।
एकासने महात्मानौ निषीदतुरमर्षणौ ॥ ३३४
विदुरो मणिपीठे तु शुक्लस्पर्ध्याजिनोत्तरे ।
संस्पृशन्नासनं शौरेर्महामतिरुपाविशत् ॥ ३३५
अतसीपुष्पसंकाशः पीतवासा जनार्दनः ।
व्यभ्राजत सभामध्ये हेम्नीवोपहितो मणिः ॥ ३३६
ततस्तूष्णीं सर्वमासीद्गोविंदगतमानसम् ।
न तत्र कश्चित्किंचिद्वा व्याजहार पुमान् क्वचित् । ३३७
तेष्वासीनेषु सर्वेषु तूष्णींभूतेषु राजसु ।
धृतराष्ट्रमभिप्रेक्ष्य समभाषत माधवः ॥ ३३८
कृ० उ०—कुरूणां पांडवानां च शमः स्यादिति भारत ।
अप्रणाशेन वीराणामेतद्यातितुमागतः ॥ ३३९
इदं ह्यद्य कुलं श्रेष्ठं सर्वराजसु पार्थिव ।
श्रुतवृत्तोपसंपन्नं सर्वैः समुदितं गुणैः ॥ ३४०

तस्मिन्नेवंविधे राजन् कुले महति तिष्ठति ।
त्वन्निमित्तं विशेषेण नेह युक्तमसांप्रतम् ॥ ३४१
त्वं हि धारयिता श्रेष्ठः कुरूणां कुरुसत्तम ।
मिथ्या प्रचरतां तात बाह्येष्वभ्यतरेषु च ॥ ३४२
ते पुत्रास्तव कौरव्य दुर्योधनपुरोगमाः ।
धर्मार्थौ पृष्ठतः कृत्वा प्रचरंति नृशंसवत् ॥ ३४३
सेयमापन् महाघोरा कुरुष्वेव समुत्थिता ।
उपेक्ष्यमाणा कौरव्य पृथिवी घातयिष्यति ॥ ३४४
त्वय्यधीनः शमो राजन् मयि चैव विशांपते ।
पुत्रान् स्थापय कौरव्य स्थापयिष्याम्यहं परान् ॥ ३४५
आज्ञा तव हि राजेंद्र कार्या पुत्रैः सहान्वयैः ।
हितं बलवदप्येषां तिष्ठतां तव शासने ॥ ३४६
स्वयं निष्फलमालक्ष्य संविधत्स्व विशांपते ।
सहायभूता भरतास्तवैव स्युर्जनेश्वर ॥ ३४७
न हि त्वां पांडवैर्जेतुं रक्ष्यमाणं महात्मभिः ।
इन्द्रोऽपि देवैः सहितः प्रसहेत कुतो नृपाः ॥ ३४८
लोकस्येश्वरतां भूयः शत्रुभिश्चाप्यधृष्यताम् ।
प्राप्स्यसि त्वममित्रघ्न सहितः कुरुपांडवैः ॥ ३४९
एतानेव पुरोधाय सत्कृत्य च यथा पुरा ।
अखिलां भोक्ष्यसे सर्वां पृथिवीं पृथिवीपते ॥ ३५०
संयुगे वै महाराज दृश्यते सुमहान्क्षयः ।
क्षये चोभयतो राजन् कं धर्ममनुपश्यसि ॥ ३५१
पांडवैर्निहतैः संख्ये पुत्रैर्वापि महाबलैः ।
यद्विंदेथा महाराज तद्ब्रूहि भरतर्षभ ॥ ३५२
शूराश्च हि कृतास्त्राश्च सर्वे युद्धाभिकांक्षिणः ।
पांडवास्तावकाश्चैव तान् रक्ष महतो भयात् ॥ ३५३
त्राहि राजन्निमं लोकं न नश्येयुरिमाः प्रजाः ।
त्वयि प्रकृतिमापन्ने शेषः स्यात्कुरुनंदन ॥ ३५४
शुक्ला वदान्या ह्रीमंत आर्याः पुण्याभिजातयः ।
अन्योन्यसचिवा राजंस्तान् पाहि महतो भयात् ॥ ३५५

शिवेनेमे भूमिपालाः समागम्य परस्परम् ।
सह भुक्त्वा च पीत्वा च प्रतियातु यथागृहम् ॥ ३५६
हार्दं यत्पांडवेष्वासीत्प्राप्तेऽस्मिन्नायुष क्षये ।
तदेव ते भवत्वद्य संधत्स्व भरतर्षभ ॥ ३५७
बाला विहीनाः पित्रा ते त्वयैव परिवर्धिता ।
तान् पालय यथान्यायं पुत्रांश्च भरतर्षभ ॥ ३५८
भवतैव हि रक्ष्यास्ते व्यसनेषु विशेषत ।
मा ते धर्मस्तथैवार्थो नश्येत भरतर्षभ ॥ ३५९
आहुस्त्वा पांडवा राजन्नभिवाद्य प्रसाद्य च ।
भवतः शासनाद्दुःखमनुभूत सहानुगैः ॥ ३६०
स्थाता न समये तस्मिन् पितेति कृतनिश्चयाः ।
नाहास्म समयं तात तच्च नो ब्राह्मणा विदुः ॥ ३६१
तस्मिन्नः समये तिष्ठ स्थितानां भरतर्षभ ।
नित्यं संक्लेशिता राजन् स्वराज्यांशं लभेमहि ॥ ३६२
स भवान् मातृपितृवदस्मासु प्रतिपद्यताम् ॥ ३६३
आहुश्चेमां परिषद् पुत्रास्ते भरतर्षभ ।
धर्मज्ञेषु सभासत्सु नेह युक्तमसाप्रतम् ॥ ३६४
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ।
धर्म एतानारुजति यथा नद्यनुकूलजान् ॥ ३६५
ये धर्ममनुपश्यतस्तूष्णीं ध्यायंत आसते ।
ते सत्यमाहुर्धर्म्यं च न्याय्यं च भरतर्षभ ॥ ३६६
ब्रुवंतु ते महीपालाः सभायां ये समासते ।
धर्मार्थौ संप्रधार्यैव यदि सत्यं ब्रवीम्यहम् ॥ ३६७
प्रमुंचेमान्मृत्युपाशात्क्षत्रियान् पुरुषर्षभ ।
प्रशाम्य भरतश्रेष्ठ मा मन्युवशमन्वगाः ॥ ३६८
पित्र्यं तेभ्यः प्रदायांशं पांडवेभ्यो यथोचितम् ।
ततः सपुत्रः सिद्धार्थो भुक्ष्व भोगान् परंतप ॥ ३६९
अहं तु तव तेषां च श्रेय इच्छामि भारत ।
धर्मादर्थात्सुखाच्चैव मा राजन्नीनशः प्रजाः ॥ ३७०

अनर्थमर्थं मन्वानोऽप्यर्थं चानर्थमात्मनः ।
लोभेऽतिप्रसृतान् पुत्रान्निगृह्णीष्व विशांपते ॥ ३७१
स्थिता शुश्रूषितुं पार्थाः स्थिता योद्धुमरिंदमाः ।
यत्ते पथ्यतमं राजंस्तस्मिंस्तिष्ठ परंतप ॥ ३७२
वै० उ०—तद्वाक्यं पार्थिवाः सर्वे हृदयैः समपूजयन् ।
न तत्र कश्चिद्वक्तुं हि वाचं प्राक्रामदग्रतः ॥ ३७३
तस्मिन्नभिहिते वाक्ये केशवेन महात्मना ।
स्तिमिता हृष्टरोमाण आसन् सर्वे सभासदः ॥ ३७४

---

७

एवमुक्तस्ततः कृष्णमभ्यभाषत कौरवः ।
स्वर्ग्यं लोक्यं च मामात्थ धर्म्यं न्याय्यं च केशव ॥ ३७५
न त्वहं स्ववशस्तात क्रियमाणं न मे प्रियम् ।
अङ्ग दुर्योधनं कृष्ण मन्दं शास्त्रातिगं मम ॥ ३७६
अनुनेतुं महाबाहो यतस्व पुरुषोत्तम ।
न शृणोति महाबाहो वचनं साधुभाषितम् ॥ ३७७
कृ० उ०—दुर्योधन निबोधेदं मद्वाक्यं कुरुसत्तम ।
शमार्थं ते विशेषेण सानुबन्धस्य भारत ॥ ३७८
महाप्राज्ञकुले जातः साध्वेतत्कर्तुमर्हसि ।
श्रुतवृत्तोपसंपन्नः सर्वैः समुदितो गुणैः ॥ ३७९
प्राज्ञैः शूरैर्महोत्साहैरात्मवद्भिर्बहुश्रुतैः ।
संधत्स्व पुरुषव्याघ्र पाण्डवैर्भरतर्षभ ॥ ३८०
ज्ञातीनां चैव भूयिष्ठं मित्राणां च परंतप ।
शमे शर्म भवेत्तात सर्वस्य जगतस्तथा ॥ ३८१
ह्रीमानसि कुले जातः श्रुतवाननृशंसवान् ।
तिष्ठ तातपितुः शास्त्रे मातुश्च भरतर्षभ ॥ ३८२
एतच्छ्रेयो हि मन्यन्ते पिता यच्छास्ति भारत ।
उत्तमापद्गतः सर्वः पितुः स्मरति शासनम् ॥ ३८३
श्रुत्वा यः सुहृदां शास्त्रं मर्त्यो न प्रतिपद्यते ।
विपाकान्ते दहत्येनं किंपाकमिव भक्षितम् ॥ ३८४

मुख्यानमात्यानुत्सृज्य यो हि हीनान्निषेवते ।
स घोरामापदं प्राप्य नोत्तारमधिगच्छति ॥ ३८५
योऽसत्सेवी वृथाचारो न श्रोता सुहृदां सताम् ।
परान् वृणीते स्वान् द्वेष्टि तं गौस्त्यजति भारत ॥ ३८६
को हि शक्रसमाञ्ज्ञातीनतिक्रम्य महारथान् ।
अन्येभ्यस्त्राणमाशंसेत्त्वदन्यो भुवि मानवः ॥ ३८७
जन्मप्रभृति कौंतेया नित्यं विनिकृतास्त्वया ।
न च ते जातु कुप्यंति धर्मात्मानो हि पांडवाः ॥ ३८८
त्रिवर्गयुक्तः प्राज्ञानामारंभो भरतर्षभ ।
धर्मार्थावनुरुध्यंते त्रिवर्गासंभवे नराः ॥ ३८९
पृथक्च विनिविष्टाना धर्म धीरोऽनुरुध्यते ।
मध्यमोऽर्थ कलि बालः काममेवानुरुध्यते ॥ ३९०
कामार्थौ लिप्समानस्तु धर्ममेवादितश्चरेत् ।
नहि धर्मादपैत्यर्थः कामो वापि कदाचन ॥ ३९१
आत्मवान्नावमन्येत त्रिषु लोकेषु भारत ।
अप्यन्यं प्राकृत कंचित्किमु तान् पांडवर्षभान् ॥ ३९२
पांडवान् पृष्ठतः कृत्वा त्राणमाशंससेऽन्यतः ।
दुःशासने दुर्विषहे कर्णे चापि ससौबले ॥ ३९३
विक्रमे चाप्यपर्याप्ता पांडवान् प्रति भारत ।
नहीमे सर्वराजानः पर्याप्ताः सहितास्त्वया ॥ ३९४
अयं भीष्मस्तथा द्रोणः कर्णश्चायं तथा कृपः ।
भूरिश्रवाः सौमदत्तिरश्वत्थामा जयद्रथः ।
अशक्ता सर्व एवैते प्रतियोद्धुं धनञ्जयम् ॥ ३९५
मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमर्हति ।
युद्धे प्रतीपमायांतमपि साक्षात्पुरंदरः ॥ ३९६
पश्य पुत्रांस्तथा भ्रातॄञ्ज्ञातीन् संबंधिनस्तथा ।
त्वत्कृते न विनश्येयुरिमे भरतसत्तमाः ॥ ३९७
अस्तु शेषं कौरवाणां मा पराभूदिदं कुलम् ।
कुलघ्न इति नोच्येथा नष्टकीर्तिर्नराधिप ॥ ३९८
मा तात श्रियमायांतीमवमंस्थाः समुद्यताम् ।
अर्धं प्रदाय पार्थेभ्यो महतीं श्रियमाप्नुहि ॥ ३९९

अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
आसीनं भ्रातृभिः सार्धं राजभिः परिवारितम् ॥ ४००
दुर्योधन निबोधेदं शौरिणोक्तं महात्मना ।
आदत्स्व शिवमत्यंतं योगक्षेमवदव्ययम् ॥ ४०१
वासुदेवेन तीर्थेन तात गच्छस्व संशयम् ।
कालप्राप्तमिदं मन्ये मा त्वं दुर्योधनातिगाः ॥ ४०२
धृतराष्ट्रवचः श्रुत्वा भीष्मद्रोणौ समव्यथौ ।
दुर्योधनमिदं वाक्यमूचतुः शासनातिगम् ॥ ४०३
यावत्कृष्णावसन्नद्धो यावत्तिष्ठति गांडिवम् ।
यावद्धौम्यो न मेधाग्नौ जुहोतीह द्विषद्बलम् ॥ ४०४
यावन्न दृश्यते पार्थः स्वेष्वनीकेष्ववस्थितः ।
भीमसेनो महेष्वासस्तावच्छाम्यतु वैशसम् ॥ ४०५
दृष्ट्वा त्वा पांडवैर्वीरैर्भ्रातृभिः सह संगतम् ।
यावदानंदजाश्रूणि प्रमुचंतु नराधिपाः ॥ ४०६
श्रुत्वा दुर्योधनो वाक्यमप्रियं कुरुसंसदि ।
प्रत्युवाच महाबाहुं वासुदेवं यशस्विनम् ॥ ४०७
दु० उ०—प्रसमीक्ष्य भवानेतद्वक्तुमर्हति केशव ।
मामेव हि विशेषेण विभाष्य परिगर्हसे ॥ ४०८
भवान् क्षत्ता च राजा वाप्याचार्यो वा पितामहः ।
मामेव परिगर्हंते नान्यं कंचन पार्थिवम् ॥ ४०९
न चाहं लक्षये कंचिद्व्यभिचारमिहात्मनः ।
अथ सर्वे भवंतो मां विद्विषंति सराजकाः ॥ ४१०
प्रियाभ्युपगते द्यूते पांडवा मधुसूदन ।
जिताः शकुनिना राज्यं तत्र किं मम दुष्कृतम् ॥ ४११
अपराधो न चास्माकं यत्ते ह्यक्षे पराजिताः ।
अजेया जयतां श्रेष्ठ पार्थाः प्रव्राजिता वनम् ॥ ४१२
किमस्माभिः कृतं तेषां कस्मिन् वा पुनरागसि ।
धार्तराष्ट्रान् जिघांसंति पांडवाः सृंजयैः सह ॥ ४१३
न चापि वयमुग्रेण कर्मणा वचनेन वा ।
प्रभ्रष्टाः प्रणमामेह भयादपि शतक्रतुम् ॥ ४१४

न हि भीष्मकृपद्रोणाः सकर्णा मधुसूदन ।
देवैरपि युधा जेतुं शक्याः किमुत पांडवैः ॥ ४१५
स्वधर्ममनुपश्यंतो यदि माधव संयुगे ।
अस्त्रेण निधनं काले प्राप्स्यामः स्वर्ग्यमेव तत् ॥ ४१६
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कर्हिचित् ॥ ४१७
इति मातंगवचनं परीप्सति हितेप्सवः ।
एष धर्मः क्षत्रियाणां मतमेतच्च मे सदा ॥ ४१८
राज्यांशश्चाभ्यनुज्ञातो यो मे पित्रा पुराभवत् ।
न स लभ्यः पुनर्जातु मयि जीवति केशव ॥ ४१९
यावच्च राजा ध्रियते धृतराष्ट्रो जनार्दन ।
न्यस्तशस्त्रा वयं ते वाप्युपजीवाम माधव ॥ ४२०
यावद्धि तीक्ष्णया सूच्या विध्येदग्रेण केशव ।
तावदप्यपरित्याज्यं भूमेर्नः पांडवान् प्रति ॥ ४२१
ततः प्रशम्य दाशार्हः क्रोधपर्याकुलेक्षणः ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ ४२२
कृ० उ०—लप्स्यसे वीरशयनं काममेतदवाप्स्यसि ।
स्थिरोभव सहामात्यो विमर्दो भविता महान् ॥ ४२३
यच्चैवं मन्यसे मूढ न मे कश्चिद्व्यतिक्रमः ।
पांडवेष्विति तत्सर्वं निबोधत नराधिपाः ॥ ४२४
श्रिया संतप्यमानेन पांडवानां महात्मनाम् ।
त्वया दुर्मंत्रितं द्यूतं सौबलेन च भारत ॥ ४२५
अक्षद्यूतं महाप्राज्ञ सतां मतिविनाशनम् ।
असतां तत्र जायंते भेदाश्च व्यसनानि च ॥ ४२६
तदिदं व्यसनं घोरं त्वया द्यूतमुखं कृतम् ।
असमीक्ष्य सदाचारैः सार्धं पापानुबंधनैः ॥ ४२७
कश्चान्यो भ्रातृभार्यां वै विप्रकर्तुं तथार्हति ।
आनीय च सभां वक्तुं यथोक्ता द्रौपदी त्वया ॥ ४२८
जानंति कुरवः सर्वे यथोक्ताः कुरुसंसदि ।
दुःशासनेन कौंतेयाः प्रव्रजंतः परंतपाः ॥ ४२९

सह मात्रा प्रदग्धुं तान् बालकान् वारणावते ।
आस्थितः परमं यत्नं न समृद्धं च तत्तव ॥ ४३०
विषेण सर्पबन्धैश्च यतिताः पांडवास्त्वया ।
सर्वोपायैर्विनाशाय न समृद्धं च तत्तव ॥ ४३१
यच्चैभ्यो याचमानेभ्यः पित्र्यमंशं न दित्ससि ।
तच्च पाप प्रदातासि भ्रष्टैश्वर्यो निपातितः ॥ ४३२
मातापितृभ्यां भीष्मेण द्रोणेन विदुरेण च ।
शाम्येति मुहुरुक्तोऽसि न च शाम्यसि पार्थिव ॥ ४३३
न शर्म प्राप्स्यसे राजन्नुत्क्रम्य सुहृदां वचः ।
अधर्म्यमयशस्यं च क्रियते पार्थिव त्वया ॥ ४३४
एवं ब्रुवति दाशार्हे दुर्योधनममर्षणम् ।
दुःशासन इदं वाक्यमब्रवीत्कुरुसंसदि ॥ ४३५
न चेत्संधास्यसे राजन् स्वेन कामेन पांडवैः ।
बद्ध्वा किल त्वां दास्यन्ति कुन्तीपुत्राय कौरवाः ॥ ४३६
वैकर्तनं त्वां च मां च त्रीनेतान् मनुजर्षभ ।
पांडवेभ्यः प्रदास्यन्ति भीष्मो द्रोणः पिता च ते ॥ ४३७
भ्रातुरेतद्वचः श्रुत्वा धार्तराष्ट्रः सुयोधनः ।
क्रुद्धः प्रातिष्ठतोत्थाय महानाग इव श्वसन् ॥ ४३८
विदुरं धृतराष्ट्रं च महाराजं च बाह्लिकम् ।
कृपं च सोमदत्तं च भीष्मं द्रोणं जनार्दनम् ॥ ४३९
सर्वानेताननादृत्य दुर्मतिर्निरपत्रपः ।
अशिष्टवदमर्यादो मानी मान्यावमानिता ॥ ४४०
तं प्रस्थितमभिप्रेक्ष्य भ्रातरो मनुजर्षभम् ।
अनुजग्मुः सहामात्या राजानश्चापि सर्वशः ॥ ४४१

कृ० उ०—सर्वेषां कुरुवृद्धानां महानयमतिक्रमः ।
प्रसह्य मंदमैश्वर्ये न नियच्छत यन्नृपम् ॥ ४४२
तत्र कार्यमहं मन्ये कालप्राप्तमरिंदमाः ।
क्रियमाणे भवेच्छ्रेयस्तत्सर्वं शृणुतानघाः ॥ ४४३
उग्रसेनसुतः कंसः परित्यक्तः स बांधवैः ।
ज्ञातीनां हितकामेन मया शस्तो महामृधे ॥ ४४४

व्यूढे देवासुरे युद्धे हनिष्यंति परस्परम् ।
इति मत्वाब्रवीद्धर्मं परमेष्ठी प्रजापतिः ।
वरुणाय प्रयच्छैतान् बद्ध्वा दैतेयदानवान् ॥ ४४५
तान् बद्ध्वा धर्मपाशैश्च स्वैश्च पाशैर्जलेश्वरः ।
वरुणः सागरे यत्तो नित्यं रक्षति दानवान् ॥ ४४६
तथा दुर्योधनं कर्णं शकुनिं चापि सौबलम् ।
बद्ध्वा दुःशासनं चापि पाण्डवेभ्यः प्रयच्छत ॥ ४४७
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ४४८
राजन् दुर्योधनं बद्ध्वा ततः संशाम्य पांडवैः ।
त्वत्कृते न विनश्येयुः क्षत्रियाः क्षत्रियर्षभ ॥ ४४९
ततः सभाया निर्गम्य मंत्रयामास कौरव. ।
सौबलेन मताक्षेण राज्ञा शकुनिना सह ॥ ४५०
पुरोऽयमस्मान् गृह्णाति क्षिप्रकारी जनार्दनः ।
सहितो धृतराष्ट्रेण राज्ञा शांतनवेन च ॥ ४५१
वयमेव हृषीकेशं निगृह्णीम बलादिह ।
प्रसह्य पुरुषव्याघ्रमिंद्रो वैरोचनिं यथा ॥ ४५२
श्रुत्वा गृहीतं वार्ष्णेयं पांडवा हतचेतसः ।
निरुत्साहा भविष्यंति भग्नदंष्ट्रा इवोरगाः ॥ ४५३
तेषां पापमभिप्रायं पापानां दुष्टचेतसाम् ।
इंगितज्ञ. कविः क्षिप्रमन्वबुध्यत सात्यकि ॥ ४५४
तदर्थमभिनिष्क्रम्य हार्दिक्येन सहास्थितः ।
अब्रवीत्कृतवर्माणं क्षिप्रं योजय वाहिनीम् ॥ ४५५
व्यूढानीकः सभाद्वारमुपातिष्ठस्व दंशित· ।
यावदाख्याम्यहं चैतत्कृष्णायाक्लिष्टकारिणे ॥ ४५६
स प्रविश्य सभां वीरः सिंहो गिरिगुहामिव ।
आचष्ट तमभिप्रायं केशवाय महात्मने ॥ ४५७
धृतराष्ट्रं ततश्चैव विदुरं चान्वभाषत ।
पुरा विकुर्वते मूढाः पापात्मानः समागताः ॥ ४५८
इमं हि पुंडरीकाक्षं जिघृक्षंत्यल्पचेतसः ।
पटेनाग्निं प्रज्वलितं यथा बाला यथा जडाः ॥ ४५९

सात्यकेस्तद्वचः श्रुत्वा विदुरो दीर्घदर्शिवान् ।
धृतराष्ट्रं महाबाहुमब्रवीत्कुरुसंसदि ।
राजन् परीतकालास्ते पुत्राः सर्वे परंतप ॥ ४६०
विदुरेणैवमुक्ते तु केशवो वाक्यमब्रवीत् ।
धृतराष्ट्रमभिप्रेक्ष्य सुहृदां शृण्वतां मिथः ॥ ४६१
राजन्नेते यदि क्रुद्धा मा निगृह्णीयुरोजसा ।
एते वा मामहं वैताननुजानीहि पार्थिव ॥ ४६२
एतान् हि सर्वान् संरब्धान्नियंतुमहमुत्सहे ।
न त्वहं निंदितं कर्म कुर्यां पापं कथंचन ॥ ४६३
इदं तु न प्रवर्तेय निंदित कर्म भारत ।
सन्निधौ ते महाराज क्रोधजं पापबुद्धिजम् ॥ ४६४
एतच्छ्रुत्वा तु विदुरं धृतराष्ट्रोऽभ्यभाषत ।
क्षिप्रमानय तं पाप राजलुब्धं सुयोधनम् ॥ ४६५
ततो दुर्योधनं क्षत्ता पुनः प्रावेशयत्सभाम् ।
अकामं भ्रातृभिः सार्धं राजभिः परिवारितम् ॥ ४६६
अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
कर्णदुःशासनाभ्यां च राजभिश्चापि संवृतम् ॥ ४६७
नृशंस पापभूयिष्ठ क्षुद्रकर्मसहायवान् ।
पापैः सहायैः संवृत्य पापं कर्म चिकीर्षसि ॥ ४६८
त्वमिमं पुंडरीकाक्षमप्रधृष्यं दुरासदम् ।
पापैः सहायैः संहत्य निगृहीतुं किलेच्छसि ॥ ४६९
देवैर्मनुष्यैर्गन्धर्वैरसुरैरुरगैश्च यः ।
न सोढुं समरे शक्यस्तन्न बुध्यसि केशवम् ॥ ४७०
दुर्ग्राह्यः प्राणिना वायुर्दुःस्पर्शः प्राणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्ग्राह्यः केशवो बलात् ॥ ४७१
ततः सात्यकिमादाय पाणौ हार्दिक्यमेव च ।
ऋषिभिस्तैरनुज्ञातो निर्ययौ मधुसूदनः ॥ ४७२
तं प्रस्थितमभिप्रेक्ष्य कौरवाः सह राजभिः ।
अनुजग्मुर्नरव्याघ्रं देवा इव शतक्रतुम् ॥ ४७३
अचिंतयन्नमेयात्मा सर्वं तद्राजमंडलम् ।
निश्चक्राम ततः शौरिः सधूम इव पावकः ॥ ४७४

ततो रथेन लघुना महता मेघनादिना ।
सूपस्करेण शुभ्रेण वैयाघ्रेण वरूथिना ।
शैब्यसुग्रीवयुक्तेन प्रत्यदृश्यत दारुकः ॥ ४७५
तथैव रथमास्थाय कृतवर्मा महारथः ।
वृष्णीनां संमतो वीरो हार्दिक्यः समदृश्यत ॥ ४७६
उपस्थितरथं शौरिं प्रयास्यंतमरिंदमम् ।
धृतराष्ट्रो महाराजः पुनरेवाभ्यभाषत ॥ ४७७
यावद्बलं मे पुत्रेषु पश्यतस्ते जनार्दन ।
प्रत्यक्षं ते न ते किंचित्परोक्षं शत्रुकर्शन ॥ ४७८
कुरूणां शममिच्छंतं यतमानं च केशव ।
विदित्वैतामवस्थां मे नाभिशंकितुमर्हसि ॥ ४७९
न मे पापोऽस्त्यभिप्रायः पांडवान् प्रति केशव ।
जानंति कुरवः सर्वे राजानश्चैव पार्थिवाः ॥ ४८०
ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनार्दनः ।
द्रोणं पितामहं भीष्मं क्षत्तारं बाह्लिकं कृपम् ॥ ४८१
प्रत्यक्षमेतद्भवतां यद्वृत्तं कुरुसंसदि ।
यथा चाशिष्टवन्मंदो रोषादद्य समुत्थितः ॥ ४८२
वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः ।
आपृच्छे भवतः सर्वान् गमिष्यामि युधिष्ठिरम् ॥ ४८३
ततो रथेन शुभ्रेण महता किंकिणीकिना ।
कुरूणां पश्यतां द्रष्टुं स्वसारं स्वपितुर्ययौ ॥ ४८४

---

## ८

प्रविश्याथ गृहं तस्याश्चरणावभिवाद्य च ।
आचख्यौ तत्समासेन यद्वृत्तं कुरुसंसदि ॥ ४८५
कृ० उ०—उक्तं बहुविधं वाक्यं ग्रहणीयं सहेतुकम् ।
ऋषिभिश्चैव च मया न चासौ तद्गृहीतवान् ॥ ४८६
कालपक्वमिदं सर्वं सुयोधनवशानुगम् ।
आपृच्छे भवतीं शीघ्रं प्रयास्ये पांडवान् प्रति । ४८७
किं वाच्याः पांडवेयास्ते भवत्या वचनान्मया ।
तद्ब्रूहि त्वं महाप्राज्ञे शुश्रूषे वचनं तव ॥ ४८८

कुं० उ०—ब्रूयाः केशव राजानं धर्मात्मानं युधिष्ठिरम् ।
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ॥ ४८९
श्रोत्रियस्येव ते राजन् मंदकस्याविपश्चितः ।
अनुवाकहता बुद्धिर्धर्ममेवैकमीक्षते ॥ ४९०
बाहुभ्यां क्षत्रियाः सृष्टा बाहुवीर्योपजीविनः ।
क्रूराय कर्मणे नित्यं प्रजानां परिपालने ॥ ४९१
यदि धर्म चरंतीह प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा विंदेत भारत ॥ ४९२
दंडनीत्यां यदा राजा सम्यक् कार्त्स्न्येन वर्तते ।
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते ॥ ४९३
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो माभूद्राजा कालस्य कारणम् ॥ ४९४
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥ ४९५
राजधर्मानवेक्षस्व पितृपैतामहोचितान् ।
नैतद्राजर्षिवृत्तं हि यत्र त्वं स्थातुमिच्छसि ॥ ४९६
पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर ।
साम्ना भेदेन दानेन दंडेनाथ नयेन वा ॥ ४९७
इतो दुःखतरं किं नु यदहं हीनबांधवा ।
परपिंडमुदीक्षे वै त्वां सूत्वा मित्रनंदनम् ॥ ४९८
युध्यस्व राजधर्मेण मा निमज्जीः पितामहान् ।
मा गमः क्षीणपुण्यस्त्वं सानुजः पापिकां गतिम् ॥ ४९९
अत्राप्युदाहरंतीममितिहासं पुरातनम् ।
विदुलायाश्च संवादं पुत्रस्य च परंतप ॥ ५००
विदुला नाम राजन्या जगर्हे पुत्रमौरसम् ।
निर्जितं सिंधुराजेन शयानं दीनचेतसम् ॥ ५०१
वि० उ०—अनंदन मया जात द्विषतां हर्षवर्धन ।
न मया त्वं न पित्रा च जातः क्वाभ्यागतो ह्यसि ॥ ५०२
निर्मन्युश्चाप्यसंख्येयः पुरुषः क्लीबसाधनः ।
यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ॥ ५०३

मात्मानमवमन्यस्व मैनमल्पेन बीभरः ।
मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर ॥ ५०४
उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ।
अमित्रान्नंदयन् सर्वान्निर्मानो बंधुशोकदः ॥ ५०५
सुपूरा वै कुनदिका सुपूरो मूषिकांजलिः ।
सुसंतोषः कापुरुषः स्वल्पकेनैव तृप्यति ॥ ५०६
अप्यहेरारुजन् दंष्ट्रां मा श्वेव निधनं व्रज ।
अपि वा संशयं प्राप्य जीवितेऽपि पराक्रमेः ॥ ५०७
मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ।
मा ह स्म कस्यचिद्गेहे जनि राज्ञः खरो मृदुः ॥ ५०८
उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ।
धर्मं पुत्राग्रतः कृत्वा किंनिमित्तं हि जीवसि ॥ ५०९
यस्य वृत्तं न जल्पंति मानवा महदद्भुतम् ।
राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ॥ ५१०
श्रुतेन तपसा वापि श्रिया वा विक्रमेण वा ।
जनान् योऽभिभवत्यन्यान् कर्मणा हि स वै पुमान् ॥ ५११
नत्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।
नृशंस्यामयशस्यां च दुःखां कापुरुषोचिताम् ॥ ५१२
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम् ।
परं विषहते यस्मात्तस्मात्पुरुष उच्यते ॥ ५१३
पुत्र० उ०—किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ।
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ॥ ५१४
वि० उ०—भृत्यैर्विहीयमानानां परपिंडोपजीविनाम् ।
कृपणानामसत्वानां मा वृत्तिमनुवर्तिथाः ॥ ५१५
पतिपुत्रवधादेतत्परमं दुःखमब्रवीत् ।
दारिद्र्यमिति यत्प्रोक्तं पर्यायमरणं हि तत् ॥ ५१६
यदा मां चैव भार्यां च द्रष्टासि भृशदुर्बलाम् ।
न तदा जीवितेनार्थो भविता तव संजय ॥ ५१७
कुं० उ०—सदश्व इव संक्षिप्तः प्रणुन्नो वाक्यसायकैः ।
तच्चकार तथा सर्वं यथावदनुशासनम् ॥ ५१८

इदमुद्धर्षणं भीमं तेजोवर्धनमुत्तमम् ।
राजानं श्रावयेन्मंत्री सीदंतं शत्रुपीडितम् ॥ ५१९
एतद्धनंजयो वाच्यो नित्योद्युक्तो वृकोदरः ।
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ॥ ५२०
सर्वधर्मविशेषज्ञां स्नुषां पाण्डोर्महात्मनः ।
ब्रूया माधव कल्याणीं कृष्ण कृष्णां यशस्विनीम् ॥ ५२१
युक्तमेतन्महाभागे कुले जाते यशस्विनि ।
यन्मे पुत्रेषु सर्वेषु यथावत्त्वमवर्तिथाः ॥ ५२२
माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतावुभौ ।
विक्रमेणार्जितान्भोगान् वृणीतं जीवितादपि ॥ ५२३
यच्च वः प्रेक्षमाणानां सर्वधर्मोपचायिनाम् ।
पांचाली परुषाण्युक्ता को नु तत्क्षंतुमर्हति ॥ ५२४
न राज्यहरणं दुःखं द्यूते चापि पराजयः ।
प्रव्राजनं सुताना च न मे तद्दुःखकारणम् ॥ ५२५
यत्र सा बृहती श्यामा सभायां रुदती तदा ।
अश्रोषीत्परुषा वाचस्तन्मे दुःखतरं महत् ॥ ५२६
स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।
नाध्यगच्छत्तदा नाथ कृष्णा नाथवती सती ॥ ५२७
पाडवान् कुशलान् पृच्छेः सपुत्रान् कृष्णया सह ।
मां च कुशलिनीं ब्रूयास्तेषु भूयो जनार्दन ।
अरिष्टं गच्छ पंथानं पुत्रान् मे प्रतिपालय ॥ ५२८
अभिवाद्याथ तां कृष्णः कृत्वा चापि प्रदक्षिणम् ।
निश्चक्राम महाबाहुः सिंहखेलगतिस्ततः ॥ ५२९

---

## ९

कुं० उ०—धिगस्त्वर्थं यत्कृतेऽयं महान् ज्ञातिवध कृतः ।
वर्त्स्यते सुहृदां चैव युद्धेऽस्मिन्वै पराभवः ॥ ५३०
योऽसौ कानीनगर्भो मे पुत्रवत्परिरक्षितः ।
कस्मान्न कुर्याद्वचनं पथ्यं भ्रातृहितं तथा ॥ ५३१
इति कुंती विनिश्चित्य कार्यनिश्चयमुत्तमम् ।
कार्यार्थमभिनिश्चित्य ययौ भागीरथीं प्रति ॥ ५३२

आत्मजस्य ततस्तस्य घृणिनः सत्यसंगिनः ।
गंगातीरे पृथाश्रौषीद्वेदाध्ययननिस्वनम् ॥ ५३३
आपृष्ठतापाज्जप्त्वा स परिवृत्य यतव्रतः ।
दृष्ट्वा कुंतीमुपातिष्ठदभिवाद्य कृतांजलिः ॥ ५३४
क० उ०—राधेयोऽहमाधिरथिः कर्णस्त्वामभिवादये ।
प्राप्ता किमर्थं भवती ब्रूहि किं करवाणि ते ॥ ५३५
कुं० उ०—कौंतेयस्त्वं न राधेयो न तवाधिरथः पिता ।
नासि सूतकुले जातः कर्ण तद्विद्धि मे वचः ॥ ५३६
कानीनस्त्वं मया जातः पूर्वजः कुक्षिणा धृतः ॥ ५३७
प्रकाशकर्मा तपनो योऽयं देवो विरोचनः ।
अजीजनत्त्वा मय्येष कर्ण शस्त्रभृतां वरम् ॥ ५३८
स त्वं भ्रातॄनसंबुध्य मोहाद्यदुपसेवसे ।
धार्तराष्ट्रान्न तद्युक्तं त्वयि पुत्र विशेषतः ॥ ५३९
अर्जुनेनार्जितां पूर्वं हृता लोभादसाधुभिः ।
आच्छिद्य धार्तराष्ट्रेभ्यो भुंक्ष्व यौधिष्ठिरीं श्रियम् ॥ ५४०
अद्य पश्यंतु कुरवः कर्णार्जुनसमागमम् ।
सौभ्रात्रेण समालक्ष्य संनमतामसाधवः ॥ ५४१
कर्ण उ०—न चैतच्छ्रद्दधे वाक्यं क्षत्रिये भाषितं त्वया ।
धर्मद्वारं ममैतत्स्यान्नियोगकरणं तव ॥ ५४२
अकरोन्मयि यत्पापं भवती सुमहात्ययम् ।
अपाकीर्णोऽस्मि यन्मातस्तद्यशःकीर्तिनाशनम् ॥ ५४३
क्रियाकाले त्वनुक्रोशमकृत्वा त्वमिमं मम ।
हीनसंस्कारसमयमद्य मां समचूचुदः ॥ ५४४
न वै मम हितं पूर्वं मातृवच्चेष्टितं त्वया ।
सा मां संबोधयस्यद्य केवलात्महितैषिणी ॥ ५४५
अभ्राता विदितः पूर्वं युद्धकाले प्रकाशितः ।
पांडवान् यदि गच्छामि किं मां क्षत्रं वदिष्यति ॥ ५४६
उपनह्य परैर्वैरं ये मां नित्यमुपासते ।
नमस्कुर्वन्ति च सदा वसवो वासवं यथा ॥ ५४७
मम प्राणेन ये शत्रूञ्शक्ताः प्रतिसमासितुम् ।
मन्यंते तत्कथं तेषामहं छिंद्यां मनोरथम् ॥ ५४८

अनवेक्ष्य कृतं पापा विकुर्वन्त्यनवस्थिताः ।
राजकिल्बिषिणां तेषां भर्तृपिंडापहारिणाम् ।
नैवाय न परो लोको विद्यते पापकर्मणाम् ॥ ५४९
आनृशस्यमथो वृत्त रक्षन् सत्पुरुषोचितम् ।
अतोऽर्थकरमप्येतन्न करोम्यद्य ते वचः ॥ ५५०
अर्जुनं हि निहत्याजौ संप्राप्तं स्यात्फलं मया ।
यशसा चापि युज्येयं निहतः सव्यसाचिना ॥ ५५१
न ते जातु न शिष्यन्ति पुत्रा. पंच यशस्विनि ।
निरर्जुना सकर्णा वा सार्जुना वा हते मयि ॥ ५५२
इति कर्णवचः श्रुत्वा कुंती दुःखात्प्रवेपती ।
उवाच पुत्रमाश्लिष्य कर्णं धैर्यादकंपनम् ॥ ५५३
एवं वै भाव्यमेतेन क्षयं यास्यंति कौरवाः ।
यथा त्वं भाषसे कर्ण दैवं तु बलवत्तरम् ॥ ५५४
त्वया चतुर्णां भ्रातॄणामभयं शत्रुकर्शन ।
दत्तं तत्प्रतिजानीहि संगरप्रतिमोचनम् ॥ ५५५
अनामयं स्वस्ति चेति पृथाथो कर्णमब्रवीत् ।
तां कर्णोऽथ तथेत्युक्त्वा ततस्तौ जग्मतुः पृथक् ॥ ५५६

---

## १०

व्युष्टायां च रजन्यां हि राजा दुर्योधनस्ततः ।
व्यभजत्तान्यनीकानि दश चैकं च भारत ॥ ५५७
नरहास्तिरथाश्वानां सारं मध्यं च फल्गु च ।
सर्वेष्वेतेष्वनीकेषु संदिदेश नराधिपः ॥ ५५८
सानुकर्षाः सतूणीरा. सवरूथाः सतोमराः ।
सोपासंगाः सशक्तीकाः सनिषंगाः सहर्ष्टयः ॥ ५५९
सध्वजाःसपताकाश्च सशरासनतोमराः ।
रज्जुभिश्च विचित्राभिः सपाशाः सपरिच्छदाः ॥ ५६०
सकचग्रहविक्षेपाः सतैलगुडवालुकाः ।
साशीविषघटा सर्वे ससर्जरसपांसवः ॥ ५६१
सकीलकवचाः सर्वे वास्यवृक्षादनान्विता' ।
व्याघ्रचर्मपरीवारा द्वीपिचर्मावृताश्च ते ॥ ५६२

चतुर्युजो रथाः सर्वे सर्वे चोत्तमवाजिनः ।
धुर्ययोर्हययोरेकस्तथान्यौ पार्ष्णिसारथी ॥ ५६३

नगराणीव गुप्तानि दुराधर्षाणि शत्रुभिः ।
आसन्नथ सहस्राणि हेममालीनि सर्वश. ॥ ५६४

यथा रथास्तथा नागा बद्धकक्षाः स्वलङ्कृताः ।
बभूवुः सप्तपुरुषा रत्नवत इवाद्रयः ॥ ५६५

द्वावङ्कुशधरौ तत्र द्वावुत्तमधनर्धरौ ।
द्वौ वरासिधरौ राजन्नेकः शक्तिपिनाकधृक ॥ ५६६

आमुक्तकवचैर्युक्तैः सपताकैः स्वलङ्कृतैः ।
सादिभिश्चोपपन्नास्तु तथा चायुतशो हयाः ॥ ५६७

नानारूपविकाराश्च नानाकवचशस्त्रिणः ।
पदातिनो नरास्तत्र बभूवुर्हेममालिनः ॥ ५६८

रथस्यासन् दश गजा गजस्य दश वाजिनः ।
नरा दश हयस्यासन् पादरक्षाः समन्ततः ॥ ५६९

रथस्य नागाः पञ्चाशन्नागस्यासन् शतं हयाः ।
हयस्य पुरुषाः सप्त भिन्नसन्धानकारिणः ॥ ५७०

सेना पञ्चशतं नागा रथास्तावन्त एव च ।
दश सेना च पृतना पृतना दश वाहिनी ॥ ५७१

सेना च वाहिनी चैव पृतना ध्वजिनी चमूः ।
अक्षौहिणीति पर्यायैर्निरुक्ता च वरूथिनी ॥ ५७२

एवं व्यूढान्यनीकानि कौरव्येण धीमता ।
अक्षौहिण्यो दशैका च संख्याताः सप्त चैव ह ॥ ५७३

नराणां पंचपचाशदेषा पत्तिर्विधीयते ।
सेनामुखं च तिस्रस्ता गुल्म इत्यभिशब्दितम् ॥ ५७४

त्रयो गुल्मा गणस्त्वासीद्गणास्त्वयुतशोऽभवन् ।
दुर्योधनस्य सेनासु योत्स्यमानाः प्रहारिणः ॥ ५७५

तत्र दुर्योधनो राजा शूरान् बुद्धिमतो नरान् ।
प्रसमीक्ष्य महाबाहुश्चक्रे सेनापतींस्तदा ॥ ५७६

कृपं द्रोणं च शल्यं च सैंधवं च जयद्रथम् ।
सुदक्षिणं च कांबोजं कृतवर्माणमेव च ॥ ५७७

द्रोणपुत्रं च कर्णं च भूरिश्रवसमेव च ।
शकुनिं सौबलं चैव बाह्लिकं च महाबलम् ॥ ५७८
दिवसे दिवसे तेषां प्रतिवेलं च भारत ।
चक्रे स विविधाः पूजाः प्रत्यक्षं च पुनः पुनः ॥ ५७९
ततः शांतनवं भीष्मं प्रांजलिर्धृतराष्ट्रजः ।
सह सर्वैर्महीपालैरिदं वचनमब्रवीत् ॥ ५८०
ऋते सेनाप्रणेतारं पृतना सुमहत्यपि ।
दीर्यते युद्धमासाद्य पिपीलिकपुटं यथा ॥ ५८१
न हि जातु द्वयोर्बुद्धिः समा भवति कर्हिचित् ।
शौर्यं च बलनेतॄणां स्पर्धते च परस्परम् ॥ ५८२
भवानुशनसा तुल्यो हितैषी च सदा मम ।
असहार्यः स्थितो धर्मे स नः सेनापतिर्भव ॥ ५८३
भी० उ०—एवमेतन्महाबाहो यथा वदसि भारत ।
यथैव हि भवंतो मे तथैव मम पाडवाः ॥ ५८४
अपि चैव मया श्रेयो वाच्यं तेषां नराधिप ।
संयोद्धव्यं तवार्थाय यथा मे समयः कृतः ॥ ५८५
न त्वेवोत्सादनीया मे पाडोः पुत्रा जनाधिप ।
तस्माद्योधान् हनिष्यामि प्रयोगेणायुतं सदा ॥ ५८६
एवमेषां करिष्यामि निधनं कुरुनंदन ।
न चेत्ते मां हनिष्यंति पूर्वमेव समागमे ॥ ५८७
ततः सेनापतिं चक्रे विधिवद्भूरिदक्षिणम् ।
धृतराष्ट्रात्मजो भीष्मं सोऽभिषिक्तो व्यरोचयत् ॥ ५८८
ततो भेरीश्च शंखाश्च शतशोऽथ सहस्रशः ।
वादयामासुरव्यग्रा वादका राजशासनात् ॥ ५८९

---

## ११

ततोद्रुपदमानाय्य विराटं शिबिपुंगवम् ।
धृष्टद्युम्नं च पांचाल्यं धृष्टकेतुं च पार्थिवम् ॥ ५९०
शिखंडिनं च पांचाल्यं सहदेवं च मागधम् ।
एतान् सप्त महाभागान् वीरान् युद्धाभिकांक्षिणः ॥ ५९१

सेनाप्रणेतॄन् विधिवदभ्यषिंचद्युधिष्ठिरः ।
सर्वसेनापतिं चात्र धृष्टद्युम्नं चकार ह ॥ ५९२
सर्वेषामेव तेषांतु समस्ताना महात्मनाम् ।
सेनापतिपतिं चक्रे गुडाकेशं धनंजयम् ॥ ५९३
अर्जुनस्यापि नेता च संयंता चैव वाजिनाम् ।
संकर्षणानुजः श्रीमान् महाबुद्धिर्जनार्दनः ॥ ५९४
द्वावेव तु महाराज तस्माद्युद्धादपेयतुः ।
रोहिणेयश्च वार्ष्णेयो रुक्मी च वसुधाधिपः ॥ ५९५
हिरण्वत्या निविष्टेषु पांडवेषु महात्मसु ।
न्यविशंत महाराज कौरवेया यथाविधि ॥ ५९६
तत्र दुर्योधनो राजा निवेश्य बलमोजसा ।
सममानयन् नृपतीन्न्यस्य गुल्मास्तथैव च ॥ ५९७
तत. प्रभाते विमले धार्तराष्ट्रेण चोदिता. ।
दुर्योधनेन राजानः प्रययुः पाडवान् प्रति ॥ ५९८
आप्लाव्य शुचयः सर्वे स्रग्विणः शुक्लवाससः ।
गृहीतशस्त्रा ध्वजिन. स्वस्ति वाच्य हुताग्नयः ॥ ५९९
सर्वे ब्रह्मविदः शूराः सव सुचरितव्रताः ।
सर्वे कामकृतश्चैव सर्वेचाहवलक्षणा. ॥ ६००
ते समेत्य यथान्यायं धार्तराष्ट्रा महाबला. ।
कुरुक्षेत्रस्य पश्चार्धे व्यवातिष्ठत दंशिताः ॥ ६०१
दुर्योधनस्तु शिबिर कारयामास भारत ।
यथैव हास्तिनपुरं द्वितीयं समलंकृतम् ॥ ६०२
तादृशान्येव दुर्गाणि राज्ञामपि महीपतिः ।
कारयामास कौरव्यः शतशोऽथ सहस्रशः ॥ ६०३
पंचयोजनमुत्सृज्य मंडलं तद्रणाजिरम् ।
सेनानिवेशास्ते राजन्नाविशञ्छतसंघशः ॥ ६०४
तेषा दुर्योधनो राजा ससैन्यानां महात्मनाम् ।
व्यादिदेश सबाह्याना भक्ष्यभोज्यमनुत्तमम् ॥ ६०५
सनागाश्वमनुष्याणां ये च शिल्पोपजीविनः ।
ये चान्येऽनुगतास्तत्र सूतमागधबादिनः ॥ ६०६

वणिजो गणिकाश्चारा ये चैव प्रेक्षका जनाः ।
सर्वास्तान् कौरवो राजा विधिवत्प्रत्यवेक्षत ॥ ६०७
तथैव राजा कौंतेयो धर्मपुत्रो युधिष्ठिरः ।
धृष्टद्युम्नमुखान् वीरांश्चोदयामास भारत ॥ ६०८
अथ सैन्यं यथायोगं पूजयित्वा नरर्षभ ।
दिदेश तान्यनीकानि प्रयाणाय महीपतिः ॥ ६०९
अभिमन्युं बृहंतं च द्रौपदेयाश्च सर्वशः ।
धृष्टद्युम्नमुखानेतान् प्राहिणोत्पाडुनंदनः ॥ ६१०
भीमं च युयुधानं च पाडवं च धनंजयम् ।
द्वितीयं प्रेषयामास बलस्कंध युधिष्ठिरः ॥ ६११
स्वयमेव ततः पश्चाद्विराटद्रुपदान्वितः ।
अथापरैर्महीपालैः सह प्रायान्महीपतिः ॥ ६१२
फल्गु सर्वं कलत्रं यत्किंच कृशदुर्बलम् ।
कोशसंचयवाहाश्च कोष्ठागारं तथैव च ॥ ६१३
गजानीकेन संगृह्य शनैः प्रायाद्युधिष्ठिरः ।
समन्वयात्सत्यधृतिः सौचित्तिर्युद्धदुर्मदः ॥ ६१४
तत्र भेरीसहस्राणि शंखानामयुतानि च ।
न्यवादयंत संहृष्टाः सहस्रायुतशो नराः ॥ ६१५

इति श्रीसंक्षिप्तमहाभारते उद्योगपर्व समाप्तम् । श्लो स ६१५.



# ६ भीष्मपर्व.

## १

वै० उ०—अथ गावल्गणिर्विद्वान् संयुगादेत्य भारत ।
प्रत्यक्षदर्शी सर्वस्य भूतभव्यभविष्यवित् ॥ १
ध्यायते धृतराष्ट्राय सहसोत्पत्य दुःखितः ।
आचष्ट निहतं भीष्मं भारतानां पितामहम् ॥ २
सं० उ०—हतो भीष्मः शांतनवो भरतानां पितामहः ।
ककुदं सर्वयोधानां धाम सर्वधनुष्मताम् ।
शरतल्पगतः सोद्य शेते कुरुपितामहः । ३
यस्य वीर्यं समाश्रित्य द्यूतं पुत्रस्तवाकरोत् ।
स शेते निहतो राजन् संख्ये भीष्मः शिखंडिना ॥ ४
यः स शक्र इवाक्षोभ्यो वर्षन् बाणान् सहस्रशः ।
जघान युधि योधानामर्बुदं दशभिर्दिनैः ॥ ५
स शेते निहतो भूमौ वातभग्न इव द्रुमः ।
तव दुर्मन्त्रिते राजन् यथा नार्हः स भारत ॥ ६
धृ० उ०—कथं कुरूणामृषभो हतो भीष्मः शिखंडिना ।
कथमासंश्च मे पुत्रा हीना भीष्मेण संजय ॥ ७
आर्तिं परामाविशति मनः संश्रुत्य मे हतम् ।
कुरूणामृषभं वीरमकंपं पुरुषर्षभम् ॥ ८
कथं वातिरथस्थेन पाचाल्येन शिखंडिना ।
भीष्मो विनिहतो युद्धे देवैरपि दुरासदः ॥ ९
अश्मसारमयं नून हृदयं सुदृढं मम ।
यच्छ्रुत्वा पुरुषव्याघ्रं हतं भीष्मं न दीर्यते ॥ १०
तस्मिन् सत्यं च मेधा च नीतिश्च भरतर्षभे ।
अप्रमेयाणि दुर्धर्षे कथं स निहतो युधि ॥ ११
धर्माद्धर्मो बलवान् संप्राप्त इति मे मतिः ।
यत्र वृद्धं गुरुं हत्वा राज्यमिच्छन्ति पांडवाः ॥ १२
योषेव हतवीरा मे सेना पुत्रस्य संजय ।

अगोपमिव चोद्भ्रांतं गोकुलं तद्बलं मम ॥ १३
अगाधसलिले मग्ना नावं दृष्ट्वैव पारगाः ।
भीष्मे हते भृश दुःखान्मन्ये शोचंति पुत्रकाः ॥ १४
यद्वृत्तं तत्र संग्रामे मंदस्याबुद्धिसंभवम् ।
अपनीतं सुनीतं यत्तन्ममाचक्ष्व संजय ॥ १५
यत्कृतं तत्र संग्रामे भीष्मेण जयमिच्छता ।
तेजोयुक्त कृतास्त्रेण शंस तच्चाप्यशेषत· ॥ १६
सं० उ०—प्रत्यक्ष यन्मया दृष्टं दृष्टं योगबलेन च ।
शृणु तत्पृथिवीपाल मा च शोके मनः कृथाः ॥ १७
दिष्टमेतत्पुरा ननमिदमेव नराधिप ॥ १८
नमस्कृत्वा पितुस्तेऽह पाराशर्याय धीमते ।
यस्य प्रसादाद्दिव्य तत्प्राप्तं ज्ञानमनुत्तमम् ॥ १९
दृष्टिश्चातींद्रिया राजन् दूराच्छ्रवणमेव च ।
परचित्तस्य विज्ञानमतीतानागतस्य च ॥ २०
शृणु मे विस्तरेणेदं विचित्रं परमाद्भुतम् ।
भरतानामभूद्युद्धं यथा तल्लोमहर्षणम् ॥ २१
तेष्वनीकेषु यत्तेषु व्यूढेषु च विधानतः ।
दुर्योधनो महाराज दुःशासनमथाब्रवीत् ॥ २२
दुःशासन रथास्तूर्णं युज्यंतां भीष्मरक्षिणः ।
अनीकानि च सर्वाणि शीघ्र त्वमनुचोदय ॥ २३
अय स मामभिप्राप्तो वर्षपूगाभिचिंतितः ।
पांडवानां ससैन्याना कुरूणां च समागम· ॥ २४
नातः कार्यतमं मन्ये रणे भीष्मस्य रक्षणात् ।
हन्याद्गुप्तो ह्यसौ पार्थान् सोमकांश्च ससृंजयान् ॥ २५
अब्रवीच्च विशुद्धात्मा नाह हन्यां शिखंडिनम् ।
श्रूयते स्त्री ह्यसौ पूर्व तस्माद्वर्ज्यो रणे मम ॥ २६
तस्माद्भीष्मो रक्षितव्यो विशेषेणेति मे मतिः ।
शिखंडिनो वधे यत्ताः सर्वे तिष्ठंतु मामकाः ॥ २७
ततो रजन्यां व्युष्टायां स शब्दः समभून्महान् ।
क्रोशतां भूमिपालानां युज्यतां युज्यतामिति ॥ २८

शंखदुदुंभिघोषैश्च सिंहनादैश्च भारत ।
हयहेषितनादैश्च रथनेमिस्वनैस्तथा ॥ २९
गजानां बृंहतां चैव योधानां चापि गर्जताम् ।
क्ष्वेलितास्फोटितोत्क्रुष्टैस्तुमुलं सर्वतोऽभवत् ॥ ३०
ततः प्रकाशे सैन्यानि समदृश्यंत भारत ।
त्वदीयानां परेषां च शस्त्रवंति महांति च ॥ ३१
मघाविषयगः सोमस्तद्दिनं प्रत्यपद्यत ।
दीप्यमानाश्च संपेतुर्दिवि सप्त महाग्रहाः ॥ ३२
द्विधाभूत इवादित्य उदये प्रत्यदृश्यत ।
ज्वलंत्या शिखया भूयो भानुमानुदितो रविः ॥ ३३
सर्वधर्मविशेषज्ञः पिता देवव्रतस्तव ।
समानीय महीपालानिदं वचनमब्रवीत् ॥ ३४
इदं वः क्षत्रिया द्वारं स्वर्गायापावृतं महत् ।
गच्छध्वं तेन शक्रस्य ब्रह्मण. सहलोकताम् ॥ ३५
एष वः शाश्वतः पथा. पूर्वैः पूर्वतरैः कृतः ।
संभावयध्वमात्मानमव्यग्रमनसो युधि ॥ ३६
अधर्मः क्षत्रियस्यैष यद्व्याधिमरणं गृहे ।
यदाजौ निधनं याति सोऽस्य धर्मः सनातनः ॥ ३७
एवमुक्ता महीपाला भीष्मेण भरतर्षभ ।
निर्ययुः स्वान्यनीकानि शोभयंतो रथोत्तमैः ॥ ३८
ततो मुहूर्तात्तुमुलः शब्दो हृदयकंपनः ।
अश्रूयत महाराज योधाना प्रयुयुत्सताम् ॥ ३९
शंखदुदुंभिघोषैश्च वारणाना च बृंहितैः ।
नेमिघोषै रथानां च दीर्यतीव वसुंधरा ॥ ४०
हयानां ह्रेषमाणानां योधानां चैव गर्जताम् ।
क्षणेनैव नभो भूमिः शब्देनापूरितं तदा ॥ ४१
पुत्राणां तव दुर्धर्ष पाडवानां तथैव च ।
समकंपत सैन्यानि परस्परसमागमे ॥ ४२
धार्तराष्ट्रान्यनीकानि दृष्ट्वा व्यूढानि पाडवः ।
अभ्यभाषत धर्मात्मा धर्मराजो धनजयम् ॥ ४३

महर्षेर्वचनात्तात वेदयंति बृहस्पतेः ।
सहतान् योधयेदल्पान् कामं विस्तारयेद्बहून् ॥ ४४
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ।
अस्माकं च तथा सैन्यमल्पीयः सुतरां परैः ॥ ४५
अर्जु० उ०—एष व्यूहामि ते व्यूहं राजसत्तम दुर्जयम् ।
अचलं नाम वज्राख्यं विहितं वज्रपाणिना ॥ ४६
यः स वात इवोद्धूतः समरे दुःसहः परैः ।
स नः पुरो योत्स्यते वै भीमः प्रहरतां वरः ॥ ४७
न हि सोऽस्ति पुमाँल्लोके यः संक्रुद्धं वृकोदरम् ।
द्रष्टुमत्युग्रकर्माणं विषहेत नरर्षभम् ॥ ४८
अथ सज्जीयमानेषु सैन्येषु भरतर्षभ ।
निष्प्रभोऽभ्युदयौ सूर्यः सघोषं भूश्चचाल च ।
प्रादुरासीद्रजस्तीव्रं न प्राज्ञायत किंचन ॥ ४९
पश्चान्मुखाः कुरवो धार्तराष्ट्राः स्थिताः पार्थाः प्राङ्मुखा योत्स्यमानाः ।
चक्रे वायुः पृष्ठतः पांडवानां धार्तराष्ट्रान् श्वापदा व्याहरंति ॥ ५०
भीष्मोऽग्रतः सर्वसैन्यस्य वृद्धः श्वेतच्छत्रः श्वेतधनुः सखड्गः ।
श्वेतोष्णीषः पांडुरेण ध्वजेन श्वेतैरश्वैः श्वेतशैलप्रकाशैः ॥ ५१
सहस्रसूर्यः शतकिंकिणीकः परार्ध्यजांबूनदहेमचित्रः ।
रथोऽर्जुनस्याग्निरिवार्चिमाली विभ्राजते श्वेतहयः सुचक्रः ॥ ५२
तमास्थितः केशवसंगृहीतं कपिध्वजो गांडिवबाणपाणिः ।
धनुर्धरो यस्य समः पृथिव्यां न विद्यते नो भविता कदाचित् ॥ ५३

---

२

ततो धनंजयं दृष्ट्वा बाणगांडिवधारिणम् ।
पुनरेव महानादं व्यसृजंत महारथाः ॥ ५४
पांडवाः सृंजयाश्चैव ये चैषामनुयायिनः ।
दध्मुश्च मुदिताः शंखान् वीराः सागरसंभवान् ॥ ५५
ततो युधिष्ठिरो दृष्ट्वा युद्धाय सुसमुद्यते ।
ते सेने सागरप्रख्ये मुहुः प्रचलिते नृप ॥ ५६
विमुच्य कवचं वीरो निक्षिप्य च वरायुधम् ।
अवरुह्य रथात्तूर्णं पद्भ्यामेव कृतांजलिः ॥ ५७

पितामहमभिप्रेक्ष्य धर्मराजो युधिष्ठिरः ।
वाग्यतः प्रययौ येन प्राङ्मुखो रिपुवाहिनीम् ॥ ५८
तं प्रयातमभिप्रेक्ष्य कुंतीपुत्रो धनंजयः ।
अवतीर्य रथात्तूर्णं भ्रातृभिः सहितोऽभ्यगात् ॥ ५९
क्व गमिष्यसि राजेन्द्र निक्षिप्तकवचायुधः ।
दंशितेष्वरिसैन्येषु भ्रातॄनुत्सृज्य पार्थिव ॥ ६०
एवमाभाष्यमाणोऽपि भ्रातृभिः कुरुनंदन ।
नोऽवाच वाग्यतः किंचिद्गच्छत्येव युधिष्ठिरः । ६१
दृष्ट्वा युधिष्ठिरं वीरा धार्तराष्ट्रस्य सैनिकाः ।
मिथः संकथयांचक्रुरेषो कुलपांसन ॥ ६२
व्यक्तं भीत इवाभ्येति राजासौ भीष्ममतिकम् ।
युधिष्ठिरः ससोदर्यः शरणार्थं प्रयाचकः ॥ ६३
सोऽवगाह्य चमूं शत्रोः शरशक्तिसमाकुलाम् ।
भीष्ममेवाभ्ययात्तूर्णं भ्रातृभिः परिवारितः ॥ ६४
तमुवाच ततः पादौ कराभ्यां पांड्य पांडवः ।
भीष्मं शांतनवं राजा युद्धाय समुपस्थितम् ॥ ६५
आमंत्रये त्वां दुर्धर्ष त्वया योत्स्यामहे सह ।
अनुजानीहि मां तत्र आशिषश्चैव योजय ॥ ६६
भी० उ०—यद्येवं नाधिगच्छेथा युधि मा पृथिवीपते ।
शपेयं त्वां महाराज पराभावाय भारत ॥ ६७
प्रीतोऽस्मि पुत्र युद्ध्यस्व जयमाप्नुहि पांडव ।
यत्तेऽभिलषितं चान्यत्तदवाप्नुहि संयुगे ॥ ६८
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ ६९
ततो युधिष्ठिरो वाक्यं भीष्मस्य कुरुनंदनः ।
शिरसा प्रतिजग्राह भूयस्तमभिवाद्य च ॥ ७०
प्रागात्पुनर्महाबाहुराचार्यस्य रथं प्रति ।
पश्यतां सर्वसैन्यानां मध्येन भ्रातृभिः सह ॥ ७१
स द्रोणमभिवाद्याथ कृत्वा चैव प्रदक्षिणम् ।
उवाच वाचा दुर्धर्षमात्मनिःश्रेयसं वचः ॥ ७२

द्रो० उ०—ध्रुवस्ते विजयो राजन् यस्य मंत्री हरिस्तव ।
अहं त्वामभिजानामि रणे शत्रूनविमोक्ष्यसे ।
यतो धर्मस्ततः कृष्णो यत कृष्णस्ततो जयः ॥ ७३
अनुमान्य तमाचार्यं प्रायाच्छारद्वत प्रति ।
सोऽभिवाद्य कृपं राजन् कृत्वा चापि प्रदक्षिणम् ।
उवाच दुर्धर्षतरं वाक्यं वाक्यविशारदः ॥ ७४
अनुमानयित्वा योत्स्येऽहं गुरो विगतकल्मषः ।
जयेयं च रिपून् सर्वाननुज्ञातस्त्वयाऽनघ ॥ ७५
अनुमान्याथ कौंतेयो मातुलं मद्रकेश्वरम् ।
निर्जगाम महासैन्याद्भ्रातृभि· परिवारितः ॥ ७६
अथ सैन्यस्य मध्ये तु प्राक्रोशत्पाडवाग्रजः ।
योऽस्मान् वृणोति तमहं वरये साह्यकारणात् ॥ ७७
अथ तान् समभिप्रेक्ष्य युयुत्सुरिदमब्रवीत् ।
प्रीतात्मा धर्मराजानं कुंतीपुत्र युधिष्ठिरम् ॥ ७८
अहं योत्स्यामि भवत· सयुगे धृतराष्ट्रजान् ।
युष्मदर्थे महाराज यदि मां वृणुषेऽनघ ॥ ७९
एह्येहि सर्वे योत्स्यामस्तव भ्रातृनपंडितान् ।
युयुत्सो वासुदेवश्च वयं ब्रूम च सर्वशः ॥ ८०
त्वयि तंतुश्च पिंडश्च धृतराष्ट्रस्य दृश्यते ।
भजस्वास्मान्राजपुत्र भजमानान् महाद्युते ॥ ८१
न भविष्यति दुर्बुद्धिर्धार्तराष्ट्रो ह्यमर्षणः ॥ ८२
ततो युयुत्सुः कौरव्यान् परित्यज्य सुतांस्तव ।
जगाम पांडुपुत्राणां सेनां विश्राव्य दुंदुभिम् ॥ ८३
ततो युधिष्ठिरो राजा सुसंहृष्टो महाभुजः ।
जग्राह कवचं भूयो दीप्तिमत्कनकोज्ज्वलम् ॥ ८४
प्रत्यपद्यंत ते सर्वे रथान् स्वान् पुरुषर्षभाः ।
ततो व्यूहं यथापूर्वं प्रत्यव्यूहंतते पुनः ॥ ८५
गौरवं पांडुपुत्राणां मान्यान्मानयतां च तान् ।
दृष्ट्वा महीक्षितस्तत्र पूजयांचक्रिरे भृशम् ॥ ८६
सौहृदं च कृपां चैव प्राप्तकालं महात्मनाम् ।
दयां च ज्ञातिषु परां कथयांचाक्रिरे नृपाः ॥ ८७

साधु साध्विति सर्वत्र निश्चेरुः स्तुतिसंहिताः ॥ ८८
म्लेच्छाश्चार्याश्च ये तत्र ददृशुः शुश्रुवुस्तदा ।
वृत्तं तत्पांडुपुत्राणां रुरुदुस्ते सगद्गदाः ॥ ८९
पूर्वाह्णे तस्य रौद्रस्य युद्धमह्नो विशांपते ।
प्रावर्तत महाघोरं राज्ञां देहावकर्तनम् ॥ ९०
कुरूणां सृंजयानां च संग्रामे विजिगीषताम् ।
सिंहानामिव संह्रादो दिवमुर्वीं च नादयन् ।
आसीत्किलकिलाशब्दस्तलशंखरवैः सह ॥ ९१
जज्ञिरे सिंहनादाश्च नराणां प्रतिगर्जताम् ।
तलत्राभिहतश्चैव ज्याशब्दो भरतर्षभ ॥ ९२
पत्तीनां पदशब्दश्च वाजिनां च महास्वनः ।
तोत्राकुशनिपातश्च आयुधानां च निःस्वनः ॥ ९३
घंटाशब्दश्च नागानामन्योन्यमभिधावताम् ।
तस्मिन् समुदितः शब्दस्तुमुलो लोमहर्षणः ॥ ९४
बभव रथनिर्घोषः पर्जन्यनिनदोपमः । ९५
ते मनः क्रूरमास्थाय समाभित्यक्तजीविताः ।
पांडवानभ्यवर्तंत सर्व एवोच्छ्रितध्वजाः ।
स्वयं शांतवनो राजन्नभ्यधावद्धनंजयम् ॥ ९६
सात्यकिस्तु महेष्वासः कृतवर्माणमभ्ययात् ।
अभिमन्युर्महेष्वासो बृहद्बलमयोधयत् ॥ ९७
युधिष्ठिरः स्वयं राजा मद्रराजानमभ्ययात् ।
धृष्टद्युम्नस्ततो द्रोणमभ्यद्रवत भारत ॥ ९८
राक्षसं क्रूरकर्माणं क्रूरकर्मा घटोत्कचः ।
अलंबुषं प्रत्युदियाद्बलं शक्र इवाहवे ॥ ९९
शिखंडी समरे राजन् द्रौणिमभ्युद्ययौ बली ।
बृहत्क्षत्रं च कैकेयं कृपः शारद्वतो ययौ ॥ १००
एवं द्वन्द्वसहस्राणि रथवारणवाजिनाम् ।
पदातीनां च समरे तव तेषां च संकुले ॥ १०१
मुहूर्तमिव तद्युद्धमासीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्न प्राज्ञायत किंचन ॥ १०२

न पुत्रः पितरं जज्ञे न पिता पुत्रमौरसम् ।
न भ्राता भ्रातरं तत्र स्वस्रीयो न च मातुलम् ॥ १०३
रथानीकं नरव्याघ्राः केचिदभ्यपतन् रथैः ।
अभज्यंत रथैरेव युगानि भरतर्षभ ॥ १०४
बहुधादारयन् क्रुद्धा विषाणैरितरेतरम् ।
सतोरणपताकैश्च वारणा रणवारणैः ॥ १०५
अभिनीताश्च शिक्षाभिस्तोत्रांकुशसमाहताः ।
अप्रभिन्नाः प्रभिन्नानां संमुखाभिमुखा ययुः ॥ १०६
प्रभिन्नैरपि सयुक्ताः केचित्तत्र महागजाः ।
क्रौंचवन्निनदं कृत्वा प्राद्रवंत ततस्ततः ॥ १०७
विनेदुर्भिन्नमर्माणो निपेतुश्च गतासवः ।
प्रधावति दिश' केचिन्नदंतो भैरवारवान् ॥ १०८
गजानां पादरक्षाश्च व्यूढोरस्काः प्रहारिणः ।
ऋषिभिश्च धनुर्भिश्च विमलैश्च परश्वधैः ॥ १०९
गदाभिर्मुसलैश्चैव भिंदिपालैः सतोमरैः ॥
आयसैः परिघैश्चापि निस्त्रिंशैर्विमलैः शितैः ॥ ११०
सुगृहीतैः सुसरब्धा द्रवमाणास्ततस्ततः ।
व्यदृश्यंत महाराज परस्पराजिघासवः ॥ १११
राजञ् शतसहस्राणि ततः क्षत्रियपुंगवाः ।
श्वेतं सेनापतिं शूराः पुरस्कृत्य महारथाः ॥ ११२
राज्ञो बल दर्शयंतस्तव पुत्रस्य भारत ।
शिखंडिनं पुरस्कृत्य त्रातुमैच्छन्महारथाः ॥ ११३
अभ्यवर्तत भीष्मस्य रथं हेमपरिष्कृतम् ।
जिघासंतो युधां श्रेष्ठं तदासीत्तुमुलं महत् ॥ ११४
अहतः कोऽपि नैवासीद्भीष्मे निघ्नति शात्रवान् ॥ ११५
एकाह्ना निर्दहेद्भीष्मः पांडवानामनीकिनीम् ।
शरैः परमसंक्रुद्धः श्वेतो यदि न पालयेत् ॥ ११६
निगृह्य कार्मुकं श्वेतो भीष्मं विव्याध सप्तभिः ।
तं प्रत्यविध्यद्दशभिर्भीष्मः शांतनवस्तथा ॥ ११७
स विद्धस्तेन बलवान्नाकंपत यथाचलः ।
विव्याध पंचविंशत्या तदद्भुतमिवाभवत् ॥ ११८

धनुश्चिच्छेद भीष्मस्य दशभिर्दशधा शरैः ।
संधाय विशिखं चैव शरं लोमप्रवाहिनम् ।
उन्ममाथ ततस्तालं ध्वजशीर्षे महात्मनः ॥ ११९
केतुं निपतितं दृष्ट्वा भीष्मस्य तनयास्तव ।
हतं भीष्मममन्यंत श्वेतस्य वशमागतम् ॥ १२०
उत्सृज्य कार्मुकं राजन् गांगेयः क्रोधमूर्छितः ।
अन्यत्कार्मुकमादाय विपुलं बलवत्तरम् ॥ १२१
तत्र संधाय विपुलान् भल्लान् सप्त शिलाशितान् ।
चतुर्भिश्चतुरश्चाश्वान् श्वेतस्य पृतनापतेः ॥ १२२
ध्वजं द्वाभ्यां च चिच्छेद सप्तमेन च सारथेः ।
शिरश्चिच्छेद भल्लेन संक्रुद्धो लघुविक्रमः ॥ १२३
हताश्वसूतात्सरथादवप्लुत्य महारथः ।
अमर्षवशमापन्नो व्याकुलः समपद्यत ॥ १२४
विरथं रथिनां श्रेष्ठं श्वेतं दृष्ट्वा पितामहः ।
ताडयामास निशितैः शरसंघैः समंततः ॥ १२५
ततः शरं मृत्युसमं भारसाधनमुत्तमम् ।
निष्कृष्यबलवान् भीष्मः समधत्त दुरासदम् ॥ १२६
ब्रह्मास्त्रेण सुसंयुक्तं तं शरं लोमवाहिनम् ।
ददृशुर्देवगन्धर्वाः पिशाचोरगराक्षसाः ॥ १२७
स तस्य कवचं भित्वा ज्वलदग्निसमोजसः ।
जगाम धरणिं बाणो महाशनिरिव ज्वलन् ॥ १२८
अस्तं गच्छन् यथादित्यः प्रभामादाय सत्वरः ।
एवं जीवितमादाय श्वेतदेहाज्जगाम सः ॥ १२९
ततो दुःशासनो राजन् श्वेतं दृष्ट्वा निपातितम् ।
वादित्रनिनदैर्घोरैर्नृत्यति स्म समंततः ॥ १३०
तस्मिन् हते महेष्वासे भीष्मेणाहवशोभिना ।
प्रावेपंत महेष्वासाः शिखंडिप्रमुखा रथाः ॥ १३१
ततो भीष्मरथात्तूर्णमुत्पतंति पतत्रिणः ।
यैरंतरिक्षं भूमिश्च सर्वतः समवस्तृता ॥ १३२
पांचालानथ मत्स्यांश्च केरलांश्च प्रभद्रकान् ।
भीष्मः प्रहरतां श्रेष्ठ पातयामास मार्गणैः ॥ १३३

शरैः कायनीकुर्वन् दिशः सर्वा यतव्रतः ।
जघान पांडवरथानादिश्यादिश्य भारत ॥ १३४

ततः सैन्येषु भग्नेषु मथितेषु च भारत ।
प्राप्ते चास्तं दिनकरे न प्राज्ञायत किंचन ॥ १३५

भीष्मं च समुदीर्यंतं दृष्ट्वा पार्था महाहवे ।
अवहारमकुर्वत सैन्यानां भरतर्षभ ॥ १३६

---

## ३.

अ० ७०—व्यूहं क्रौंचारुणो माम सर्वशत्रुनिषूदनः ।
य बृहस्पतिरिंद्राय तदा देवासुरेऽब्रवीत् ॥ १३७

तं यथावत्प्रतिव्यूहं परानीकविनाशनम् ।
अदृष्टपूर्वं राजानः पश्यंतु कुरुभिः सह ॥ १३८

तथोक्तः स नृदेवेन विष्णुर्वज्रभृता इव ।
प्रभाते सर्वसैन्यानामग्रे चक्रे धनंजयम् ॥ १३९

शिरोऽभूद्द्रुपदो राजा महत्या सेनया वृतः ।
कुंतिभोजश्च चैद्यश्च चक्षुरास्तां नरेश्वर ॥ १४०

दाशार्णकाः प्रभद्राश्च दासेरकगणैः सह ।
अनूपकाः किराताश्च ग्रीवायां भरतर्षभ ॥ १४१

पटच्चरैश्च हूणैश्च राजा पौरवकैस्तथा ।
निषादैः सहितश्चापि पृष्ठमासीद्युधिष्ठिरः ॥ १४२

पक्षौ तु भीमसेनश्च धृष्टद्युम्नश्च पार्षत. ।
द्रौपदेयाभिमन्युश्च सात्यकिश्च महारथः ॥ १४३

पिशाचा दारदाश्चैव पौंड्रैः कुंडीवृषै. सह ।
यवना धेनुकाश्चैव तंगणाः परतगणाः ॥ १४४

बाह्लीकास्तित्तिराश्चैव चोलाः पांड्याश्च भारत ।
एते जनपदा राजन् दक्षिणं पक्षमाश्रिताः ॥ १४५

अग्निवेश्या गजतुंडा मलदा दाशकारवः ।
शबराः कुम्भसाश्चैव वत्साश्च सह मालुकैः ।
नकुलः सहदेवश्च वामं पक्षं समाश्रिताः ॥ १४६

जघनं पालयामास विराटः सह कैकयैः ।
काशिराजश्च शैब्यश्च रथानामयुतैस्त्रिभिः ॥ १४७
एवमेतं महाव्यूहं व्यूह्य भारतसत्तमाः ।
सूर्योदयनमिच्छंतः स्थिता युद्धाय दंशिताः ॥ १४८
ततो भीष्मश्च द्रोणश्च तव पुत्राश्च मारिष ।
अव्यूहंत महाव्यूहं पार्थानां प्रतिबाधने ॥ १४९
ततो युद्धं समभवत्तुमुलं लोमहर्षणम् ।
तावकानां परेषां च व्यतिषक्तरथद्विपम् ॥ १५०
सौभद्रे भीमसेने च अर्जुने च महारथे ।
कैकेये च विराटे च धृष्टद्युम्ने च पार्षते ॥ १५१
एतेषु नरवीरेषु चेदिमत्स्येषु वा विभुः ।
ववर्ष शरवर्षाणि वृद्धः कुरुपितामहः ॥ १५२
प्राकंपत महाव्यूहस्तस्मिन् वीरसमागमे ।
सर्वेषामेव सैन्यानामासीद्व्यतिकरो महान् ॥ १५३
ततो दुर्योधनो राजा कालिंगं समचोदयत् ।
सैन्येन महता युक्तं भारद्वाजस्य गोपने ॥ १५४
ततः सा महती सेना कलिंगानां नरेश्वर ।
भीममभ्याययौ भीमा तव पुत्रस्य शासनात् ॥ १५५
ततो भीमो महाबाहुर्गदां त्यक्त्वा महाबलः ।
उद्बवर्ह स निस्त्रिंशं चिकीर्षुः कर्म दारुणम् ॥ १५६
चर्म चाप्रतिमं राजन्नार्षभं पुरुषर्षभ ॥ १५७
ततः स्वरेण महता विननाद महास्वनः ।
तेन शब्देन वित्रस्ता कलिंगानां वरूथिनी ॥ १५८
सासिर्वेगवदाप्लुत्य दंताभ्यां वारणोत्तमम् ।
आरुरोह ततो मध्यं नागराजस्य मारिष ॥ १५९
खड्गेन पृथुना मध्ये भानुमंतमथाच्छिनत् ।
सोंतरा युधि तं हत्वा राजपुत्रमरिंदमः ।
गुरुभारसहं स्कंधे नागस्यासिमपातयत् ॥ १६०
छिन्नस्कंधः स विनदन् पपात गजयूथपः ।
आरुगणः सिंहवेगेन सानुमानिव पर्वतः ॥ १६१

पततश्चाप्यवप्लुत्य गजाद्भारत भारतः ।
खड्गपाणिरदीनात्मा तस्थौ भुवि स दंशितः ॥ १६२
स चचार बहून् मार्गानभीतः पातयन् गजान् ।
अग्निचक्रमिवाविद्धं सर्वतः प्रत्यदृश्यत ॥ १६३
अश्ववृंदेषु नागेषु रथानीकेषु वा विभुः ।
पदातीनां च संघेषु निनिघ्नन् प्रत्यदृश्यत ॥ १६४
केचिदग्रासिना छिन्नाः पांडवेन महात्मना ।
विनेदुर्भिन्नमर्माणो निपेतुश्च गतासवः ॥ १६५
छिन्नदंताग्रहस्ताश्च छिन्नकुम्भास्तथापरे ।
वियोधाः स्वान्यनीकानि जघ्नुर्भारत वारणाः ॥ १६६
आसीत्तस्मिन् रणे भूमिः पर्वतैः पतितैरिव ।
विमृद्यैवं महानागान् ममर्दाश्वान्नरर्षभः ॥ १६७
खलीनानि विचित्राणि कक्षाश्च कनकोज्ज्वलाः ।
परिस्तोमाश्च प्रासाश्च ऋषयश्च महाधनाः ॥ १६८
कवचान्यथ कर्माणि चित्राण्यास्तरणानि च ।
तत्र तत्रापविद्धानि व्यदृश्यंत महाहवे ॥ १६९
आप्लुत्य रथिनः कांश्चित्परामृश्य महाबलः ।
पातयामास खड्गेन सध्वजानपि पांडवः ॥ १७०
एवं स तान्यनीकानि कलिंगानां पुनः पुनः ।
बिभेद समरे वीरो भीमो भीमपराक्रमः ॥ १७१
संप्रहृष्टो महाघोरं शंखं प्रध्मापयन् बली ।
सर्वकालिंगसैन्यानां मनांसि समकंपयत् ॥ १७२
ततोऽवहारः सैन्यानां तव तेषां च मारिष ।
अस्तं गच्छति सूर्येऽभूत्संध्या च समवर्तत ॥ १७३

---

## ४

प्रभातायां तु शर्वर्यां भीष्मः शांतनवस्ततः ।
अनीकान्यथ संयाने व्यादिदेश परंतपः ॥ १७४
गारुडं च महाव्यूहं चक्रे शांतनवस्तदा ।
पुत्राणां ते जयाकांक्षी वृद्धः कुरुपितामहः ॥ १७५

तावकानां तु तं व्यूहं प्रत्यव्यूहंत पांडवाः ।
अर्धचंद्रेण व्यूहेन व्यूहं तमतिदारुणम् ॥ १७६
ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम् ।
तावकानां परेषां च निघ्नतामितरेतरम् ॥ १७७
उदतिष्ठद्रजो भौमं छादयानं दिवाकरम् ।
न दिशः प्रदिशश्चापि तत्र जज्ञुः कथंचन ॥ १७८
अनुमानेन संज्ञाभिर्नामगोत्रैश्च संयुगे ।
वर्तते स्म तदा युद्धं तत्र विशांपते ॥ १७९
न व्यूहो भिद्यते तत्र कौरवाणां विशांपते ।
रक्षितः स यथा तेन भारद्वाजेन मारिष ।
तथैव पांडवेयानां रक्षितः सव्यसाचिना ॥ १८०
सेनाग्रादभिनिष्पत्य प्रायुध्यंस्तत्र मानवाः ।
उभयोः सेनयो राजन् व्यतिषक्तरथद्विपाः ॥ १८१
ततस्ते पार्थिवाः क्रुद्धाः फाल्गुनं वीक्ष्य संयुगे ।
रथैरनेकसाहस्रैः समंतात्पर्यवारयन् ॥ १८२
अस्त्राणामथ तां वृष्टिं शलभानामिवायतिम् ।
रुरोध सर्वतः पार्थः शरैः कनकभूषणैः ॥ १८३
सात्यकिश्चाभिमन्युश्च महत्या सेनया सह ।
गांधारान् समरे शूरान् रुरुधुः सह सौबलान् ॥ १८४
ततो धर्मसुतो राजा माद्रीपुत्रौ च पाडवौ ।
मिषतां सर्वसैन्यानां द्रोणानीकमुपाद्रवन् ॥ १८५
कुर्वाणौ तु महत्कर्म भीमसेनघटोत्कचौ ।
दुर्योधनस्ततोऽभ्येत्य तावुभावप्यवारयत् ॥ १८६
भीष्मसेनस्तु संक्रुद्धो दुर्योधनममर्षणः ।
हृद्यविद्ध्यत्पृषत्केन प्रहसन्निव पाडवः ॥ १८७
ततो दुर्योधनो राजा प्रहारवरपीडितः ।
निषसाद रथोपस्थे कश्मलं च जगाम ह ॥ १८८
तं विसंज्ञमथो दृष्ट्वा त्वरमाणोऽस्य सारथिः ।
अपोवाहद्रणाद्राजंस्ततः सैन्यमभज्यत ॥ १८९
ततस्तां कौरवीं सेनां द्रवमाणां ततस्ततः ।
निघ्नन् भीमः शरैस्तीक्ष्णैरनुवव्राज पृष्ठतः ॥ १९०

नाशक्नुतां वारयितुं भीष्मद्रोणौ महारथौ ॥ १९१
ततो दुर्योधनो राजा समाश्वस्य विशांपते ।
न्यवर्तयत तत्सैन्यं द्रवमाणं समंततः ॥ १९२
तत्र तत्र न्यवर्तंत क्षत्रियाणां महारथाः ।
अन्योन्यस्पर्धया राजंल्लज्जया चावतस्थिरे ॥ १९३
सन्निवृत्तांस्ततस्तांस्तु दृष्ट्वा राजा सुयोधनः ।
अब्रवीत्त्वरितो गत्वा भीष्मं शांतनवं वचः ॥ १९४
अनुग्राह्याः पांडुसुता नूनं तव पितामह ।
यथेमां क्षमसे वीर वध्यमानां वरूथिनीम् ॥ १९५
सोऽस्मि वाच्यस्त्वया राजन् पूर्वमेव समागमे ।
न योत्स्ये पांडवान् संख्ये नापि सात्यकिपार्षतौ ॥ १९६
श्रुत्वाहं वचनं तुभ्यमाचार्यस्य च भारत ।
कर्णेन सहितः कृत्यं चिंतयानस्तदैव हि ॥ १९७
यदि नाहं परित्याज्यो युवाभ्यामिह संयुगे ।
विक्रमेणानुरूपेण युध्यतां पुरुषर्षभौ ॥ १९८
एतच्छ्रुत्वा वचो भीष्मः प्रहसन् वै मुहुर्मुहुः ।
अब्रवीत्तनयं तुभ्यं क्रोधाद्व्यावृत्य चक्षुषी ॥ १९९
बहुशोऽसि मया राजन् पथ्यमुक्तो हितं वचः ।
अजेयाः पांडवा युद्धे देवैरपि सवासवैः ॥ २००
यत्तु शक्यं मया कर्तुं वृद्धेनात्र नृपोत्तम ।
करिष्यामि यथाशक्ति प्रेक्षेदानी सबांधवः ॥ २०१
एवमुक्तस्तु भीष्मेण पुत्रस्तव नरेश्वरः ।
दध्मौ शंखं मुदा युक्तो भेरीश्च समताडयत् ॥ २०२
प्रावर्तत ततो युद्धं तुमुलं लोमहर्षणम् ।
अस्माकं पांडवैः सार्धमनयात्तव भारत ॥ २०३
कांचनेषु तनुत्रेषु किरीटेषु ध्वजेषु च ।
शिलानामिव शैलेषु पतंतीनामभूत्स्वनः ॥ २०४
पतितान्युत्तमांगानि बाहवश्च विभूषिताः ।
व्यचेष्टंत महीं प्राप्य शतशोऽथ सहस्रशः ॥ २०५
प्रावर्तत महावेगा नदी रुधिरवाहिनी ।
मातंगांगशिला घोरा मांसशोणितकर्दमा ॥ २०६

न दृष्टं न श्रुतं चापि युद्धमेतादृशं नृप ।
यथा तव सुतानां च पांडवानां च भारत ॥ २०७
तत्र भीष्मः शांतनवो नित्यं मंडलकार्मुकः ।
मुमोच बाणान् दीप्ताग्रानहीनाशीविषानिव ॥ २०८
तमेकं समरे शूरं पांडवाः संजयैः सह ।
अनेकशतसाहस्रं समपश्यंत लाघवात् ॥ २०९
न चैन पांडवेयाना कश्चिच्छक्नोति वीक्षितुम् ।
विशिखानेव पश्यंति भीष्मचापच्युतान् बहून् ॥ २१०
अमानुषेण रूपेण चरंतं पितरं तव ।
शलभा इव राजानः पतंति स्म प्रमोहिताः ॥ २११
न हि मोघः शरः कश्चिदासीद्भीष्मस्य संयुगे ।
नरनागाश्वकायेषु बहुत्वाल्लघुयोधिनः ॥ २१२
एवं सा धर्मराजस्य वध्यमाना महाचमूः ।
भीष्मेणातुलवीर्येण व्यशीर्यत सहस्रधा ॥ २१३
प्रभज्यमानं सैन्यं च दृष्ट्वा यादवनंदनः ।
उवाच पार्थं कृष्णस्तु निगृह्य रथसत्तमम् ॥ २१४
अयं च कालः संप्राप्तः पार्थ यः कांक्षितस्तव ।
प्रहरास्मै नरव्याघ्र न चेन्मोहाद्विमुह्यसे ॥ २१५
एवमुक्तः प्रत्युवाच वासुदेवं धनजयः ।
चोदयाश्वान् यतो भीष्मो विगाह्यैतद्बलार्णवम् ॥ २१६
ततो भीष्मः कुरुश्रेष्ठः सिंहवद्विनदन्मुहुः ।
धनंजयरथं तूर्णं शरवर्षैरवाकिरत् ॥ २१७
क्षणेन स रथस्तस्य सध्वजः सहसारथिः ।
शरवर्षेण महता संच्छन्नो न प्रदृश्यते ॥ २१८
वासुदेवस्त्वसंभ्रांतो धैर्यमास्थाय सत्ववान् ।
चोदयामास तानश्वान् विनुन्नान् भीष्मसायकैः ॥ २१९
अदर्शयद्वासुदेवो हययाने परं बलम् ।
मोघान् कुर्वंच्छरांस्तस्य मंडलान्यचरल्लघु ॥ २२०
ततस्तु भीष्मः सुदृढं वासुदेवधनंजयौ ।
विव्याध निशितैर्बाणैः सर्वगात्रेषु मारिष ॥ २२१

शुशुभाते नरव्याघ्रौ तौ भीष्मशरविक्षतौ ।
गोवृषाविव नर्दंतौ विषाणोल्लिखितांकितौ ॥ २२२
ततः कृष्णस्तु समरे दृष्ट्वा भीष्मपराक्रमम् ।
संप्रेक्ष्य च महाबाहुः पार्थस्य मृदुयुद्धताम् ॥ २२३
अचिंतयदमेयात्मा नास्ति यौधिष्ठिरं बलम् ।
एकाह्ना हि रणे भीष्मो नाशयेद्दैत्यदानवान् ।
किमु पांडुसुतान् युद्धे सबलान् सपदानुगान् ॥ २२४
सोऽहं भीष्मं निहन्म्यद्य पांडवार्थाय दंशितः ।
भारमेनं विनेष्यामि पांडवानां महात्मनाम् ॥ २२५
निहत्य सर्वान् धृतराष्ट्रपुत्रांस्तत्पाक्षिका ये च नरेन्द्रमुख्याः ।
राज्येन राजानमजातशत्रुं संपादयिष्याम्यहमद्य हृष्टः ॥ २२६
ततः सुनाभं वसुदेवपुत्रः सूर्यप्रभं वज्रसहस्रतुल्यम् ।
क्षुरांतमुद्भ्राम्य भुजेन चक्रं रथादवप्लुत्य विसृज्य वाहान् ।
संकंपयन्गां चरणैर्महात्मा वेगेन कृष्णः प्रससार भीष्मम् ॥ २२७
तमापतंतं प्रगृहीतचक्रं समीक्ष्य देवं द्विपदां वरिष्ठम् ।
असंभ्रमात्कार्मुकबाणपाणिं रथे स्थितः शांतनवोऽभ्युवाच ॥ २२८
एह्येहि देवेश जगन्निवास नमोऽस्तु ते शार्ङ्गगदासिपाणे ।
प्रसह्य मां पातय लोकनाथ रथोत्तमाद्भूतशरण्य संख्ये ॥ २२९
त्वया हतस्येह ममाद्य कृष्ण श्रेयः परस्मिन्निह चैव लोके ॥ २३०
श्रुत्वा वाचः शांतनवस्य कृष्णो वेगेन धावंस्तमथाभ्युवाच ।
त्वं मूलमस्येह भुवि क्षयस्य दुर्योधनं चाद्य समुद्धरिष्यसि ॥ २३१
दुर्द्यूतदेवी नृपतिर्निवार्यः सन्मंत्रिणा धर्मपथि स्थितेन ।
त्याज्योऽथवा कालपरीतबुद्धिर्धर्मातिगो यः कुलपांसनः स्यात् ॥ २२२
भीष्मस्तदाकर्ण्य यदुप्रवीरं राजा परं दैवतमित्युवाच ॥ २३३
वा० उ०—त्यक्तस्तु कंसो यदुभिर्हितार्थे संबोध्यमानो न बुबोध राजा ।
क्लेशाय दैवाद्विपरीतबुद्धिः श्रोता हितं यस्य न कश्चिदस्ति ॥ २३४
रथादवप्लुत्य ततस्त्वरावान् पार्थः पद्भ्यां द्रुत्य यदुप्रवीरम् ।
जग्राह पीनोन्नतलंबबाहुं बाह्वोर्हरिं व्यायतपीनबाहुः ॥ २३५
अवस्थितं च प्रणिपत्य कृष्णं प्रीतोऽर्जुनः कांचनचित्रमाली ।
उवाच कोपं प्रतिसंहरेति गतिर्भवान् केशव पांडवानाम् ॥ २३६

न हास्यसे कर्म यथाप्रतिज्ञं पुत्रैः शपे केशव सोदरैश्च ।
अंतं गमिष्यामि यथा कुरूणां त्वयाहमिंद्रानुज संप्रयुक्तः ॥ २३७
ततः प्रतिज्ञां समयं च तस्य जनार्दनः प्रीतमना निशम्य ।
स तानभीषून् पुनराददानः प्रगृह्य शंख द्विषतां निहंता ।
निनादयामास दिशो नभश्च स पांचजन्यस्य रवेण शौरिः ॥ २३८
ततो भुजाभ्या बलवद्विकृष्य चित्रं धनुर्गांडिवमप्रमेयम् ।
माहेन्द्रमस्त्रं विधिवत्सुघोरं प्रादुश्चकाराद्भुतमंतरिक्षे ॥ २३९
तेनोत्तमास्त्रेण ततो महात्मा सर्वाण्यनीकानि महाधनुष्मान् ।
शरौघजालैर्विमलाग्निवर्णैर्निवारयामास किरीटमाली ॥ २४०
शिलीमुखाः पार्थधनुर्विसृष्टा रथान् ध्वजाग्राणि धनूंषि बाहून् ।
निकृत्य देहान् विविशुः परेषां नरेंद्रनागेंद्रतुरंगमाणाम् ॥ २४१
ततो दिशः सोऽनुदिशश्च पार्थः शरैः सुधारैर्निशितैर्वितत्य ।
गांडीवशब्देन मनांसि तेषां किरीटमाली व्यथयांचकार ॥ २४२
तस्मिंस्तथा घोरतमास्त्रयुद्धे शंखस्वना दुंदुभिनिस्वनाश्च ।
अंतर्हिता गांडिवनिस्वनेन बभूवुरुग्राश्च रणप्रणादाः ॥ २४३
हतप्रवीराणि बलानि दृष्ट्वा किरीटिना शत्रुभयावहेन ।
वित्रास्य सेना ध्वजिनीपतीनां सिंहो मृगाणामिव यूथसंघान् ॥ २४४
विनेदतुस्तावतिहर्षयुक्तौ गांडीवधन्वा च जनार्दनश्च ।
तदैन्द्रमस्त्रं विततं च घोरमसह्यमुद्वीक्ष्य युगांतकल्पम् ॥ २४५
अथापयानं कुरवः सभीष्माः सद्रोणदुर्योधनबाह्लिकाश्च ।
चक्रुर्निशां संधिगतां समीक्ष्य विभावसोर्लोहितरागयुक्ताम् ॥ २४६
अवाप्य कीर्तिं च यशश्च लोके विमृद्य शत्रूंश्च धनंजयोऽपि ।
ययौ नरेंद्रः सहसोदरैश्च समाप्तकर्मा शिबिरं निशायाम् ॥ २४७
रणे रथानामयुत निहत्य गजा हताः सप्तशतार्जुनेन ।
प्राच्याश्च सौवीरगणाश्च सर्वे निपातिताः क्षुद्रकमालवाश्च ॥ २४८

---

## ५

परिणाम्य निशां तां तु सुखसुप्ता जनेश्वराः ।
कुरवः पांडवाश्चैव पुनर्युद्धाय निर्ययुः ॥ २४९
ततः प्रववृते युद्धं घोररूपं भयानकम् ।
तावकानां परेषां च निघ्नतामितरेतरम् ॥ २५०

भीष्मं तु समरे क्रुद्धं प्रतपतं समंततः ।
न शेकुः पांडवा द्रष्टुं तपंतमिव भास्करम् ॥
अन्यत्र रथिनां श्रेष्ठाद्भीमसेनान्महाबलात् ॥ २५१
ततो दुर्योधनो राजा सोदर्यैः परिवारितः ।
भीष्मं जुगोप समरे वर्तमाने महाक्षये ॥ २५२
भीमस्तु सारथिं हत्वा भीष्मस्य रथिना वरः ।
प्रद्रुताश्वे रथे तस्मिन् प्लवमाने समंततः ॥ २५३
सुनाभस्य क्षुरेणाशु शिरश्चिच्छेद भारत ।
पूर्णायतविसृष्टेन स हतो न्यपतद्भुवि ॥ २५४
हते तस्मिन् महाराज तव पुत्रे महारथे ।
नामृष्यंत रणे शूराः सोदराः सप्त संयुगे ॥ २५५
आदित्यकेतुर्बह्वाशी कुंडधारो महोदरः ।
अपराजितः पण्डितको विशालाक्षश्च दुर्जयः ॥ २५६
पांडवं चित्रसन्नाहा विचित्रकवचायुधाः ।
अभ्यद्रवत सग्रामे योद्धुकामारिमर्दनाः ॥ २५७
स तन्न ममृषे वीरः शत्रुभिर्वधमाहवे ।
धनुः प्रपीड्य वामेन करेणामित्रकर्शनः ॥ २५८
शिरश्चिच्छेद समरे शरेणानतपर्वणा । ·
अपराजितस्य सुनसं तव पुत्रस्य संयुगे ॥ २५९
अथापरेण भल्लेन कुंडधारं महारथम् ।
प्राहिणोन्मृत्युलोकाय सर्वसैन्यस्य पश्यतः ॥ २६०
विशालाक्षशिरश्छित्वा पातयामास भूतले ।
त्रिभिः शरैरदीनात्मा स्मरन् क्लेशं पुरातनम् ॥ २६१
महोदरं महेष्वासं नाराचेन स्तनांतरे ।
विव्याध समरे राजन् स हतो न्यपतद्भुवि ॥ २६२
आदित्यकेतोश्छत्रं च छित्त्वा बाणेन संयुगे ।
भल्लेन भृशतीक्ष्णेन शिरश्चिच्छेद भारत ॥ २६३
प्रदुद्रुवुस्ततस्तेन्ये पुत्रास्तव विशांपते ।
मन्यमाना हि तत्सत्यं सभायां तस्य भाषितम् ॥ २६४
ततो दुर्योधनो राजा भीष्ममासाद्य मारिष ।
दुःखेन महताविष्टो विललापार्तिदुःखितः ॥ २६५

निहता भ्रातरः शूरा भीमसेनेन मे युधि ।
यतमानास्तथान्येपि हन्यंते सर्वसैनिकाः ॥ २६६
भवान् मध्यस्थिततया नित्यमस्मानुपेक्षते ।
सोऽहं कापथमारूढः पश्य दैवमिदं मम ॥ २६७
एतच्छ्रुत्वा वचः क्रूरं पिता देवव्रतस्तव ।
दुर्योधनमिदं वाक्यमब्रवीत्साश्रुलोचनम् ॥ २६८
उक्तमेतन्मया पूर्वं द्रोणेन विदुरेण च ।
गांधार्या च यशस्विन्या तत् त्वं तात न बुद्धिवान् ॥ २६९
समयश्च मया पूर्वं कृतो वः शत्रुसूदन ।
नाहं युधि नियोक्तव्यो नाप्याचार्यः कथंचन ॥ २७०
यं यं हि धार्तराष्ट्राणां भीमो द्रक्ष्यति संयुगे ।
हनिष्यति रणे तं तं सत्यमेतद्ब्रवीमि ते ॥ २७१
स त्वं राजन् स्थिरो भूत्वा दृढां कृत्वा रणे मतिम् ।
योधयस्व रणे पार्थान् स्वर्गं कृत्वा परायणम् ॥ २७२
ससैन्यं निहतं दृष्ट्वा राजा दुर्योधनः स्वयम् ।
अभ्यधावत संक्रुद्धो भीमसेनमरिंदमम् ॥ २७३
अर्धचंद्रं च संधाय सुतीक्ष्णं लोमवाहिनम् ।
भीमसेनस्य चिच्छेद चापं क्रोधसमन्वितः ॥ २७४
तदंतरं च संप्रेक्ष्य त्वरमाणो महारथः ।
प्रसंदधे शितं बाणं गिरीणामपि दारणम् ॥ २७५
तेनोरसि महाराज भीमसेनमताडयत् ॥ २७६
स गाढविद्धो व्यथितः सृक्किणी परिसंलिहन् ।
समालंबे तेजस्वी ध्वजं हेमपरिष्कृतम् ॥ २७७
तथा विमनसं दृष्ट्वा भीमसेनं घटोत्कचः ।
क्रोधेनाभिप्रजज्वाल दिधक्षन्निव पावकः ॥ २७८
अभिमन्युमुखाश्चापि पांडवानां महारथाः ।
समभ्यधावन् क्रोशंतो राजानं जातसंभ्रमाः ॥ २७९
संप्रेक्ष्यैतान् संपततः संक्रुद्धान् जातसंभ्रमान् ।
भारद्वाजोऽब्रवीद्वाक्यं तावकानां महारथान् ।
क्षिप्रं गच्छत भद्रं वो राजानं परिरक्षत ॥ २८०

तदाचार्यवचः श्रुत्वा सोमदत्तपुरोगमाः ।
तावकाः समवर्तंत पांडवानामनीकिनीम् ॥ २८१
एवमुक्त्वा महाबाहुर्महद्विस्फार्य कार्मुकम् ।
भारद्वाजस्ततो भीमं षड्विंशत्या समार्दयत् ॥ २८२
भूयश्चैनं महाबाहुः शरैः शीघ्रमवाकिरत् ।
पर्वतं वारिधाराभिः प्रावृषीव बलाहकः ॥ २८३
तं प्रत्यविद्ध्यद्दशभिर्भीमसेनः शिलीमुखैः ।
त्वरमाणो महेष्वासः सव्ये पार्श्वे महाबलः ॥ २८४
स गाढविद्धो व्यथितो वयोवृद्धश्च भारत ।
प्रनष्टसंज्ञः सहसा रथोपस्थ उपाविशत् ॥ २८५
गुरुं प्रव्यथितं दृष्ट्वा राजा दुर्योधनः स्वयम् ।
द्रोणायनिश्च संक्रुद्धौ भीमसेनमभिद्रुतौ ॥ २८६
तावापतंतौ संप्रेक्ष्य कालांतकयमोपमौ ।
भीमसेनो महाबाहुर्गदामादाय सत्वरम् ॥ २८७
अवप्लुत्य रथात्तूर्णं तस्थौ गिरिरिवाचलः ।
समुद्यम्य गदामुर्वीं यमदंडोपमा रणे ॥ २८८
तत्राक्रंदो महानासीत्तव तेषां च भारत ।
निघ्नतां दृढमन्योन्यं कुर्वतां कर्म दुष्करम् ॥ २८९
रणे चारूणि चापानि हेमपृष्ठानि मारिष ॥ २९०
जातरूपमयैः पुंखै राजतैर्निशिताः शराः ।
तैलधौता व्यराजंत निर्मुक्तभुजगोपमाः ॥ २९१
हस्तिदन्तत्सरून् खड्गान् जातरूपपरिष्कृतान् ।
चर्माणि चापविद्धानि रुक्मचित्राणि धन्विनाम् ।
सुवर्णविकृतप्रासान् पट्टिशान् हेमभूषितान् ॥ २९२
जातरूपमयाश्चर्ष्टीः शक्तीश्च कनकोज्ज्वलाः ।
नानाविधानि शस्त्राणि प्रगृह्य पतिता नराः ॥ २९३
गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकाः ।
गजवाजिरथक्षुण्णाः शेरते नृपते क्षितौ ॥ २९४
विशब्दैरल्पशब्दैश्च शोणितौघपरिप्लुतैः ।
गतासुभिरमित्रघ्न विबभौ निचिता मही ॥ २९५

रथैश्च सर्वतो भग्नैः किंकिणीजालभूषितैः ।
वाजिभिश्च हतैर्बाणैः स्रस्तजिह्वैः सुशोणितैः ॥ २९६
नानारागैः कंबलैश्च परिस्तोमैश्च दन्तिनाम् ।
वैडूर्यमणिदण्डैश्च पतितैरंकुशैः शुभैः २९७
पद्मेन्दुद्युतिभिश्चैव वदनैश्चारुकुंडलैः ।
क्लृप्तश्मश्रुभिरत्यर्थं वीराणां समलंकृतैः ॥ २९८
एवमेते महासेने मृदिते तत्र भारत ।
परस्परं समासाद्य तत्र तेषां च संयुगे ॥ २९९
तेषु श्रांतेषु भग्नेषु मृदितेषु च भारत ॥ ३००
रात्रिः समभवत्तत्र नापश्याम ततोऽनुगान् ।
ततोऽवहारं सैन्यानां प्रचक्रुः कुरुपांडवाः ॥ ३०१

---

## ६

ततो दुर्योधनो राजा शकुनिश्चापि सौबलः ।
दुःशासनश्च पुत्रस्ते सूतपुत्रश्च दुर्जयः ॥ ३०२
समागम्य महाराज मंत्रं चक्रुर्विवाक्षितम् ।
कथं पांडुसुताः संख्ये जेतव्याः सगणा इति ॥ ३०३
दु० उ०—द्रोणो भीष्मः कृपः शल्यः सौमदत्तिश्च संयुगे ।
न पार्थान् प्रतिबाधन्ते न जाने तस्य कारणम् ॥ ३०४
अवध्यमानास्ते चापि क्षपयंति बलं मम ।
सोहं संशयमापन्नः प्रहरिष्ये कथं रणे ॥ ३०५
क० उ०—मा शुचो भरतश्रेष्ठ करिष्येऽहं प्रियं तव ।
भीष्मः शांतनवस्तूर्णमपयातु महारणात् ॥ ३०६
निवृत्ते युधि गांगेये न्यस्तशस्त्रे च भारत ।
अहं पार्थान् हनिष्यामि सहितान् सर्वसोमकैः ॥ ३०७
पांडवेषु दया नित्यं स हि भीष्मः करोति वै ।
अशक्तश्च रणे भीष्मो जेतुमेतान्महारथान् ॥ ३०८
अब्रवीद्भ्रातरं तत्र दुःशासनमिदं वचः ।
अनुयात्रं यथा सर्वं सज्जं भवतु सर्वशः ॥ ३०९
निष्पपात ततस्तूर्णं पुत्रस्तत्र विशांपते ।
सहितो भ्रातृभिस्तैस्तु देवैरिव शतक्रतुः ॥ ३१०

ततस्तं नृपशार्दूलं शार्दूलसमविक्रमम् ।
आरोहयद्धयं तूर्णं भ्राता दुःशासनस्तथा ॥ ३११
अनुलिप्तः परार्ध्येन चंदनेन सुगंधिना ।
अरजोऽम्बरसंवीतः सिंहखेलगतिर्नृपः ॥ ३१२
तं प्रयांतं नरव्याघ्रं भीष्मस्य शिबिरं प्रति ।
अनुजग्मुर्महेष्वासाः सर्वलोकस्य धान्विनः॥ ३१३
हयानन्ये समारुह्य गजानन्ये च भारत ।
रथानन्ये नरश्रेष्ठः परिवव्रुः समन्ततः ॥ ३१४
अन्वीयमानः सततं सोदरैः परिवारितः ।
दक्षिणं दक्षिणः काले संवृत्य स्वभुजं तदा ॥ ३१५
हस्तिहस्तोपमं पीनं सर्वशत्रुनिबर्हणम् ।
प्रगृह्णन्नंजलीन्नृणामुद्यतान् सर्वतोदिशः ॥ ३१६
प्रदीपैः कांचनैस्तत्र गंधतैलावसेचितैः ।
परिवव्रुर्महाराजं प्रज्वलाद्भिः समंततः ॥ ३१७
कांचनोष्णीषिणस्तत्र वेत्रझर्झरपाणयः ।
प्रोत्साहयंतः शनकैस्तं जनं सर्वतोदिशम् ॥ ३१८
संप्राप्य तु ततो राजा भीष्मस्य सदनं शुभम् ।
अभिवाद्य ततो भीष्मं निषण्णः परमासने ॥ ३१९
कांचने सर्वतोभद्रे स्पर्द्ध्यास्तरणसंवृते ।
उवाच प्रांजलिर्भीष्मं बाष्पकंठोऽश्रुलोचनः ॥ ३२०
त्वां वयं हि समाश्रित्य संयुगे शत्रुसूदन ।
उत्सहेम रणे जेतुं सेन्द्रानपि सुरासुरान् ॥ ३२१
तस्मादर्हसि गांगेय कृपां कर्तुं मयि प्रभो ।
जहि पांडुसुतान् वीरान् महेन्द्र इव दानवान् ॥ ३२२
दयया यदि वा राजन् द्वेष्यभावान्मम प्रभो ।
मंदभाग्यतया वापि मम रक्षसि पांडवान् ॥ ३२३
अनुजानीहि समरे कर्णमाहवशोभिनम् ।
स जेष्यति रणे पार्थान् ससुहृद्गणबांधवान् ॥ ३२४
श्वसमानो यथा नागः प्रणुन्नो वाक्शलाकया ।
स ध्यात्वा सुचिरं कालं दुःखरोषसमन्वितः ॥ ३२५

उद्धृत्य चक्षुषी कोपान्निर्दहन्निव भारत ।
अब्रवीत्तव पुत्रं स सामपूर्वमिदं वचः ॥ ३२६
किं त्वं दुर्योधनैवं मां वाक्शल्यैरपकृंतासि ।
घटमानं यथाशक्ति कुर्वाणं च तव प्रियम् ॥ ३२७
यदा तु पांडवः शूरः खांडवेऽग्निमतर्पयत् ।
पराजित्य रणे शक्रं पर्याप्तं तन्निदर्शनम् ॥ ३२८
यदा च त्वां महाबाहो गंधर्वैर्हृतमोजसा ।
अमोचयत्पांडुसुतः पर्याप्तं तन्निदर्शनम् ॥ ३२९
द्रवमाणेषु शूरेषु सोदरेषु तव प्रभो ।
सूतपुत्रे च राधेये पर्याप्तं तन्निदर्शनम् ॥ ३३०
यच्च नः सहितान् सर्वान् विराटनगरे तदा ।
एक एव समुद्यात. पर्याप्तं तन्निदर्शनम् ॥ ३३१
विजित्य च यदा कर्ण सदा पुरुषमानिनम् ।
उत्तरायै ददौ वस्त्र पर्याप्तं तन्निदर्शनम् ॥ ३३२
को हि शक्तो रणे जेतु पांडवं रभसं तदा ॥
यस्य गोप्ता जगद्गोप्ता शंखचक्रगदाधरः ॥ ३३३
उक्तोसि बहुशो राजन्नारदाद्यैर्महर्षिभिः ।
त्वं तु मोहान्न जानीषे वाच्यावाच्यं सुयोधन ॥ ३३४
मुमूर्षुर्हि नरः सर्वान् वृक्षान् पश्यति कांचनान् ।
तथा त्वमपि गांधारे विपरीतानि पश्यसि ॥ ३३५
स्वयं वैरं महत् कृत्वा पांडवैः सह सृंजयैः ।
युद्ध्यस्व तानद्य रणे पश्यामः पुरुषो भव ॥ ३३६
तैर्वाऽहं निहतः संख्ये गमिष्ये यमसादनम् ।
तान् वा निहत्य समरे प्रीतिं दास्याम्यहं तव ॥ ३३७
पूर्वं हि स्त्री समुत्पन्ना शिखंडी राजवेश्मनि ।
तमहं न हनिष्यामि प्राणत्यागेऽपि भारत ॥ ३३८
सुखं स्वपिहि गांधारे श्वोऽस्मि कर्ता महारणम् ।
यं जनाः कथयिष्यन्ति यावत्स्थास्यति मेदिनी ॥ ३३९
एवमुक्तस्तव सुतो निर्जगाम जनेश्वर ।
अभिवाद्य गुरुं मूर्ध्ना प्रययौ स्वं निवेशनम् ॥ ३४०

प्रभातायां च शर्वर्यां प्रातरुत्थाय तान्नृपः ।
राज्ञः समाज्ञापयत सेनां योजयतेति ह ।
अद्य भीष्मो रणे क्रुद्धो निहनिष्यति सोमकान् ॥ ३४१
दुर्योधनस्य तच्छ्रुत्वा रात्रौ विलपितं बहु ।
मन्यमानः स तं राजन् प्रत्यादेशमिवात्मनः ॥ ३४२
निर्वेदं परमं गत्वा विनिंद्य परवाच्यताम् ।
दीर्घं दध्यौ शांतनवो योद्धुकामोऽर्जुनं रणे ॥ ३४३
दुर्योधनो महाराज दुःशासनमचोदयत् ।
दुःशासन रथास्तूर्णं युज्यंतां भीष्मरक्षिणः ॥ ३४४
इदं हि समनुप्राप्तं वर्षपूगाभिचिंतितम् ।
पांडवानां ससैन्यानां वधो राज्यस्य चागमः ॥ ३४५
अब्रवीद्धि विशुद्धात्मा नाहं हन्यां शिखंडिनम् ।
स्त्रीपूर्वको ह्यसौ राजंस्तस्माद्वर्ज्यो मया रणे ॥ ३४६
तत्र सर्वात्मना मन्ये गांगेयस्यैव पालनम् ।
अरक्ष्यमाणं हि वृको हन्यात्सिंहं महाहवे ॥ ३४७
एतच्छ्रुत्वा तु ते सर्वे दुर्योधनवचस्तदा ।
सर्वतो रथवंशेन गांगेयं पर्यवारयन् ॥ ३४८
पुत्राश्च तव गांगेयं परिवार्य ययुर्यदा ।
कंपयंतो भुवं द्यां च क्षोभयंतश्च पांडवान् ॥ ३४९
भीष्मं तु रथवंशेन दृष्ट्वा समभिसंवृतम् ।
अर्जुनो रथिनां श्रेष्ठो धृष्टद्युम्नमुवाच ह ॥ ३५०
शिखंडिनं नरव्याघ्रं भीष्मस्य प्रमुखे नृप ।
स्थापायस्वाद्य पांचाल्य तस्य गोप्ताहमित्युत ॥ ३५१
ततः शब्देन महता प्रचकंपे वसुंधरा ।
पक्षिणश्च महाघोरं व्याहरंतो विबभ्रमुः ॥ ३५२
सप्रभश्चोदितः सूर्यो निष्प्रभः समपद्यत ।
ववुश्च वातास्तुमुलाः शंसंतः सुमहद्भयम् ॥ ३५३
तत्रासीत्सुमहद्युद्धं तव तेषां च संकुलम् ।
नराश्वरथनागानां यमराष्ट्रविवर्धनम् ॥ ३५४

रथी रथिनमासाद्य प्राहिणोद्यमसादनम् ।
तथेतरान् समासाद्य नरनागाश्वसादिन. ॥ ३५५
रथास्तु रतिभिर्हीना हतसारथयस्तथा ।
विप्रद्रुताश्च समरे दिशो जग्मुः समंततः ॥ ३५६
दंतिनश्च नरश्रेष्ठ हीना परमसादिभि. ।
मृन्दतः स्वान्यनीकानि निपेतुः सर्वशब्दगाः ॥ ३५७
अश्वारोहान् हतैरश्वैर्गृहीतासीन् समंततः ।
द्रवमाणानपश्याम द्राव्यमाणाश्च संयुगे ॥ ३५८
गजो गजं समासाद्य द्रवमाणं महाहवे ।
ययौ प्रमृद्य तरसा पादातान् वाजिनस्तथा ॥ ३५९
तस्मिन् रौद्रे तथा युद्धे वर्तमाने महाभये ।
प्रावर्तत नदी घोरा शोणितान्त्रतरंगिणी ॥ ३६०
असिसंघातसंबाधा केशशैवलशाड्वला ।
रथह्रदा शरावर्ता हयमीना दुरासदा ॥ ३६१
शीर्षोपलसमाकीर्णा हस्तिग्राहसमाकुला ।
कवचोष्णीषफेनौघा धनुर्वेगासिकच्छपा ॥ ३६२
सेनापतिस्तु समरे प्राह सेनां महारथः ।
अभिद्रवत गांगेयं सोमकाः सृंजयै. सह ॥ ३६३
सेनापतिवचः श्रुत्वा सोमकाः सृंजयाश्च ते ।
अभ्यद्रवंत गांगेयं शस्त्रवृष्ट्या समाहिता ॥ ३६४
वध्यमानस्ततो राजन् पिता शांतनवस्तव ।
अमर्षवशमापन्नो योधयामास सृंजयान् ॥ ३६५
तस्य कीर्तिमतस्तात पुरा रामेण धीमता ।
संप्रदत्तास्त्रशिक्षा वै परानीकविनाशिनी ॥ ३६६
स तां शिक्षामधिष्ठाय कुर्वन् परबलक्षयम् ।
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः ॥ ३६७
भीष्मो दशसहस्राणि जघान परवीरहा ।
गजानामयुतं हत्वा हताः सप्त महारथा. ॥ ३६८
हत्वा पंचसहस्राणि रथानां प्रपितामह. ।
नराणां च महायुद्धे सहस्राणि चतुर्दश ॥ ३६९

दंतिनां च सहस्राणि हयानामयुतं पुनः ।
शिक्षाबलेन विहतं पित्रा तव विशांपते ॥ ३७०
ततः सर्वमहीपानां क्षपयित्वा वरूथिनीम् ।
विराटस्य प्रियो भ्राता शतानीको निपातितः ॥ ३७१
शतानीकं च समरे हत्वा भीष्मः प्रतापवान् ।
सहस्राणि महाराज राज्ञां भल्लैरपातयत् ॥ ३७२
ये च केचन पार्थानामभियाता धनंजयम् ।
राजानो भीष्ममासाद्य गतास्ते यमसादनम् ॥ ३७३
एवं दश दिशो भीष्मः शरजालैः समंततः ।
अतीत्य सेनां पार्थानामवतस्थे चमूमुखे ॥ ३७४
स कृत्वा सुमहत्कर्म तस्मिन् वै दशमेऽहनि ।
सेनयोरंतरेऽतिष्ठत् प्रगृहीतशरासनः ।
न चैनं पार्थिवाः केचिद्रणे शक्ता निरीक्षितुम् ॥ ३७५
तथा चैनं पराक्रांतमालोक्य मधुसूदनः ।
उवाच देवकीपुत्रः प्रीयमाणं धनंजयम् ॥ ३७६
एष शातनवो भीष्मः सेनयोरंतरे स्थितः ।
सन्निहत्य बलादेन विजयस्ते भविष्यति ॥ ३७७
बलात्संस्थंभयस्वैनं यत्रैषा भिद्यते चमूः ।
न हि भीष्मशरानन्यः सोढुमुत्सहते विभो ॥ ३७८
ततस्तस्मिन् क्षणे राजंश्चोदितो वानरध्वजः ।
सध्वजं सरथं साश्वं भीष्ममंतर्दधे शरैः ॥ ३७९
स चापि कुरुमुख्यानामृषभः पांडवेरितान् ।
शरव्रातैःशरव्रातान् बहुधा विददार तान् ॥ ३८०
ततः शिखंडी वेगेन प्रगृह्य परमायुधम् ।
भीष्ममेवाभिदुद्राव रक्ष्यमाणः किरीटिना ॥ ३८१
सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः ।
विराटो द्रुपदश्चैव माद्रीपुत्रौ च पांडवौ ॥ ३८२
दुद्रुवुर्भीष्ममेवाजौ रक्षिता दृढधन्विना ।
अभिमन्युश्च समरे द्रौपद्याः पंच चात्मजाः ॥ ३८३
ते सर्वे दृढधन्वानः संयुगेष्वपलायिनः ।
बहुधा भीष्ममानर्च्छुर्मार्गणैः क्षतमार्गणैः ॥ ३८४

नाभिसंधत्त पांचाल्ये स्मयमानो मुहुर्मुहुः ।
स्त्रीत्वं तस्य तु संस्मृत्य भीष्मो बाणञ् शिखंडिने ॥ ३८५
अताडयन् रणे भीष्मं सहिताः सर्वसृंजयाः ॥
स विशीर्णतनुत्राणः पीडितो बहुभिस्तदा । ३८६
न विव्यथे तथा भीष्मो भिद्यमानेषु मर्मसु ॥
संदीप्तशरचापाग्निरस्त्रप्रसृतमारुतः । ३८७
विवृत्त्य रथसंघानामंतरेण विनिःसृतः ।
दृश्यते स्म नरेंद्राणां पुनर्मध्यगतश्चरन् ॥ ३८८
ततः किरीटी संरब्धो भीष्ममेवाभ्यधावत ।
शिखंडिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् ॥ ३८९
शिखंडी तु रणे श्रेष्ठो रक्ष्यमाणः किरीटिना ।
अविध्यद्दशभिर्भीष्मं छिन्नधन्वानमाहवे ॥ ३९०
सारथिं दशभिश्चास्य ध्वजं चैकेन चिच्छिदे ॥ ३९१
सोऽन्यत्कार्मुकमादाय गांगेयो वेगवत्तरम् ।
तदप्यस्य शितैर्बाणैस्त्रिभिश्चिच्छेद फाल्गुनः ॥ ३९२
एवं स पाडवः क्रुद्ध आत्तमात्त पुनः पुनः ।
धनुश्चिच्छेद भीष्मस्य सव्यसाची परंतपः ॥ ३९३
शिखंडी तु महाराज भारतानां पितामहम् ।
आजघानोरसि क्रुद्धो नवभिर्निशितैः शरैः ॥ ३९४
स तेनाभिहतः संख्ये भीष्मः कुरुपितामहः ।
नाकम्पत महाराज क्षितिकंपे यथाचलः ॥ ३९५
ततः प्रहस्य बीभत्सुर्व्याक्षिपन् गांडिवं धनुः ।
गांगेयं पंचविंशत्या क्षुद्रकाणां समार्पयत् ॥ ३९६
शिखंडी तु रणे बाणान् यान् मुमोच महारथः ।
न चक्रुस्ते रुजं तस्य रुक्मपुंखाः शिलाशिताः ॥ ३९७
सोऽतिविद्धो महेष्वासो दुःशासनमभाषत ॥ ३९८
एष पार्थो रणे क्रुद्धः पांडवानां महारथः ।
शरैरनेकसाहस्रैर्मामेवाभ्यहनद्रणे ।
न चैष समरे शक्यो जेतुं वज्रभृता अपि ॥ ३९९

वज्राशनिसमस्पर्शा अर्जुनेन शरा युधि ।
मुक्ताः सर्वे व्यवच्छिन्ना नेमे बाणाः शिखंडिनः ॥ ४००
ब्रह्मदंडसमस्पर्शा वज्रवेगदुरासदाः ।
मम प्राणानारुजन्ति नेमे बाणाः शिखंडिनः ॥ ४०१
अर्जुनस्य इमे बाणा नेमे बाणाः शिखंडिनः ।
कृन्तन्ति मम गात्राणि माघमासे गवा इव ॥ ४०२
सर्वे ह्यपि न मे दुःखं कुर्युरन्ये नराधिपाः ।
वीरं गांडीवधन्वानमृते जिष्णु कपिध्वजम् ॥ ४०३
इति ब्रुवञ्शान्तनवो दिधक्षुरिव पांडवान् ।
शक्ति भीष्मः स पार्थाय ततश्चिक्षेप भारत ॥ ४०४
तामस्य विशिखैश्छित्वा त्रिधा त्रिभिरपातयत् ।
पश्यतां कुरुवीराणां सर्वेषां तव भारत ॥ ४०५
चर्माथादत्त गांगेयो जातरूपपरिष्कृतम् ।
खड्गं चान्यतरप्रेप्सुर्मृत्योरग्रे जयाय वा ॥ ४०६
तस्य तच्छतधा चर्म व्यधमत्सायकैस्तथा ।
रथादनवरूढस्य तदद्भुतमिवाभवत् ॥ ४०७
ततस्तमेकं बहवः परिवार्य समंततः ।
परिकाल्य कुरून्सर्वाञ्शरवर्षैरवाकिरन् ॥ ४०८
न तस्यासीदनिर्भिन्नं गात्रे द्व्यंगुलमंतरम् ।
एवंभूतस्तव पिता शरैर्विशकलीकृतः ॥ ४०९
चिताग्रैः फल्गुनेनाजौ प्राक्शिराः प्रापतद्रथात् ।
किंचिच्छेषे दिनकरे पुत्राणां तव पश्यताम् ॥ ४१०
हाहेति दिवि देवानां पार्थिवानां च भारत ।
पतमाने रथाद्भीष्मे बभूव सुमहास्वनः ॥ ४११
संपतंतमभिप्रेक्ष्य महात्मानं पितामहम् ।
सह भीष्मेण सर्वेषां प्रापतन्हृदयानि नः ॥ ४१२
स पपात महाबाहुर्वसुधामनुनादयन् ।
इंद्रध्वज इवोत्सृष्टः केतुः सर्वधनुष्मताम् ॥ ४१३
धरणीं न स पस्पर्श शरसंघैः समावृतः ।
रथात्प्रपतितं चैनं दिव्यो भावः समाविशत् ॥ ४१४
अभ्यवर्षच्च पर्जन्यः प्राकंपत च मेदिनी ॥ ४१५

पतन् स ददृशे चापि दक्षिणेन दिवाकरम् ।
संज्ञां चोपालभद्वीरः कालं संचिंत्य भारत ॥ ४१६
धारयामास च प्राणान् पतितोऽपि महीतले ।
उत्तरायणमन्विच्छन् भीष्मः कुरुपितामहः ॥ ४१७
एवं कुरूणां पतिते शृंगे भीष्मे महौजसि ।
पाडवाः सृंजयाश्चैव सिंहनादं प्रचक्रिरे ॥ ४१८
संमोहश्चैव तुमुलः कुरूणामभवत्तदा ।
कृपदुर्योधनमुखा निश्वस्य रुरुदुस्तदा ॥ ४१९
सीमावृक्षे निपतिते कुरूणां समितिंजये ।
सेनयोरुभयो राजन् क्षत्रियान् भयमाविशत् ॥ ४२०
दृष्ट्वा च पतितं भीष्मं पुत्रो दुःशासनस्तव ।
उत्तमं जवमास्थाय द्रोणानीकमुपाद्रवत् ॥ ४२१
ततो द्रोणाय निहतं भीष्ममाचष्ट कौरवः ।
द्रोणस्तथाऽप्रियं श्रुत्वा मुमोह भरतर्षभ ॥ ४२२
स संज्ञामुपलभ्याशु भारद्वाजः प्रतापवान् ।
निवारयामास तदा स्वान्यनीकानि मारिष ॥ ४२३
निवृत्तेषु च सैन्येषु पारपर्येण सर्वशः ।
निर्मुक्तकवचाः सर्वे भीष्ममीयुर्नराधिपाः ॥ ४२४
व्युपरम्य ततो युद्धाद्योधाः शतसहस्रशः ।
उपतस्थुर्महात्मानं प्रजापतिमिवामराः ॥ ४२५
ते तु भीष्मं समासाद्य शयानं भरतर्षभ ।
अभिवाद्यावतिष्ठन्त पांडवाः कुरुभिः सह ॥ ४२६
अथ पांडून् कुरूंश्चैव प्रणिपत्याग्रतः स्थितान् ।
अभ्यभाषत धर्मात्मा भीष्मः शांतनवस्तदा ॥ ४२७
स्वागतं वो महाभागाः स्वागतं वो महारथाः ।
तुष्यामि दर्शनाच्चाहं युष्माकममरोपमाः ॥ ४२८
अभिमंत्र्याथ तानेवं शिरसा लंबताऽब्रवीत् ।
शिरो मे लंबतेत्यर्थमुपधानं प्रदीयताम् ॥ ४२९
ततो नृपाः समाजह्रुस्तनूनि च मृदूनि च ।
उपधानानि मुख्यानि नैच्छत्तानि पितामहः ॥ ४३०

अथाब्रवीन्नरव्याघ्रः प्रहसन्निव तान्नृपान् ।
नैतानि वीरशय्यासु युक्तरूपाणि पार्थिवाः ॥ ४३१
फाल्गुनोपि तथेत्युक्त्वा व्यवसायमरोचयत् ।
गृह्यानुमंत्र्य गांडीवं शरान् सन्नतपर्वणः ॥ ४३२
अनुमान्य महात्मानं भारतानां महारथम् ।
त्रिभिस्तीक्ष्णैर्महावेगैरन्वगृह्णाच्छिरः शरैः ॥ ४३३
भीष्म उ०—पश्यध्वमुपधानं मे पांडवेनाभिसंधितम् ।
शेष्येहमस्या शय्यायां यावदावर्तन रवेः ॥ ४३४
दिशं वैश्रवणाक्रान्तां यदा गंता दिवाकरः ॥
विमोक्ष्येहं तदा प्राणान् सुहृदः सुप्रियानपि ॥ ४३५
परिखा खन्यतामत्र ममावसदने नृपाः ।
उपासिष्ये विवस्वंतमेव शरशताचितः ॥ ४३६
उपातिष्ठन्नथो वैद्याः शल्योद्धरणकोविदाः ।
सर्वोपकरणैर्युक्ताः कुशलैः साधु शिक्षिताः ॥ ४३७
तान् दृष्ट्वा जाह्नवीपुत्रः प्रोवाच तनयं तव ।
धनं दत्वा विसृज्यंतां पूजयित्वा चिकित्सकाः ॥ ४३८
एवं गते मयीदानीं वैद्यैः कार्यमिहास्ति किम् ।
क्षत्रधर्मे प्रशस्तां हि प्राप्तोऽस्मि परमां गतिम् ॥ ४३९
तच्छ्रुत्वा वचनं तस्य पुत्रो दुर्योधनस्तव ।
वैद्यान् विसर्जयामास पूजयित्वा यथार्हतः ॥ ४४०
विधाय रक्षा भीष्मस्य सर्व एव समततः ।
वीराः स्वाशिबिराण्येव ययुस्ते परमातुराः ।
निवेशायाभ्युपागच्छन् सायाह्ने रुधिरोक्षिताः ॥ ४४१
व्युष्टायां तु महाराज शर्वर्यां सर्वपार्थिवाः ।
पांडवा धार्तराष्ट्राश्च उपातिष्ठन् पितामहम् ॥ ४४२
तं वीरशयने वीर शयानं कुरुसत्तमम् ।
अभिवाद्योपतस्थुर्वै क्षत्रियाः क्षत्रियर्षभम् ॥ ४४३
तृप्तः शांतनवश्चापि राजन् बीभत्सुमब्रवीत् ।
सर्वपार्थिववीराणां संनिधौ पूजयन्निव ॥ ४४४
धनुर्धराणामेकस्त्वं पृथिव्यां प्रवरो नृषु ॥ ४४५

मनुष्या जगति श्रेष्ठाः पक्षिणां पतगेश्वरः ।
जातीनां ब्राह्मणः श्रेष्ठः श्रेष्ठस्त्वमसि धन्विनाम् ॥ ४४६

दृष्टं दुर्योधनेतत्ते यथा पार्थेन धीमता ।
जलस्य धारा जनिता शीतस्यामृतगंधिनः ।
एतस्य कर्ता लोकेऽस्मिन्नान्यः कश्चन विद्यते ॥ ४४७

आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवम् ।
ऐन्द्रं पाशुपतं चैव पारमेष्ठ्यं प्रजापतेः ॥ ४४८

सर्वस्मिन् मानुषे लोके वेत्त्येको हि धनंजय. ।
कृष्णो वा देवकीपुत्रो नान्यो वेद ह कश्चन ॥ ४४९

अशक्यः पांडवस्तात युद्धे जेतुं सुरासुरैः ।
अमानुषाणि कर्माणि यस्यैतानि महात्मनः ॥ ४५०

तेन सत्ववता संख्ये शूरेणाहवशोभिना ।
कृतिना समरे राजन् संधिर्भवतु मा चिरम् ॥ ४५१

यावन्न ते चमूः सर्वा शरैः सन्नतपर्वभिः ।
नाशयत्यर्जुनस्तावत्संधिस्ते तात युज्यताम् ॥ ४५२

त्यक्त्वा मन्युमुपशाम्यस्व पार्थैः पर्याप्तमेतद्यत्कृतं फाल्गुनेन ।
भीष्मस्यांतादस्तु वः सौहृदं च जीवंतु शेषा. साधु राजन् प्रसीद ॥ ४५३

राज्यस्यार्धं दीयतां पांडवानामिंद्रप्रस्थं धर्मराजोऽभियातु ।
ममावसानाच्छांतिरस्तु प्रजानां संगच्छंतां पार्थिवाः प्रीतिमंतः ॥ ४५४

एतद्वाक्यं सौहृदादापगेयो मध्ये राज्ञां भारतं श्रावयित्वा ।
तूष्णीमासीच्छल्यसंतप्तमर्मा योज्यात्मानं वेदनां सन्नियम्य ॥ ४५५

धर्मार्थसहितं वाक्यं श्रुत्वा हितमनामयम् ।
नारोचयत पुत्रस्ते मुमूर्षुरिव भेषजम् ॥ ४५६

ततस्ते पार्थिवाः सर्वे जग्मुः स्वानालयान् पुनः ।
तूष्णींभूते महाराज भीष्मे शंतनुनंदने ॥ ४५७

इति श्रीसंक्षिप्तमहाभारते भीष्मपर्व समाप्तम् । श्लो सं. ४५७

---

# ७ द्रोणपर्व.

## १

वै० उ०—निहतं पितरं श्रुत्वा धृतराष्ट्रो जनाधिपः ।
लेभे न शांतिं कौरव्यश्चिंताशोकपरायणः ॥ १
तस्य चिंतयतो दुःखमनिशं पार्थिवस्य तत् ।
आजगाम विशुद्धात्मा पुनर्गावल्गणिस्तदा ॥ २
सं० उ०—पतिते भरतश्रेष्ठे बभूव कुरुवाहिनी ।
द्यौरिवापेतनक्षत्रा हीनं खमिव वायुना ॥ ३
कर्णं हि कुरवोऽस्मार्षुः स हि देवव्रतोपमः ।
सर्वशस्त्रभृतां श्रेष्ठं रोचमानमिवातिथिम् ॥ ४
क० उ०—अयं हि सर्वयोधानामाचार्यः स्थविरो गुरुः ।
युक्तः सेनापतिं कर्तुं द्रोणः शस्त्रभृतां वरः ॥ ५
को हि तिष्ठति दुर्धर्षे द्रोणे शस्त्रभृतां वरे ।
सेनापतिः स्यादन्योऽस्माच्छुक्रांगिरसदर्शनात् ॥ ६
कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा ।
सेनामध्यगतं द्रोणमिदं वचनमब्रवीत् ॥ ७
वर्णश्रैष्ठ्यात्कुलोत्पत्त्या श्रुतेन वयसा धिया ।
वीर्याद्दाक्ष्यादधृष्यत्वादर्थज्ञानान्नयाज्जयात् ॥ ८
तपसा च कृतज्ञत्वाद्वृद्धः सर्वगुणैरपि ।
युक्तो भवत्समो गोप्ता राज्ञामन्यो न विद्यते ॥ ९
स भवान्पातु नः सर्वान् देवानिव शतक्रतुः ।
भवन्नेत्राः पराञ् जेतुमिच्छामो द्विजसत्तम ॥ १०
एवमुक्तो ततो द्रोणं जयेत्यूचुर्नराधिपाः ।
सिंहनादेन महता हर्षयतस्तवात्मजम् ॥ ११
द्रो० उ०—वेदं षडंगं वेदाहमर्थविद्यां च मानवीम् ।
त्रैयंबकमथेष्वस्त्रं शस्त्राणि विविधानि च ॥ १२
ये चाप्युक्ता मयि गुणा भवद्भिर्जयकांक्षिभिः ।
चिकीर्षुस्तानहं सर्वान् योधयिष्यामि पांडवान् ॥ १३
स एवमभ्यनुज्ञातश्चक्रे सेनापतिं ततः ।
द्रोणं तव सुतो राजन् विधिदृष्टेन कर्मणा ॥ १४

ततो वादित्रघोषेण शंखानां च महास्वनैः ।
प्रादुरासीत्कृते द्रोणे हर्षः सेनापतौ तदा ॥ १५
सेनापत्यं तु संप्राप्य भारद्वाजो महारथः ।
युयुत्सुर्व्यूह्य सैन्यानि प्रायात्तव सुतैः सह ॥ १६
सैंधवश्च कलिंगश्च विकर्णश्च तवात्मजः ।
दक्षिणं पार्श्वमास्थाय समतिष्ठंत दंशिताः ॥ १७
प्रपक्षः शकुनिस्तेषां प्रवरैर्हयसादिभिः ।
ययौ गांधारकैः सार्धं विमलप्रासयोधिभिः ॥ १८
कृपश्च कृतवर्मा च चित्रसेनो विविंशतिः ।
दुःशासनमुखा यत्ताः सव्यं पक्षमपालयन् ।
तेषां प्रपक्षाः कांबोजाः सुदक्षिणपुरःसराः ॥ १९
प्रवरः सर्वयोधानां बलेषु बलमादधत् ।
ययौ वैकर्तनः कर्णः प्रमुखे सर्वधन्विनाम् ॥ २०
न भीष्मव्यसनं कश्चिद्दृष्ट्वा कर्णममन्यत ।
विशोकाश्चाभवन् सर्वे राजानः कुरुभिः सह ॥ २१
भीष्मेण तु रणे पार्थाः पालिता बाहुशालिना ।
तास्तु कर्णः शरैस्तीक्ष्णैर्नाशयिष्यति संयुगे ॥ २२
एवं ब्रुवंतस्तेऽन्योन्यं हृष्टरूपा विशांपते ।
राधेयं पूजयंतश्च प्रशंसंतश्च निर्ययुः ॥ २३
अस्माकं शकटव्यूहो द्रोणेन विहितोऽभवत् ।
परेषां क्रौंच एवासीत् व्यूहो राजन् महात्मनाम् ॥ २४
व्यूहप्रमुखतस्तेषां तस्थतुः पुरुषर्षभौ ।
वानरध्वजमुच्छ्रित्य विष्वक्सेनधनंजयौ ॥ २५
ततः प्रववृते युद्धं परस्परवधैषिणाम् ।
कुरुपांडवसैन्यानां शब्देनापूरयन् जगत् ॥ २६
संरक्ष्यमाणां तां दृष्ट्वा पांडवैर्वाहिनीं रणे ।
व्यावृत्य चक्षुषी कोपाद्भारद्वाजोऽन्ववैक्षत ॥ २७
स तीव्रं कोपमास्थाय रथे समरदुर्जयः ।
व्यधमत्पांडवानीकमभ्राणीव सदागतिः ॥ २८
रथानश्वान्नरान्नागानभिधावंश्चितस्ततः ।
चचारोन्मत्तवद्द्रोणो वृद्धोऽपि तरुणो यथा ॥ २९

तस्य शोणितदिग्धांगाः शोणास्तवातरंहसः ।
आजानेया हया राजन्नविश्रांता ध्रुवं ययुः ॥ ३०

उत्कृत्य च शिरांस्युग्रान् बाहूनपि सुभूषणान् ।
चक्रेऽचिरेण च द्रोणो महीं शोणितकर्दमाम् ॥ ३१

एवं रुक्मरथः शूरो हत्वा शतसहस्रशः ।
पांडवाना रणे योधान् पार्षतेन निपातितः ॥ ३२

अक्षौहिणीमभ्यधिकां शूराणामनिवर्तिनाम् ।
निहत्य पश्चाद्धृतिमानगच्छत्परमां गतिम् ॥ ३३

ततो निनादो भूतानामाकाशे समजायत ।
सैन्याना च ततो राजन्नाचार्ये निहते युधि ॥ ३४

पांडवास्तु जय लब्ध्वा सिंहनादान् प्रचक्रिरे ।
सिंहनादेन महता समकंपत मेदिनी ॥ ३५

धृ० उ०—किंकुर्वाणं रणे द्रोण जघ्नुः पांडवसृंजयाः ।
तथा निपुणमस्त्रेषु सर्वशस्त्रभृतामपि ॥ ३६

रथभंगो बभूवास्य धनुर्वाशीर्यतास्यतः ।
प्रमत्तो वा भवद्द्रोणस्ततो मृत्युमुपेयिवान् ॥ ३७

पांचालपुत्रो न्यवधीद्दिव्यास्त्रधरमच्युतम् ।
व्यक्तं हि दैवं बलवत्पौरुषादिति मे मतिः ॥ ३८

न नूनं परदुःखेन म्रियते कोऽपि संजय ।
यत्तं द्रोणमहं श्रुत्वा हतं जीवामि मंदधीः ॥ ३९

तस्मादपरिहार्येऽर्थे संप्राप्ते कृच्छ्र उत्तमे ।
अपारणीये दुश्चित्त्ये यथाभुत प्रचक्ष्व मे ॥ ४०

---

## २

सं० उ०—हंत ते कथयिष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
यथा स न्यपतद्द्रोणः सूदितः पांडुसृंजयैः ॥ ४१

सेनापतित्वं संप्राप्य भारद्वाजो महारथः ।
मध्ये सर्वस्य सैन्यस्य पुत्रं ते वाक्यमब्रवीत् ॥ ४२

यत्कौरवाणामृषभादापगेयादनंतरम् ।
सेनापत्येन हे राजन् मामद्य कृतवानसि ॥ ४३

सदृशं कर्मणस्तस्य फलं प्राप्नुहि भारत ।
करोमि कामं कं तेऽद्य प्रवृणीष्व यमिच्छसि ॥ ४४

दु० उ०—ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम् ।
गृहीत्वा रथिनां श्रेष्ठं मत्समीपमिहानय ॥ ४५

द्रो० उ०—धन्यः कुंतीसुतो राजन् यस्य ग्रहणमिच्छसि ।
न वधार्थं सुदुर्धर्ष वरमद्य प्रयाचसे ॥ ४६

आहोस्विद् धर्मराजस्य द्वेष्टा तस्य न विद्यते ।
यदिच्छसि त्वं जीवंतं कुलं रक्षसि चात्मनः ॥ ४७

द्रोणेन चैवमुक्तस्य तव पुत्रस्य भारत ।
सहसा निःसृतो भावो योऽस्य नित्यं हृदि स्थितः ॥ ४८

नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि ।
तस्मात्तव सुतो राजन् प्रहृष्टो वाक्यमब्रवीत् ॥ ४९

वधे कुंतीसुतस्याजौ नाचार्य विजयो मम ।
हते युधिष्ठिरे पार्था हन्युः सर्वान् हि नो ध्रुवम् ॥ ५०

सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्जिते ।
पुनर्यास्यंत्यरण्याय पांडवास्तमनुव्रताः ॥ ५१

तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽर्थतत्त्ववित् ।
तं वरं सांतरं तस्मै ददौ संचिंत्य बुद्धिमान् ॥ ५२

न चेद्युधिष्ठिरं वीरः पालयत्यर्जुनो युधि ।
मन्यध्वं पांडवश्रेष्ठमानीतं वशमात्मनः ॥ ५३

सांतर तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे ।
गृहीतं तममन्यंत तव पुत्राः सुबालिशाः ॥ ५४

ततः स पांडवानीके जनयन् सुमहद्भयम् ।
व्यचरत्पृतनां द्रोणो दहन् कक्षामिवानलः ॥ ५५

स वीरः सत्यवान् प्राज्ञो धर्मनित्यः सदा पुनः ।
युगांतकालवद्घोरां रौद्रां प्रावर्तयन्नदीम् ॥ ५६

दृष्ट्वा तमेकं समरे विचरंतमभीतवत् ।
सहिताः सर्वराजानः परिवव्रुः समन्ततः ॥ ५७

तान् प्रमृज्य शरव्रातैः पांडवानां महारथान् ।
युधिष्ठिररथाभ्याशे तस्थौ मृत्युरिवांतकः ॥ ५८

ततोऽभवन्महाशब्दो राजन् यौधिष्ठिरे बले ।
हतो राजेति योधानां समीपस्थे यतव्रते ॥ ५९
एवं संजल्पतां तेषां तावकानां महारथः ।
आयाज्जवेन कौंतेयो रथघोषेण नादयन् ॥ ६०
ततः किरीटी सहसा द्रोणानीकमुपाद्रवत् ।
छादयन्निषुजालेन महता मोहयन्निव ॥ ६१
शीघ्रमभ्यस्यतो बाणान् संदधानस्य चानिशम् ।
नांतरं ददृशे कश्चित्कौंतेयस्य यशस्विनः ॥ ६२
ततोऽवहारं चक्रुस्ते द्रोणदुर्योधनादयः ।
तान् विदित्वा पुनस्त्रस्तानयुद्धमनसः परान् ।
स्वान्यनीकानि बीभत्सुः शनकैरवहारयत् ॥ ६३
एवं स्वशिबिरं प्रायाज्जित्वा शत्रून् धनंजयः ।
पृष्ठतस्तस्य सैन्यानां मुदितो वै सकेशवः ॥ ६४

---

## ३

परिणाम्य निशां तां तु भारद्वाजो महारथः ।
उक्त्वा सुबहु राजेंद्र वचनं वै सुयोधनम् ॥ ६५
विधाय योगं पार्थेन संसप्तकगणैः सह ।
निष्क्रांते च तदा पार्थे संसप्तकरथं प्रति ॥ ६६
व्यूढानीकस्ततो द्रोणः पांडवानां महाचमूम् ।
अभ्ययाद्भरतश्रेष्ठ धर्मराजजिघृक्षया ॥ ६७
व्यूढं दृष्ट्वा सुपर्णं तु भारद्वाजकृतं तदा ।
व्यूहेन मंडलार्धेन प्रत्यव्यूहद्युधिष्ठिरः ॥ ६८
वर्तमाने तथा युद्धे घोररूपे भयंकरे ।
मोहयित्वा परान् द्रोणो युधिष्ठिरमुपाद्रवत् ॥ ६९
ततो हलहलाशब्द आसीद्यौधिष्ठिरे बले ।
जिघृक्षति महासिंहे गजानामिव यूथपम् ॥ ७०
दृष्ट्वा द्रोणं ततः शूरः सत्यजित्सत्यविक्रमः ।
युधिष्ठिरमभिप्रेप्सुमाचार्यं समुपाद्रवत् ॥ ७१
ततः सत्यजितं तीक्ष्णैर्दशभिर्मर्मभेदिभिः ।
अविध्यच्छीघ्रमाचार्यश्छित्वास्य सशरं धनुः ॥ ७२

स शीघ्रतरमादाय धनुरन्यत्प्रतापवान् ।
द्रोणमभ्यहनद्राजंस्त्रिंशता कंकपत्रिभिः ॥ ७३
स सत्याजितमालोक्य तथोदीर्णं महाहवे ।
अर्धचंद्रेण चिच्छेद शिरस्तस्य महात्मनः ॥ ७४
तस्मिन् हते महामात्रे पाचालानां महारथे ।
अपायाज्जवनैरश्वैर्द्रोणात्त्रस्तो युधिष्ठिरः ॥ ७५
पांचालाः केकया मत्स्याश्चेदिकारुपकोशलाः ।
युधिष्ठिरमभीप्संतो दृष्ट्वा द्रोणमुपाद्रवन् ॥ ७६
द्रोणस्तु पांडवानीके चकार कदनं महत् ।
यथा दैत्यगणे विष्णुः सुरासुरनमस्कृतः ॥ ७७
तथा तेषु निवृत्तेषु प्रत्युद्यातेषु भागश ।
स्वयमभ्यद्रवद्भीमं नागानीकेन ते सुतः ॥ ७८
ते गजा गिरिसंकाशाः क्षरतः सर्वतो मदम् ।
भीमसेनस्य नाराचैर्विमुखा विमर्दीकृताः ॥ ७९
ततः क्षणेन क्षितिपं क्षतजप्रतिमेक्षणः ।
क्षयं निनीषुर्निशितैर्भीमो विव्याध पत्रिभिः ॥ ८०
दुर्योधनं पीड्यमानं दृष्ट्वा भीमेन मारिष ।
चिक्षोभयिषुरभ्यागादंगो मातंगमास्थितः ॥ ८१
तमापतंतं नागेंद्रमंबुदप्रतिमस्वनम् ।
कुंभांतरे भीमसेनो नाराचैरर्दयद्भृशम् ॥ ८२
तेष्वनीकेषु भद्रेषु विद्रवत्सु समंतत ।
प्राग्ज्योतिषस्ततो भीमं कुंजरेण समाद्रवत् ॥ ८३
स नागप्रवरो भीमं सहसा समुपाद्रवत् ।
चरणाभ्यामथो द्वाभ्यां संहतेन करेण च ॥ ८४
व्यावृत्तनयनः क्रुद्धः प्रमथन्निव पांडवम् ।
वृकोदररथं साश्वमविशेषमचूर्णयत् ॥ ८५
पद्भ्यां भीमोप्यथो धावंस्तस्य गात्रेष्वलीयत ।
जानन्नंजलिकावेधं नापक्रामत पांडवः ॥ ८६
गात्राभ्यंतरगो भूत्वा करेणाताडयन्मुहुः ।
लालयामास तं नागं वधाकांक्षिणमव्ययम् ॥ ८७

कुलालचक्रवन्नागस्तदा तूर्णमथाभ्रमत् ।
भीमोऽपि निष्क्रम्य ततः सुप्रतीकाग्रतोऽभवत् ॥ ८८
ग्रीवायां वेष्टयित्वैनं स गजो हंतुमैहत ।
करवेष्टं भीमसेनो भ्रमं दत्वा विमोचयत् ॥ ८९
पुनर्गात्राणि नागस्य प्रविवेश वृकोदरः ।
यावत्प्रतिगजायातं स्वबलस्थमवैक्षत ॥ ९०
भीमोऽपि नागगात्रेभ्यो विनिःसृत्यापयाज्जवात् ।
ततः सर्वस्य सैन्यस्य नादः समभवन्महान् ॥ ९१
तमेकं द्विरदं संख्ये मेनिरे शतशो द्विपान् ।
ते गजस्थेन काल्यंते भगदत्तेन पांडवा ॥ ९२
रजो दृष्ट्वा समुद्भूतं श्रुत्वा च गजनिस्वनम् ।
भगदत्ते विकुर्वाणे कौंतेयः कृष्णमब्रवीत् ॥ ९३
यथा प्राग्ज्योतिषो राजा गजेन मधुसूदन ।
त्वरमाणोऽभिनिष्क्रांतो ध्रुवं तस्यैष निस्वनः ॥ ९४
इन्द्रादनवरः संख्ये गजयानविशारदः ।
प्रथमो गजयोधानां पृथिव्यामिति मे मतिः ॥ ९५
स चापि द्विरदश्रेष्ठः सदाऽप्रतिगजो युधि ।
सर्वशस्त्रातिगः संख्ये कृतकर्मा जितक्लमः ॥ ९६
सोढा शस्त्रनिपातानामाग्निस्पर्शस्य चानघ ।
स पांडवबलं सर्वमद्यैको नाशयिष्यति ॥ ९७
यियासतस्ततः कृष्णः पार्थस्याश्वान् मनोजवान् ।
संप्रैषीद्धेमसंच्छन्नान् द्रोणानीकाय सत्वरान् ॥ ९८
तस्मिन् प्रमथिते सैन्ये भगदत्तो नराधिपः ।
तेन नागेन सहसा धनंजयमुपाद्रवत् ॥ ९९
ततस्तु शरजालेन महताभ्यवकीर्य तौ ।
चोदयामास तन्नागं वधायाच्युतपार्थयोः ॥ १००
तमापतंतं द्विरदं दृष्ट्वा क्रुद्धमिवांतकम् ।
चक्रेऽपसव्यं त्वरितः स्यंदनेन जनार्दनः ॥ १०१
संप्राप्तमपि नेयेष परावृत्तं महाद्विपम् ।
सारोहं मृत्युसात्कर्तुं स्मरन् धर्मं धनंजयः ॥ १०२

तस्य पार्थो धनुश्छित्वा परिवारं निहत्य च ।
लालयन्निव राजानं भगदत्तमयोधयत् ॥ १०३
विद्धस्ततोऽतिव्यथितो वैष्णवास्त्रमुदीरयन् ।
अभिमंत्र्याकुशं क्रुद्धो व्यसृजत्पांडवोरसि ॥ १०४
विसृष्टं भगदत्तेन तदस्त्रं सर्वघाति वै ।
उरसा प्रतिजग्राह पार्थं संच्छाद्य केशवः ॥ १०५
वैजयंत्यभवन्माला तदस्त्रं केशवोरसि ।
पद्मकोशविचित्राढ्या सर्वत्र कुसुमोत्कटा ॥ १०६
ततोऽर्जुनः क्लांतमनाः केशवं प्रत्यभाषत ।
अयुध्यमानस्तुरगान् संयंताऽस्मि तवानघ ।
इत्युक्त्वा पुंडरीकाक्ष प्रतिज्ञां स्वां न रक्षसि ॥ १०७
वा० उ०—चतुर्मूर्तिरहं शश्वल्लोकत्राणार्थमुद्यतः ।
आत्मानं प्रविभज्येह लोकानां हितमादधे ॥ १०८
एका मूर्तिस्तपश्चर्या कुरुते मे भुवि स्थिता ।
अपरा पश्यति जगत् कुर्वाणं साध्वसाधुनी ॥ १०९
अपरा कुरुते कर्म मानुषं लोकमाश्रिता ।
शेते चतुर्थी त्वपरा निद्रां वर्षसहस्रिकीम् ॥ ११०
तं तु कालमनुप्राप्तं विदित्वा पृथिवी तदा
अयाचत वरं यन्मां नरकार्थाय तच्छृणु ॥ १११
देवानां दानवाना च अवध्यस्तनयोऽस्तु मे ।
उपेतो वैष्णवास्त्रेण तन्मे त्वं दातुमर्हसि ॥ ११२
स चाप्यासीत् दुराधर्षो नरकः शत्रुतापनः ।
तस्मात्प्राग्ज्योतिषं प्राप्तं तदस्त्रं पार्थ मामकम् ॥ ११३
नास्यावध्योऽस्ति लोकेषु सेंद्ररुद्रेषु मारिष ।
तन्मया त्वत्कृते ह्येतदन्यथा व्यपलापितम् ॥ ११४
वैरिणं जहि दुर्धर्षं भगदत्तं सुरद्विषम् ॥ ११५
एवमुक्तस्तदा पार्थः केशवेन महात्मना ।
भगदत्तं शितैर्बाणैः सहसा समवाकिरत् ॥ ११६
ततः पार्थो महाबाहुरसंभ्रांतो सहामनः ।
कुंभयोरंतरे नागं नाराचेन समार्पयत् ॥ ११७

स करी भगदत्तेन प्रेर्यमाणो मुहुर्मुहुः ।
न करोति वचस्तस्य दरिद्रस्येव योषितः ॥ ११८
स तु विष्टभ्य गात्राणि दंताभ्यामवनिं ययौ ।
नदन्नार्तस्वनं प्राणानुत्ससर्ज महाद्विपः ॥ ११९
अक्ष्णोरुन्मीलितार्थाय बद्धपट्टो ह्यसौ नृपः ।
देववाक्यात्प्रचिच्छेद शरेण भृशमर्जुनः ॥
छिन्नमात्रेऽशुके तस्मिन् रुद्धनेत्रो बभूव सः ॥ १२०
ततश्चंद्रार्कबिंबेन बाणेनानतपर्वणा ।
बिभेद हृदयं राज्ञो भगदत्तस्य पांडवः ॥ १२१
स हेममाली तपनीयभांडात्पपात नागाद्गिरिसंनिकाशात् ।
सुपुष्पितो मारुतरुग्णवेगो महीधराग्रादिव कर्णिकारः ॥ १२२
ततो बले भृशलुलिते परस्परं निरीक्ष्यमाणे रुधिरौघसंप्लुते ।
दिवाकरेऽस्तं गिरिमस्थिते शनैरुभे प्रयाते शिबिराय भारत ॥ १२३

---

४

ततः प्रभातसमये द्रोणं दुर्योधनोऽब्रवीत् ।
प्रणयादभिमानाच्च द्विषद्वृद्ध्या च दुर्मनाः ॥ १२४
नूनं वयं वध्यपक्षे भवतो द्विजसत्तम ।
तथा हि नाग्रहीः प्राप्तं समीपेऽद्य युधिष्ठिरम् ॥ १२५
इच्छतस्ते न मुच्येत चक्षुःप्राप्तो रणे रिपुः ।
जिघृक्षतो रक्ष्यमाणः सामरैरपि पांडवैः ॥ १२६
वरं दत्वा मम प्रीतः पश्चाद्विकृतवानसि ।
आशाभंगं न कुर्वंति भक्तस्यार्याः कथंचन ॥ १२७
ततो ह्रीतस्तथोक्तः सन् भारद्वाजोऽब्रवीन्नृपम् ।
नार्हसे मां तथा ज्ञातु घटमानं तव प्रिये ॥ १२८
विश्वसृग्यत्र गोविंदः पृतनानीस्तथार्जुनः ।
तत्र कस्य बलं क्रामेदन्यत्र त्र्यंबकात्प्रभोः ॥ १२९
सत्यं तात ब्रवीम्यद्य नैतज्जात्वन्यथा भवेत् ।
अद्यैकं प्रवरं किंचित् पातयिष्ये महारथम् ॥ १३०
तं च व्यूहं विधास्यामि योऽभेद्यस्त्रिदशैरपि ।
योगेन केनचिद्राजन्नर्जुनस्त्वपनीयताम् ॥ १३१

द्रोणेन व्याहृते त्वेवं संसप्तकगणाः पुनः ।
आह्वयन्नर्जुनं संख्ये दक्षिणामभितो दिशम् ॥ १३२
तत्र द्रोणेन विहितो व्यूहो राजन् व्यरोचयत् ।
चक्रव्यूहो महाराज आचार्येणाभिकल्पितः ॥ १३३
तत्र शक्रोपमाः सर्वे राजानो विनिवेशिताः ।
द्वारस्थानेषु विन्यस्ताः कुमाराः सूर्यवर्चसः ॥ १३४
दुर्योधनस्तु राजेन्द्र सैन्यमध्ये व्यवस्थितः ।
कर्णदुःशासनकृपैर्वृतो राजा महारथैः ॥ १३५
प्रमुखे तस्य सैन्यस्य द्रोणावस्थितनायके ।
सिंधुराजस्तथाऽतिष्ठत् श्रीमान् मेरुरिवाचलः ॥ १३६
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
तावकानां परेषां च मृत्यु कृत्वा निवर्तनम् ॥ १३७
तदनीकमनाधृष्यं भारद्वाजेन रक्षितम् ।
पार्थाः समभ्यवर्तंत भीमसेनपुरोगमाः ॥ १३८
पीड्यमानाः शरै राजन् द्रोणचापविनिःसृतैः ।
न शेकुः प्रमुखे स्थातुं भारद्वाजस्य पांडवाः ॥ १३९
तमायांतमभिक्रुद्धं द्रोणं दृष्ट्वा युधिष्ठिरः ।
बहुधा चिंतयामास द्रोणस्य प्रतिवारणम् ॥ १४०
अब्रवीत्परवीरघ्नमभिमन्युमिदं वचः ।
त्वं वार्जुनो वा कृष्णो वा भिंद्यात्प्रद्युम्न एव वा ।
चक्रव्यूहं महाबाहो पंचमो नोपपद्यते ॥ १४१
धनंजयो हि नस्तात गर्हयेदेत्य संयुगात् ।
क्षिप्रमस्त्रं समादाय द्रोणानीकं विशातय ॥ १४२
अभि० उ०—द्रोणस्य दृढमत्युग्रमनीकप्रवरं युधि ।
पितॄणां जयमाकांक्षन्नवगाहेऽविलंबितम् ॥ १४३
उपदिष्टो हि मे पित्रा योगोऽनीकविशातने ।
नोत्सहे हि विनिर्गंतुमहं कस्यांचिदापदि ॥ १४४
भी० उ०—अहं त्वानुगमिष्यामि धृष्टद्युम्नोऽथ सात्यकिः ।
पांचालाः केकया मत्स्यास्तथा सर्वे प्रभद्रकाः ॥ १४५
सकृद्भिन्नं त्वया व्यूहं तत्र तत्र पुनः पुनः ।
वयं प्रध्वंसयिष्यामो निघ्नमाना वरान् वरान् ॥ १४६

सौभद्रस्तद्वचः श्रुत्वा धर्मराजस्य धीमतः ।
अचोदयत यंतारं द्रोणानीकाय भारत ॥ १४७
तेन संचोद्यमानस्तु याहि याहीति सारथिः ।
प्रत्युवाच ततो राजन्नभिमन्युमिदं वचः ॥ १४८
अतिभारोऽयमायुष्मन्नाहितस्त्वयि पांडवैः ।
संप्रधार्य क्षणं बुद्ध्या ततस्त्वं योद्धुमर्हसि ॥ १४९
अभिमन्युश्च तां वाचं कदर्थीकृत्य सारथेः ।
याहीत्येवाब्रवीदेनं द्रोणानीकाय मा चिरम् ॥ १५०
ततः संनोदयामास हयानाशु त्रिहायनान् ।
नातिहृष्टमनाः सूतो हेमभांडपरिच्छदान् ॥ १५१
तमुदीक्ष्य तथायांतं सर्वे द्रोणपुरोगमाः ।
अभ्यवर्तत कौरव्याः पांडवाश्च तमन्वयुः ॥ १५२
तथा निर्मथितं तेन त्र्यगं तव बलं महत् ।
यथासुरबलं घोरं त्र्यंबकेन महौजसा ॥ १५३
युधिष्ठिरो भीमसेनः शिखंडिः सात्यकिर्यमौ ।
धृष्टद्युम्नो विराटश्च द्रुपदश्च सकैकयः ।
धृष्टकेतुश्च संरब्धो मत्स्याश्चाभ्यपतन् रणे ॥ १५४
तेनैवतु पथा यांतः पितरो मातुलैः सह ।
अभ्यद्रवन् परीप्संतो व्यूढानीका प्रहारिणः ॥ १५५
तान् दृष्ट्वा द्रवतः शूरांस्त्वदीया विमुखाऽभवन् । १५६
ततस्तद्विमुखं दृष्ट्वा तव सूनोर्महद्बलम् ।
जामाता तव तेजस्वी संस्तंभयिषुराद्रवत् ।
सैंधवस्य महाराज पुत्रो राजा जयद्रथः ॥ १५७
स तेन वरदानेन दिव्येनास्त्रबलेन च ।
एकः संवारयामास पांडवानामनीकिनीम् ॥ १५८
तस्य ज्यातलघोषेण क्षत्रियान् भयमाविशत् ।
परांस्तु तव सैन्यस्य हर्षः परमकोऽभवत् ॥ १५९
सैंधवेन निरुद्धेषु जयगृद्धिषु पांडुषु ।
सुघोरमभवद्युद्धं त्वदीयानां परैः सह ॥ १६०
प्रविश्याथार्जुनिः सेनां सत्यसंधो दुरासदः ।
व्यक्षोभयत तेजस्वी मकरः सागरं यथा ॥ १६१

आददानस्तु शूराणामायूंष्यभवदार्जुनिः ।
अन्तकः सर्वभूतानां प्राणान् काल इवागते ॥ १६२
संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना लोमहर्षिणः ।
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ॥ १६३
हतान् भ्रातॄन् पितॄन् पुत्रान् सुहृत्संबंधिबांधवान् ।
उत्सृज्योत्सृज्य संजग्मुस्त्वरयंतो हयद्विपान् ॥ १६४
एकस्तु सुखसंवृद्धो बाल्याद्दर्पाच्च निर्भयः ।
इष्वस्त्रविन्महातेजा लक्ष्मणोऽर्जुनिमभ्ययात् ॥ १६५
तमन्वगेवास्य पिता पुत्रगृध्री न्यवर्तत ।
अनुदुर्योधनं चान्ये न्यवर्तत महारथाः ॥ १६६
लक्ष्मणेन तु संगम्य सौभद्रः परवीरहा ।
शरैः सुनिशितैस्तीक्ष्णैर्बाह्वोरुरसि चार्पयत् ॥ १६७
सुदृष्टः क्रियतां लोको ह्यमुं लोकं गमिष्यसि ।
पश्यतां बांधवानां त्वां नयामि यमसादनम् ॥ १६८
एवमुक्त्वा ततो भल्लं सौभद्रः परवीरहा ।
उद्बबर्ह महाबाहुर्निर्मुक्तोरगसन्निभम् ॥ १६९
स तस्य भुजनिर्मुक्तो लक्ष्मणस्य सुदर्शनम् ।
सुनसं शुद्धकेशांतं शिरोऽहार्षीत्सकुंडलम् ॥ १७०
लक्ष्मणं निहतं दृष्ट्वा हाहेत्युचुक्रुशुर्जनाः ॥ १७१
ततो दुर्योधनः क्रुद्धः प्रिये पुत्रे निपातिते ।
हतैनमिति चुक्रोश क्षत्रियान् क्षत्रियर्षभः ॥ १७२
ततो द्रोणः कृपः कर्णो द्रोणपुत्रो बृहद्बलः ।
कृतवर्मा च हार्दिक्य. षड्रथाः पर्यवारयन् ॥ १७३
स कर्णं कर्णिना कर्णे पीतेन च शितेन च ।
फाल्गुनिर्द्विषतां मध्ये विव्याध परमेषुणा ॥ १७४
तथेतरान् महेष्वासान् दशभिर्दशभिः शरैः ।
प्रत्यविध्यदसंभ्रांतस्तदद्भुतमिवाभवत् ॥ १७५
मागधस्य तथा पुत्रं हत्वा षड्भिरजिह्मगैः ।
साश्वं ससूतं तरुणमश्वकेतुमपातयत् ॥ १७६
मार्तिकावातिकं भोजं ततः कुंजरकेतनम् ।
क्षुरप्रेण समुन्मथ्य ननाद विसृजञ् शरान् ॥ १७७

तमाचार्योऽब्रवीत्कर्णं शनकैः प्रहसन्निव ।
अभेद्यमस्य कवचं युवा चाशुपराक्रमः ॥ १७८

उपदिष्टा मया चास्य पितुः कवचधारणा ।
तामेष निखिलां वेत्ति ध्रुवं परपुरंजयः ॥ १७९
शक्यं त्वस्य धनुश्छेत्तुं ज्यां च बाणैः समाहितैः ।
अभीषूंश्च हयांश्चैव तथोभौ पार्ष्णिसारथी ॥ १८०
एतत्कुरु महेष्वास राधेय यदि शक्ष्यसे ।
अथैनं विमुखीकृत्य पश्चात्प्रहरणं कुरु ।
सधनुष्को न शक्योऽयमपि जेतुं सुरासुरैः ॥ १८१
तदाचार्यवचः श्रुत्वा कर्णो वैकर्तनस्त्वरन् ।
अस्यतो लघुहस्तस्य पृषत्कैर्धनुराच्छिनत् ॥ १८२
अश्वानस्यावधीद्भोजो गौतमः पार्ष्णिसारथी ।
शेषास्तु च्छिन्नधन्वानं शरवर्षैरवाकिरन् ॥ १८३
त्वरमाणास्त्वराकाले विरथं षण्महारथाः ।
शरवर्षैरकरुणा बालमेकमवाकिरन् ॥ १८४
स च्छिन्नधन्वा विरथः स्वधर्ममनुपालयन् ।
खड्गचर्मधरः श्रीमानुत्पपात विहायसा ॥ १८५
तस्य द्रोणोऽच्छिनन्मुष्टौ खड्गं मणिमयं त्सरुम् ।
क्षुरप्रेण महातेजास्त्वरमाणः सपत्नजित् ॥ १८६
राधेयो निशितैर्बाणैर्व्यधच्चर्म चोत्तमम् ।
अभिमन्युर्गदापाणिरश्वत्थामनमार्दयत् ॥ १८७
कैकयानां रथान् सप्त हत्वा च दशकुंजरान् ।
दौःशासनिरथं साश्वं गदया समपोथयत् ॥ १८८
ततो दौःशासनिः क्रुद्धो गदामुद्यम्य मारिष ।
अभिदुद्राव सौभद्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥ १८९
तावन्योन्यं गदाग्राभ्यामाहत्य पतितौ क्षितौ ।
इन्द्रध्वजाविवोत्सृष्टौ रणमध्ये परंतपौ ॥ १९०
दौःशासनी रथोत्थाय कुरूणां कीर्तिवर्धनः ।
उत्तिष्ठमानं सौभद्रं गदया मूर्ध्न्यताडयत् ॥ १९१
गदावेगेन महता व्यायामेन च मोहितः ।
विचेता न्यपतद्भूमौ सौभद्रः परवीरहा ॥ १९२

एवं विनिहतो राजन्नेको बहुभिराहवे ।
क्षोभयित्वा चमूं सर्वां नलिनीमिव कुंजरः ॥ १९३
तं भूमौ पतितं दृष्ट्वा तावकास्ते महारथाः ।
मुदा परमया युक्ता चुक्रुशुः सिंहवन्मुहुः ॥ १९४
अभिमन्यौ हते राजन् शिशुके प्राप्तयौवने ।
संप्राद्रवच्चमूः सर्वा धर्मराजस्य पश्यतः ॥ १९५
अवितृप्तः स संग्रामादशोच्यः पुण्यकर्मकृत् ।
गतः पुण्यकृतां लोकान्‌ शाश्वतान् पुण्यनिर्जितान् ॥ १९६
निवेशायाभ्युपायामः सायाह्ने रुधिरोक्षिताः ।
निरीक्षमाणास्तु वयं परे चायोधनं शनैः ।
अपयाता महाराज ग्लानिं प्राप्ता विचेतसः ॥ १९७
ततो निशाया दिवसस्य चाशिवः शिवारुतैः संधिरवर्तताद्भुतः ।
कुशेशयापीडनिभे दिवाकरे विलंबमानेऽस्तमुपेत्य पर्वतम् ॥ १९८
वरासिशक्त्यृष्टिवरूथचर्मणां विभूषणानां च समुत्क्षिपन् प्रभाः ।
दिवं च भूमिं च समाजयन्निव प्रियां तनुं भानुरुपैति पावकम् ॥ १९९

---

## ५

हते तस्मिन्महावीर्ये सौभद्रे रथयूथपे ।
विमुक्तरथसन्नाहाः सर्वे निक्षिप्तकार्मुकाः ॥ २००
उपोपविष्टा राजानं परिवार्य युधिष्ठिरम् ।
तदेव युद्धं ध्यायंतः सौभद्रगतमानसाः ॥ २०१
ततो युधिष्ठिरो राजा विललाप सुदुःखितः ।
अभिमन्यौ हते वीरे भ्रातुः पुत्रे महारथे ॥ २०२
द्रोणानीकमसंबाधं मम प्रियचिकीर्षया ।
भित्त्वा व्यूहं प्रविष्टोऽसौ गोमध्यमिव केसरी ॥ २०३
स तीर्त्वा दुस्तरं वीरो द्रोणानीकं महार्णवम् ।
प्राप्य दौःशासनिं कार्ष्णिः प्राप्तो वैवस्वतक्षयम् ॥ २०४
कथं द्रक्ष्यमि कौंतेयं सौभद्रे निहतेऽर्जुनम् ।
सुभद्रां वा महाभागां प्रियं पुत्रमपश्यतीम् ॥ २०५
किंस्विद्वयमपेतार्थमक्लिष्टमसमंजसम् ।
तावुभौ प्रतिवक्ष्यामो हृषीकेशधनंजयौ ॥ २०६

अहमेव सुभद्रायाः केशवार्जुनयोरपि ।
प्रियकामो जयाकांक्षी कृतवानिदमप्रियम् ॥ २०७
न लुब्धो बुध्यते दोषांल्लोभान्मोहात्प्रवर्तते ।
मधुलिप्सुर्हि नापश्यं प्रपातमहमीदृशम् ॥ २०८
यो हि भोज्ये पुरस्कार्यो यानेषु शयनेषु च ।
भूषणेषु च सोऽस्माभिर्बालो युधि पुरस्कृतः ॥ २०९
न मे जयः प्रीतिकरो न राज्यं न चामरत्वं न सुरैः सलोकता ।
इमं समीक्ष्याप्रतिवीर्यपौरुषं निपातितं देववरात्मजात्मजम् ॥ २१०
हत्वा संसप्तकव्रातान् दिव्यैरस्त्रैः कपिध्वजः ।
प्रायात्स्वाशिबिरं जिष्णुर्जैत्रमास्थाय तं रथम् ॥ २११
गच्छन्नेव च गोविंदं साश्रुकंठोऽभ्यभाषत ।
किं नु मे हृदयं त्रस्तं वाक्च सज्जति केशव ॥ २१२
भुवि ये दिक्षु चात्युग्रा उत्पातास्त्रासयंति माम् ।
अपि स्वस्ति भवेद्राज्ञः सामात्यस्य गुरोर्मम ॥ २१३
कृ० उ०—व्यक्तं शिवं तव भ्रातुः सामात्यस्य भविष्यति ।
मा शुचः किंचिदेवान्यत्तत्रानिष्टं भविष्यति ॥ २१४
ततः स्वाशिबिरं प्राप्तौ हतानंदं हतत्विषम् ।
ददृशाते भृशास्वस्थान् पांडवान् नष्टचेतसः ॥ २१५
दृष्ट्वा भ्रातॄंश्च पुत्रांश्च विमना वानरध्वजः ।
अपश्यंश्चैव सौभद्रमिदं वचनमब्रवीत् ॥ २१६
मुखवर्णोऽप्रसन्नो वः सर्वेषामेव लक्ष्यते ।
न चाभिमन्युं पश्यामि न च मां प्रतिनंदथ ॥ २१७
मया श्रुतश्च द्रोणेन चक्रव्यूहो विनिर्मितः ।
न च वस्तस्य भेत्तास्ति विना सौभद्रमर्भकम् ॥ २१८
न चोपदिष्टस्तस्यासीन्मयानीकाद्विनिर्गमः ।
कच्चिन्न बालो युष्माभिः परानीकं प्रवेशितः ॥ २१९
भित्वानीकं महेष्वासः परेषां बहुशो युधि ।
कच्चिन्न निहतः संख्ये सौभद्रः परवीरहा ॥ २२०
सुभद्रायाः प्रियं पुत्रं द्रौपद्याः केशवस्य च ।
अंबायाश्च प्रियं नित्यं कोऽवधीत्कालमोहितः ॥ २२१

सदृशो वृष्णिवीरस्य केशवस्य महात्मनः ।
विक्रमश्रुतमाहात्म्यैः कथमायोधने हतः ॥ २२२
वार्ष्णेयीदयितं शूरं मया सततलालितम् ।
यदि पुत्रं न पश्यामि यास्यामि यमसादनम् ॥ २२३
मृदुकुंचितकेशांतं बालं बालमृगेक्षणम् ।
मत्तद्विरदविक्रांतं सिंहपोतमिवोद्गतम् ॥ २२४
स्मिताभिभाषिणं दांतं गुरुवाक्यकरं सदा ।
बाल्येप्यतुलकर्माणं प्रियवाक्यममत्सरम् ॥ २२५
महोत्साहं महाबाहुं दीर्घराजीवलोचनम् ।
कृतसंज्ञानसंपन्न कृतास्त्रमनुवर्तिनम् ॥ २२६
युद्धाभिनंदिन नित्यं द्विषतां भयवर्धनम् ।
यदि पुत्रं न पश्यामि यास्यामि यमसादनम् ॥ २२७
सुनस सुललाटांसं स्वक्षिभ्रूदशनच्छदम् ।
अपश्यतस्तद्वदन का शांतिर्हृदयस्य मे ॥ २२८
तन्त्रीस्वनसुखं रम्यं पुंस्कोकिलसमध्वनिम् ।
अशृण्वतः स्वनं तस्य का शांतिर्हृदयस्य मे ॥ २२९
सुकुमारः सदा वीरो महार्हशयनोचितः ।
भूमावनाथवच्छेते नूनं नाथवतां वरः ॥ २३०
यः पुरा बोध्यते सुप्तः सूतमागधबंदिभिः ।
बोधयंत्यद्य तं नूनं श्वापदा विकृतैः स्वनैः ॥ २३१
छत्रच्छायासमुचितं तस्य तद्वदनं शुभम् ।
नूनमद्य रजोध्वस्त रणरेणुः करिष्यति ॥ २३२
हा पुत्रकावितृप्तस्य सततं पुत्रदर्शने ।
भाग्यहीनस्य कालेन यथा मे नीयसे बलात् ॥ २३३
नूनं वैवस्वतश्च त्वां वरुणश्च प्रियातिथिम् ।
शतक्रतुर्धनेशश्च प्राप्तमर्चंत्यभीरुकम् ॥ २३४
एवं विलप्य बहुधा भिन्नपोतो वणिग्यथा ।
दुःखेन महताविष्टो युधिष्ठिरमपृच्छत ॥ २३५
कच्चित्स कदनं कृत्वा परेषां कुरुनंदन ।
स्वर्गतोऽभिमुखः संख्ये युद्धमानो नरर्षभैः ॥ २३६

स नूनं बहुभिर्यत्तैर्युध्यमानो नरर्षभैः ।
असहायः सहायार्थी मामनुध्यातवान् ध्रुवम् ॥ २३७
कथं बाले महेष्वासा नृशंसा मर्मभेदिनः ।
स्वस्रीये वासुदेवस्य मम पुत्रेऽक्षिपञ् शरान् ॥ २३८
सुभद्रा वक्ष्यते किं मामभिमन्युमपश्यती ।
द्रौपदी चैव दुःखार्ते ते च वक्ष्यामि किंत्वहम् ॥ २३९
वज्रसारमयं नूनं हृदय यन्न यास्यति ।
सहस्रधा वधूं दृष्ट्वा रुदंतीं शोककर्षिताम् ॥ २४०
धर्म० उ०—त्वयि याते महाबाहो संसप्तकबलं प्रति ।
प्रयत्नमकरोत्तीव्रमाचार्यो ग्रहणे मम ॥ २४१
व्यूढानीकाः स्वयं द्रोण वारयामास सर्वशः ।
प्रतिव्यूह्य रथानीकं यतमान तथा रणे ॥ २४२
ते पीड्यमाना द्रोणेन द्रोणानीकं न शक्नुमः ।
प्रतिवीक्षितुमप्याजौ भेत्तुं तत्कृत एव तु ॥ २४३
वयं त्वप्रतिमं वीर्ये सर्वे सौभद्रमात्मजम् ।
उक्तवंतः स्म तं तात भिध्यनीकमिति प्रभो ॥ २४४
स तथा नोदितोऽस्माभि. सदश्व इव वीर्यवान् ।
असह्यमपि तं भारं वोढुमेवोपचक्रमे ॥ २४५
स तवास्त्रोपदेशेन वीर्येण च समन्वितः ।
प्राविशत्तद्बलं बालः सुपर्ण इव सागरम् ॥ २४६
तेऽनुयाता वयं वीरं सात्वतीपुत्रमाहवे ।
प्रवेष्टुकामास्तेनैव येन स प्राविशच्चमूम् ॥ २४७
ततः सैंधवको राजा क्षुद्रस्तात जयद्रथः ।
वरदानेन रुद्रस्य सर्वान्नः समवारयत् ॥ २४८
ततो द्रोणः कृपः कर्णो द्रौणिः कौशल्य एव च ।
कृतवर्मा च सौभद्रं षड्रथाः पर्यवारयन् ॥ २४९
परिवार्य तु तैः सर्वैर्युधि बालो महारथैः ।
यतमानः परं शक्त्या बहुभिर्विरथीकृतः ॥ २५०
ततो दौःशासनिः क्षिप्रं तथा तैर्विरथीकृतम् ।
संशयं परमं प्राप्य दिष्टांतेनाभ्ययोजयत् ॥ २५१

स तु हत्वा सहस्राणि नराश्वरथदंतिनाम् ।
राजपुत्रसहस्रे द्वे वीरांश्चालक्षितान् बहून् ॥ २५२
बृहद्बलं च राजानं स्वर्गेणाजौ प्रयोज्य ह ।
ततः परमधर्मात्मा दिष्टांतमुपजग्मिवान् ॥ २५३
ततोऽर्जुनो वचः श्रुत्वा धर्मराजेन भाषितम् ।
हा पुत्र इति निश्वस्य व्यथितो न्यपतद्भुवि ॥ २५४
विषण्णवदनाः सर्वे परिवार्य धनंजयम् ।
नेत्रैरनिमिषैर्दीनाः प्रत्यवेक्षन् परस्परम् ॥ २५५
प्रतिलभ्य ततः संज्ञां वासविः क्रोधमूर्छितः ।
कंपमानो ज्वरेणैव निश्वसंश्च मुहुर्मुहुः ॥ २५६
पाणिं पाणौ विनिष्पिष्य श्वसमानोऽश्रुनेत्रवान् ।
उन्मत्त इव विप्रेक्षन्निदं वचनमब्रवीत् ॥ २५७
सत्यं वः प्रतिजानामि श्वोऽस्मि हंता जयद्रथम् ।
न चेद्वधभयाद्भीतो धार्तराष्ट्रान् प्रहास्यति ॥ २५८
धार्तराष्ट्रप्रियकरं मयि विस्मृतसौहृदम् ।
पापं बालवधे हेतुं श्वोऽस्मि हंता जयद्रथम् ॥ २५९
यद्येतदेवं संग्रामे न कुर्यां पुरुषर्षभाः ।
मा स्म पुण्यकृतांल्लोकान् प्राप्नुयां शूरसंमतान् ॥ २६०
यद्यस्मिन्नहते पापे सूर्योऽस्तमुपयास्यति ।
इहैव संप्रवेष्टाहं ज्वलितं जातवेदसम् ॥ २६१
एवमुक्त्वा विचिक्षेप गांडीवं सव्यदक्षिणम् ।
तस्य शब्दमतिक्रम्य धनुःशब्दोऽस्पृशाद्दिवम् ॥ २६२
अर्जुनेन प्रतिज्ञाते पांचजन्यं जनार्दनः ।
प्रदध्मौ तत्र संक्रुद्धो देवदत्तं च फाल्गुनः ॥ २६३
श्रुत्वा तु तं महाशब्दं पांडूनां जयगृद्धिनाम् ।
चारैः प्रवेदिते तत्र समुत्थाय जयद्रथः ॥ २६४
शोकसंमूढहृदयो दुःखेनाभिपरिप्लुतः ।
मज्जमान इवागाधे विपुले शोकसागरे ॥ २६५
जगाम समितिं राज्ञां सैंधवो विमृशन् बहून् ।
स तेषां नरदेवानां सकाशे पर्यदेवयत् ॥ २६६

योऽसौ पांडोः किल क्षेत्रे जातः शक्रेण कामिना ।
स निनीषति दुर्बुद्धिर्मां किलैकं यमक्षयम् ॥ २६७
तत्स्वस्ति वोऽस्तु यास्यामि स्वगृहं जीवितेच्छया ।
अथवास्त्रप्रतिबलास्त्रात मां क्षत्रियर्षभाः ॥ २६८
वधो नून प्रतिज्ञातो मम गांडीवधन्वना ।
तथा हि हृष्टाः क्रोशंति शोककाले स्म पांडवाः ॥ २६९
तस्मान्मामनुजानीत भद्रं वोऽस्तु नरर्षभाः ।
अदर्शनं गमिष्यामि न मां द्रक्ष्यंति पांडवाः ॥ २७०
एवं विलपमानं तं भयाद्व्याकुलचेतसम् ।
आत्मकार्यगरीयस्त्वाद्राजा दुर्योधनोऽब्रवीत् ॥ २७१
न भेतव्यं नरव्याघ्र को हि त्वां पुरुषर्षभ ।
मध्ये क्षत्रियवीराणां तिष्ठंतं प्रार्थयेद्युधि ॥ २७२
अक्षौहिण्यो दशैका च मदीयास्तव रक्षणे ।
यत्ता योत्स्यंति मा भैस्त्वं सैंधव व्येतु ते भयम् ॥ २७३
एवमाश्वासितो राजन् पुत्रेण तव सैंधवः ।
दुर्योधनेन सहितो द्रोणं रात्रावुपागमत् ॥ २७४
उपसंग्रहणं कृत्वा द्रोणेन स विशांपते ।
उपोपविश्य प्रणतः पर्यपृच्छदिदं तदा ॥ २७५
निमित्ते दूरपातित्वे लघुत्वे दृढवेधने ।
मम ब्रवीतु भगवान् विशेषं फाल्गुनस्य च ॥ २७६
द्रो० उ०—सममाचार्यकं तात तव चैवार्जुनस्य च ।
योगाद्दुःखोषितत्वाच्च तस्मात्त्वत्तोऽधिकोऽर्जुनः ॥ २७७
न तु ते युधि संत्रासः कार्यः पार्थात्कथंचन ।
अहं हि रक्षिता तात भयात्त्वां नात्र संशयः ॥ २७८
व्यूहयिष्यामि तं व्यूहं यं पार्थो न तरिष्यति ।
तस्माद्युध्यस्व मा भैस्त्वं स्वधर्ममनुपालय ॥ २७९
अधीत्य विधिवद्वेदानग्नयः सुहुतास्त्वया ।
इष्टं च बहुभिर्यज्ञैर्न ते मृत्युर्भयंकरः ॥ २८०
कुरवः पांडवाश्चैव वृष्णयोऽन्ये च मानवाः ।
अहं च सह पुत्रेण अध्रुवा इति चिंत्यताम् ।
पर्यायेण वयं सर्वे कालेन बलिना हताः ॥ २८१

तपस्तप्त्वा तु याँल्लोकान् प्राप्नुवंति तपस्विनः ।
क्षत्रधर्माश्रिता वीराः क्षत्रियाः प्राप्नुवति तान् ॥ २८२
एवमाश्वासितो राजा भारद्वाजेन सैंधवः ।
अपानुदद्भयं पार्थाद्युद्धाय च मनो दधे ॥ २८३

---

## ६.

तस्यां निशायां व्युष्टायां द्रोणः शस्त्रभृतां वरः ।
स्वान्यनीकानि सर्वाणि प्राक्रामद्व्यूहितुं ततः ॥ २८४
शूराणां गर्जतां राजन् संक्रुद्धानाममर्षिणाम् ।
श्रूयंते स्म गिरश्चित्राः परस्परवधैषिणाम् ॥ २८५
ततः शंखमुपाध्माय त्वरयन् वाजिनः स्वयम् ।
इतस्ततस्तान् रचयन् द्रोणश्चरति वेगितः ॥ २८६
तेष्वनीकेषु सर्वेषु स्थितेष्वाहवनंदिषु ।
भारद्वाजो महाराज जयद्रथमथाब्रवीत् ॥ २८७
त्वं चैव सौमदत्तिश्च कर्णश्चैव महारथः ।
अश्वत्थामा च शल्यश्च वृषसेनः कृपस्तथा ॥ २८८
शतं चाश्वसहस्राणां रथानामयुतानि षट् ।
द्विरदानां प्रभिन्नानां सहस्राणि चतुर्दश ॥ २८९
पदातीनां सहस्राणि दंशितान्येकविंशतिः ।
गव्यूतित्रिषु मात्रासु मामनासाद्य तिष्ठत ॥ २९०
तत्रस्थं त्वां न संसोढुं शक्ता देवाः सवासवाः ।
किं पुनः पांडवास्सर्वे समाश्वसिहि सैंधव ॥ २९१
एवमुक्तः समाश्वस्तः सिंधुराजो जयद्रथः ।
संप्रायात्सह गांधारैर्वृतस्तैश्च महारथैः ॥ २९२
दीर्घो द्वादशगव्यूतिः पश्चार्धे पंच विस्तृतः ।
व्यूहः सचक्रशकटो भारद्वाजेन निर्मितः ॥ २९३
नानानृपतिभिर्वीरैस्तत्र तत्र व्यवस्थितैः ।
रथाश्वगजपत्त्यौघैर्द्रोणेन विहितः स्वयम् ॥ २९४
पश्चार्धे तस्य पद्मस्य गर्भव्यूहः सुदुर्भिदः ।
सूचीपद्मस्य गर्भस्थो गूढो व्यूहः कृतः पुनः ॥ २९५

शकटस्य तु राजेन्द्र भारद्वाजो मुखे स्थितः ।
अनु तस्याभवद्भोजो जुगोपैनं ततः स्वयम् ॥ २९६
श्वेतवर्मांबरोष्णीषो व्यूढोरस्को महाभुजः ।
धनुर्विस्फारयन् द्रोणस्तस्थौ क्रुद्ध इवांतकः ॥ २९७
ततो व्यूढेष्वनीकेषु समुत्क्रुष्टेषु मारिष ।
वाद्यमानासु भेरीषु मृदंगेषु नदत्सु च ॥ २९८
अभिहारयत्सु शनकैर्भरतेषु युयुत्सुषु ।
रौद्रे मुहूर्ते संप्राप्ते सव्यसाची व्यदृश्यत ॥ २९९
ततोऽन्तक इव क्रुद्धः सवज्र इव वासवः ।
जयो जेता स्थितः सत्ये पारयिष्यन्महाव्रतम् ॥ ३००
आमुक्तकवचः खड्गी जाम्बूनदकिरीटभृत् ।
शुभ्रमाल्यांबरधरः स्वंगदश्चारुकुंडलः ॥ ३०१
व्यवस्थाप्य रथं राजञ् शंखं दध्मौ प्रतापवान् ॥ ३०२
अ० ७०—चोदयाश्वान् हृषीकेश यत्र दुर्मर्षणः स्थितः ।
एतद्भित्त्वा गजानीकं प्रवेक्ष्याम्यरिवाहिनीम् ॥ ३०३
एवमुक्तो महाबाहुः केशवः सव्यसाचिना ।
अचोदयद्धयांस्तत्र यत्र दुर्मर्षणः स्थितः ॥ ३०४
हस्तिनं हस्तियंतारमश्वमाश्विकमेव च ।
अभिनत्फाल्गुनो बाणै रथिनं च ससारथिम् ॥ ३०५
मंदवेगा नरा नागा बभूवुस्ते विचेतसः ।
शरैराशीविषस्पर्शैर्निर्भिन्नाः सव्यसाचिना ॥ ३०६
ते गजा विशिखैस्तीक्ष्णैर्युधि गांडिवचोदितैः ।
अनेकशतसाहस्रैः सर्वांगेषु समर्पिताः ॥ ३०७
आरावं परमं कृत्वा वध्यमानाः किरीटिना ।
निपेतुरनिशं भूमौ छिन्नपक्षा इवाद्रयः ॥ ३०८
अपरे दंतवेष्टेषु कुंभेषु च कटेषु च ।
शरैः समर्पिता नागाः क्रौंचवद्व्यनदन्मुहुः ॥ ३०९
गजस्कंधगतानां च पुरुषाणां किरीटिना ।
छिद्यंते चोत्तमांगानि भल्लैः सन्नतपर्वभिः ॥ ३१०
दुःशासनबलं हत्वा सव्यसाची महारथः ।
सिंधुराज परीप्सन् वै द्रोणानीकमुपाद्रवत् ॥ ३११

स तु द्रोणं समासाद्य व्यूहस्य प्रमुखे स्थितम् ।
कृतांजलिरिदं वाक्यं कृष्णस्यानुमतेऽब्रवीत् ॥ ३१२
शिवेन ध्याहि मां ब्रह्मन् स्वस्ति चैव वदस्व मे ।
भवत्प्रसादादिच्छामि प्रवेष्टुं दुर्भिदां चमूम् ॥ ३१३
एवमुक्तस्तदाचार्यः प्रत्युवाच स्मयन्निव ।
मामजित्वा न बीभत्सो शक्यो जेतुं जयद्रथः ॥ ३१४
एतावदुक्त्वा तं द्रोणः शरव्रातैरवाकिरत् ।
सरथाश्वध्वजं तीक्ष्णैः प्रहसन् वै ससारथिम् ॥ ३१५
ततोऽर्जुनः शरव्रातान् द्रोणस्यावार्य सायकैः ।
द्रोणमभ्यद्रवद्बाणैर्घोररूपैर्महत्तरैः ॥ ३१६
तद्दृष्ट्वा तादृशं युद्धं द्रोणपाण्डवयोस्तदा ।
वासुदेवो महाबुद्धिः कार्यवत्तामचिंतयत् ॥ ३१७
ततोऽब्रवीद्वासुदेवो धनंजयमिदं वचः ।
पार्थ पार्थ महाबाहो न नः कालात्ययो भवेत् ॥ ३१८
द्रोणमुत्सृज्य गच्छामः कृत्यमेतन्महत्तरम् ।
पार्थश्चाप्यब्रवीत् कृष्णं यथेष्टमिति केशव ॥ ३१९
ततः प्रदक्षिणं कृत्वा द्रोणं प्रायान्महाभुजम् ।
परिवृत्तश्च बीभत्सुरगच्छाद्विसृजञ् शरान् ॥ ३२०
ततोऽब्रवीत्स्वयं द्रोणः क्वेदं पाण्डव गम्यते ।
ननु नाम रणे शत्रुमजित्वा न निवर्तसे ॥ ३२१
अ० उ०—गुरुर्भवान्न मे शत्रुः शिष्यः पुत्रसमोऽस्मि ते ।
न चास्ति स पुमाँल्लोके यस्त्वां युधि पराजयेत् ॥ ३२२
एवं ब्रुवाणो बीभत्सुर्जयद्रथवधोत्सुकः ।
त्वरायुक्तो महाबाहुस्तत्सैन्यं समुपाद्रवत् ॥ ३२३
तं चक्ररक्षौ पांचाल्यौ युधामन्युत्तमौजसौ ।
अन्वयातां महात्मानौ विशंतं तावकं बलम् ॥ ३२४
ततो जयो महाराज कृतवर्मा च सात्वतः ।
कांबोजश्च श्रुतायुश्च धनंजयमवारयन् ॥ ३२५
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
अन्योन्यं वै प्रार्थयतां योधानामर्जुनस्य च ॥ ३२६

ततो भोजो नरव्याघ्रो दुर्धर्ष कुरुसत्तम ।
अविध्यत्तूर्णमव्यग्रो दशभिः कंकपत्रिभिः ॥ ३२७
ततः प्रविष्टे कौंतेये सिंधुराजजिघांसया ।
द्रोणानीकं विनिर्भिद्य भोजानीकं च दुस्तरम् ॥ ३२८
कांबोजस्य च दायादे हते राजन् सुदक्षिणे ।
श्रुतायुधे च विक्रांते निहते सव्यसाचिना ॥ ३२९
विप्रद्रुतेष्वनीकेषु विध्वस्तेषु समंततः ।
प्रभग्नं स्वबलं दृष्ट्वा पुत्रस्ते द्रोणमभ्ययात् ॥ ३३०
त्वरन्नेकरथेनैव समेत्य द्रोणमब्रवीत् ।
गतः स पुरुषव्याघ्र प्रमथ्यैतां महाचमूम् ॥ ३३१
स्थिरा बुद्धिर्नरेन्द्राणामासीद्ब्रह्मविदां वर ।
नातिक्रमिष्यति द्रोणं जातु जीवन् धनंजयः ॥ ३३२
योऽसौ पार्थो व्यतिक्रांतो मिषतस्ते महाद्युते ।
सर्वं ह्यद्यातुरं मन्ये नेदमस्ति बलं मम ॥ ३३३
जानामि त्वां महाभाग पांडवानां हिते रतम् ।
तथा मुह्यामि च ब्रह्मन् कार्यवत्तां विचिंतयन् ॥ ३३४
अस्मान्न त्वं सदा भक्तानिच्छस्यमितविक्रम ।
पांडवान् सततं प्रीणास्यस्माकं विप्रिये रतान् ॥ ३३५
नादास्यश्चेद्वरं मह्यं भवान् पांडवनिग्रहे ।
नावारयिष्यं गच्छंतमहं सिंधुपतिं गृहान् ॥ ३३६
स तथा कुरु शोणाश्व यथा मुच्येत सैंधवः ।
मम चार्तप्रलापानां मा क्रुधः पाहि सैंधवम् ॥ ३३७
द्रो० उ०—नाभ्यसूयामि ते वाक्यमश्वत्थाम्नासि मे समः ।
सत्यं तु ते प्रवक्ष्यामि तज्जुषस्व विशांपते ॥ ३३८
सारथिः प्रवरः कृष्णः शीघ्राश्चास्य हयोत्तमाः ।
अल्पं च विवरं कृत्वा तूर्णं याति धनंजयः ॥ ३३९
किं न पश्यसि बाणौघान् क्रोशमात्रे किरीटिनः ।
पश्चाद्रथस्य पतितान् क्षिप्तान् शीघ्रं हि गच्छतः ॥ ३४०
न चाहं शीघ्रयानेऽद्य समर्थो वयसान्वितः ।
सेनामुखे च पार्थानामेतद्बलमुपस्थितम् ॥ ३४१

राजा शूरः कृती दक्षो नेतुं परपुरंजयः ।
वीर स्वयं प्रयाह्यत्र यत्र पार्थो धनजयः ॥ ३४२
अद्भुतं चाद्य पश्यंतु लोके सर्वधनुर्धराः ।
विषक्तं त्वयि कौंतेय वासुदेवस्य पश्यतः॥ ३४३
एष ते कवचं राजंस्तथा बध्नामि कांचनम् ।
यथा न बाणा नास्त्राणि प्रहरिष्यंति ते रणे ॥ ३४४
न कृष्णो न च कौंतेयो न चान्यः शस्त्रभृद्रणे ।
शरानर्पयितुं कश्चित्कवचे तव शक्ष्यति ॥ ३४५
स त्वं कवचमास्थाय क्रुद्धमद्य रणेऽर्जुनम् ।
त्वरमाणः स्वयं याहि न त्वासौ विसहिष्यति ॥ ३४६
एवमुक्त्वा त्वरन् द्रोणः स्पृष्ट्वांभो वर्म भास्वरम् ।
आबबंधाद्भुततमं जपन् मंत्रं यथाविधि ॥ ३४७

---

## ७.

द्रोणेनाबद्धकवचो राजा दुर्योधनस्ततः ।
ययावेकरथेनाजौ हयसंस्कारवित्प्रभो ॥ ३४८
सिंहनादरवाश्चासन् शंखशब्दविमिश्रिताः ।
दृष्ट्वा दुर्योधनं तत्र कृष्णयोः प्रमुखे स्थितम् ॥ ३४९
ये च ते सिंधुराजस्य गोप्तारः पावकोपमाः ।
ते प्राहृष्यंत समरे दृष्ट्वा पुत्रं तव प्रभो ॥ ३५०
कृ० उ०—दुर्योधनमतिक्रांतमेतं पश्य धनंजय ।
अत्यद्भुतमिमं मन्ये नास्त्यस्य सदृशो रथः ॥ ३५१
दूरपाती महेष्वासः कृतास्त्रो युद्धदुर्मदः ।
दृढास्त्रश्चित्रयोधी च धार्तराष्ट्रो महाबलः ॥ ३५२
अत्यंतसुखसंवृद्धो मानितश्च महारथैः ।
कृती च सततं पार्थ नित्यं द्वेष्टि च बांधवान्॥ ३५३
अत्र क्रोधविषं पार्थ विमुंच चिरसंभृतम् ।
एष मूलमनर्थानां पांडवानां महारथः ॥ ३५४
दिष्ट्या त्विदानीं संप्राप्त एष ते बाणगोचरम् ।
यथायं जीवितं जह्यात्तथा कुरु धनंजय ॥ ३५५

ऐश्वर्यमदसंमूढो नैष दुःखमुपेयिवान् ।
न च ते संयुगे वीर्यं जानाति पुरुषर्षभ ॥ ३५६
निकृत्या राज्यहरणं वनवासं च पाडव ।
परिक्लेशं च कृष्णाया हृदि कृत्वा पराक्रम ॥ ३५७
तं तथेत्यब्रवीत्पार्थः कृत्यरूपमिदं मम ।
सर्वमन्यदनादृत्य गच्छ यत्र सुयोधनः ॥ ३५८
तं चतुर्दशभिः पार्थश्चित्रपुंखैः शिलाशितैः ।
अविध्यत्तूर्णमव्यग्रस्ते चाभ्रश्यंत वर्मणि ॥ ३५९
तेषां नैष्फल्यमालोक्य पुनर्नव च पंच च ।
प्राहिणोन्निशितान् बाणांस्ते चाभ्रश्यंत वर्मणः ॥ ३६०
अष्टाविंशांस्तु तान् बाणानस्तान् विप्रेक्ष्य निष्फलान् ।
अब्रवीत्परवीरघ्नः कृष्णोऽर्जुनमिदं वचः ॥ ३६१
अदृष्टपूर्वं पश्यामि शिलानामिव सर्पणम् ।
त्वया संप्रेषिताः पार्थ नार्थं कुर्वंति पत्रिणः ॥ ३६२
कच्चिद्गांडीवतः प्राणस्तथैव भरतर्षभ ।
मुष्टिश्च ते यथापूर्वं भुजयोश्च बलं तव ॥ ३६३
अ० ७०—द्रोणेनैषा मतिः कृष्ण धार्तराष्ट्रे निवेशिता ।
अभेद्या हि ममास्त्राणामेषा कवचधारणा ॥ ३६४
जानंस्त्वमपि वै कृष्ण मां विमोहयसे कथम् ।
यद्भूतं त्रिषु लोकेषु यच्च केशव वर्तते ॥ ३६५
यत्त्वत्र विदितं कार्यं नैव तद्वेत्ति माधव ।
स्त्रीवदेष बिभर्त्येतां युक्तां कवचधारणाम् ॥ ३६६
पश्य बाह्वोश्च मे वीर्यं धनुषश्च जनार्दन ।
पराजयिष्ये कौरव्यं कवचेनापि रक्षितम् ॥ ३६७
ततोऽस्य निशितैर्बाणैः सुमुक्तैरंतकोपमैः ।
हयांश्चकार निर्देहानुभौ च पार्ष्णिसारथी ॥ ३६८
दुर्योधनं च बाणाभ्यां तीक्ष्णाभ्यां विरथीकृतम् ।
आविध्यद्धस्ततलयोरुभयोरर्जुनस्तथा ॥ ३६९
स वेदनाभिराविग्नः पलायनपरायणः ।
तं कृच्छ्रामापदं प्राप्तं दृष्ट्वा परमधन्विनः ।
समापेतुः परीप्संतो धनंजयशरार्दितम् ॥ ३७०

ते दृष्ट्वा सहसा पार्थं गोप्तारः सैंधवस्य तु ।
चक्रुर्नादान् महेष्वासाः कंपयंतो वसुंधराम् ॥ ३७१
सैंधवाभिमुखं यांतं योधाः संप्रेक्ष्य पांडवम् ।
न्यवर्तंत रणाद्वीरा निराशास्तस्य जीविते ॥ ३७२
यो योऽभ्यधावद्राजेंद्र तावकः पांडवं रणे ।
तस्य तस्यांतका बाणाः शरीरेऽभ्यपतन् प्रभो ॥ ३७३
कबंधसंकुलं चक्रे तव सैन्यं महारथ. ।
अर्जुनो जयतां श्रेष्ठ. शरैरग्न्यंशुसन्निभैः ॥ ३७४
एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे ।
अब्रवीत्पांडवं राजंस्त्वरमाणः जनार्दनः ॥ ३७५
एष मध्ये कृतः षड्भिः पार्थ वीरैर्महारथैः ।
जीवितेप्सुर्महाबाहो भीतस्तिष्ठति सैंधवः ॥ ३७६
एतानानिर्जित्य रणे षड्रथान् पुरुषर्षभ ।
न शक्यः सैंधवो हंतु यतो निर्व्याजमर्जुन ॥ ३७७
योगमद्य विधास्यामि सूर्यस्यावरणं प्रति ।
अस्तंगत इति व्यक्तं द्रक्ष्यत्येक. स सिंधुराट् ॥ ३७८
हर्षेण जीविताकांक्षी विनाशार्थं तव प्रभो ।
न गोप्स्यति दुराचार. स आत्मानं कथंचन ॥ ३७९
तत्र छिद्रे प्रहर्तव्यं त्वयास्य कुरुसत्तम ।
व्यपेक्षा नैव कर्तव्या गतोऽस्तमिति भास्करः ॥ ३८०
ततोऽसृजत्तमः कृष्णः सूर्यस्यावरणं प्रति ।
योगी योगेन संयुक्तो योगिनामीश्वरो हरिः ॥ ३८१
त्वदीया जहृषुर्योधाः पार्थनाशान्नराधिप ।
ते प्रहृष्टा रणे राजन् नापश्यन् सैनिका रविम् ॥ ३८२
वीक्ष्यमाणे ततस्तस्मिन् सिंधुराजे दिवाकरम् ।
पुनरेवाब्रवीत्कृष्णो धनंजयमिदं वचः ॥ ३८३
पश्य सिंधुपतिं वीरं प्रेक्षमाणं दिवाकरम् ।
अयं कालो महाबाहो वधायास्य दुरात्मनः ॥ ३८४
इत्येवं केशवेनोक्तः पांडुपुत्रः प्रतापवान् ।
न्यवधीत्तावकं सैन्यं शरैरर्काग्निसन्निभैः ॥ ३८५

कृपं विव्याध विंशत्या कर्णं पंचाशता शरैः ।
शल्यं दुर्योधनं चैव षड्भिः षड्भिरताडयत् ।
वृषसेनं तथाष्टाभिः षष्ठ्या सैंधवमेव च ॥ ३८६
एवं तान् व्याकुलीकृत्य त्वदीयानां महारथान् ।
उज्जहार शरं घोरं पांडवोऽनलसन्निभम् ॥ ३८७
इंद्राशनिसमप्रख्यं दिव्यमस्त्राभिमंत्रितम् ।
विससर्जार्जुनस्तूर्णं सैंधवस्य वधे ध्रुवम् ॥ ३८८
स तु गांडीवनिर्मुक्तः शरः श्येन इवाशुगः ।
छित्वा शिरः सिंधुपतेरुत्पपात विहायसम् ॥ ३८९
ततः सुमहदाश्चर्यं तत्रापश्याम भारत ।
स्यमंतपंचकाद्बाह्यं शिरो यद्व्यहरत्ततः ॥ ३९०
एतस्मिन्नेव काले तु वृद्धक्षत्रो महीपतिः ।
संध्यामुपास्ते तेजस्वी संबंधी तव मारिष ॥ ३९१
उपासीनस्य तस्याथ कृष्णकेशं सकुंडलम् ।
सिंधुराजस्य मूर्धानमुत्संगे समपातयत् ॥ ३९२
ततस्तस्य नरेन्द्रस्य पुत्रमूर्धनि भूतले ।
गते तस्यापि शतधा मूर्धाऽगच्छदरिंदम ॥ ३९३
ततो विनिहते राजन् सिंधुराजे किरीटिना ।
तमस्तद्वासुदेवेन संहृतं भरतर्षभ ॥ ३९४
पश्चाज्ज्ञातं महीपालैस्तव पुत्रैः सहानुगैः ।
वासुदेवप्रयुक्तेयं मायेति नृपसत्तम ॥ ३९५
हतं जयद्रथं दृष्ट्वा तव पुत्रा नराधिप ।
दुःखादश्रूणि मुमुचुर्निराशाश्चाभवञ्जये ॥ ३९६
ततो जयद्रथे राजन् हते पार्थेन केशवः ।
दध्मौ शंखं महाबाहुरर्जुनश्च परंतप ॥ ३९७
अथ राजानमभ्येत्य धर्मपुत्रं युधिष्ठिरम् ।
ववंदे स प्रहृष्टात्मा हते पार्थेन सैंधवे ॥ ३९८
ततो युधिष्ठिरो राजा रथादाप्लुत्य भारत ।
पर्यष्वजत्तदा कृष्णावानंदाश्रुपरिप्लुतौ ॥ ३९९
अत्यद्भुतमिदं कृष्ण कृतं पार्थेन धीमता ।
दिष्ट्या पश्यामि संग्रामं तीर्णभारौ महारथौ ॥ ४००

किंतु मात्यद्भुतं तेषां येषां नस्त्वं समाश्रयः ।
त्वत्प्रसादाद्धि गोविंद वयं जेष्यामहे रिपून् ॥ ४०१
स्रष्टारं सर्वलोकानां परमात्मानमव्ययम् ।
ये पश्यंति हृषीकेशं न ते मुह्यंति कर्हिचित् ॥ ४०२
इत्येवं धर्मराजेन हरिरुक्तो महायशाः ।
अनुरूपमिदं वाक्यं प्रत्युवाच जनार्दनः ॥ ४०३
भवता तपसोग्रेण धर्मेण परमेण च ।
साधुत्वादार्जवाच्चैव हतः पापो जयद्रथः । ४०४
ततो धर्मसुतो जिष्णुं परिष्वज्य विशांपते ।
प्रमृज्य वदनं तस्य पर्याश्वासयत प्रभुः ॥ ४०५
ततः प्रमुदितं सर्वं बलमासीद्विशांपते ।
पांडवानां रणे हृष्टं युद्धाय तु मनो दधे ॥ ४०६

---



## ८

सैंधवे निहते राजन् पुत्रस्तव सुयोधनः ।
अश्रुपूर्णमुखो दीनो निरुत्साहो द्विषज्जये ॥ ४०७
दुर्मना निःश्वसन् दुष्टो भग्नदंष्ट्र इवोरगः ।
आगस्कृत्सर्वलोकस्य पुत्रस्तेऽर्तिं परामगात् ॥ ४०८
दृष्ट्वा तत्कदनं घोरं स्वबलस्य कृतं महत् ।
जिष्णुना भीमसेनेन सात्वतेन च संयुगे ॥ ४०९
स विवर्णः कृशो दीनो बाष्पविप्लुतलोचनः ।
अमन्यतार्जुनसमो न योद्धा भुवि विद्यते ॥ ४१०
एवं क्लांतमना राजन्नुपायाद्द्रोणमीक्षितुम् ।
ततस्तत्सर्वमाचख्यौ कुरूणां वैशसं महत् । ४११
दु० उ०—पश्य मूर्धाभिषिक्तानामाचार्य कदनं महत् ।
अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ॥ ४१२
अस्मद्विजयकामानां सुहृदामुपकारिणाम् ।
गंतास्मि कथमानृण्यं गतानां यमसादनम् ॥ ४१३
ये मदर्थे परीप्संते वसुधां वसुधाधिपाः ।
ते हित्वा वसुचैश्वर्यं वसुधामधिशेरते ॥ ४१४

सोऽहं कापुरुषः कृत्वा मित्राणां क्षयमीदृशम् ।
अश्वमेधसहस्रेण पावितुं न समुत्सहे ॥ ४१५
मम लुब्धस्य पापस्य तथा धर्मापचायिनः ।
व्यायामेन जिगीषंतः प्राप्ता वैवस्वतक्षयम् ॥ ४१६
कथं पतितवृत्तस्य पृथिवी सुहृदां द्रुहः ।
विवरं नाशकद्दातुं मम पार्थिवसंसदि ॥ ४१७
सोऽहमद्य गमिष्यामि यत्र ते पुरुषर्षभाः ।
हता मदर्थे संग्रामे युध्यमानाः किरीटिना ॥ ४१८
भवानुपेक्षां कुरुते शिष्यत्वादर्जुनस्य हि ।
अतो विनिहताः सर्वे येऽस्मज्जयचिकीर्षवः ॥ ४१९
द्रोणस्तु तद्वचः श्रुत्वा पुत्रस्य तव दुर्मनाः ।
मुहूर्तमिव तज्ज्ञात्वा भृशमार्तोऽभ्यभाषत ॥ ४२०
दुर्योधन किमेवं मां वाक्शरैरपि कृंतसि ।
अजय्यं सततं संख्ये ब्रुवाणं सव्यसाचिनम् ॥ ४२१
एतेनैवार्जुनं ज्ञातुमलं कौरव संयुगे ।
यच्छिखण्ड्यावधीद्भीष्मं पाल्यमानः किरीटिना ॥ ४२२
अवध्यं निहतं दृष्ट्वा संयुगे देवदानवैः ।
तदैवाज्ञासिषमहं नेयमस्तीति भारती ॥ ४२३
यं पुंसां त्रिषु लोकेषु सर्वशूरममंस्महि ।
तस्मिन्निपतिते शूरे किं शेषं पर्युपास्महे ॥ ४२४
यान् स्म तान् ग्लहते तात शकुनिः कुरुसंसदि ।
अक्षान्न तेऽक्षा निशिता बाणास्ते शत्रुतापनाः ॥ ४२५
तांस्तदाख्यायमानस्त्वं विदुरेण न बुद्धवान् ।
तादिदं वर्तते घोरमागतं वैशसं महत् ॥ ४२६
योऽवमन्य वचः पथ्यं सुहृदामात्मकारिणाम् ।
स्वमतं कुरुते मूढः स शोच्यो न चिरादिव ॥ ४२७
यच्च नः प्रेक्षमाणानां कृष्णामानाय्य तत्सभाम् ।
अनर्हतीं कुले जातां सर्वधर्मानुचारिणीम् ॥ ४२८
तस्याधर्मस्य गांधारे फलं प्राप्तमिदं महत् ॥ ४२९
यत्ताः सर्वेऽपराभूताः पर्यवारयतार्जुनम् ।
सिंधुराजानमाश्रित्य स वो मध्ये कथं हतः ॥ ४३०

कथं त्वयि च कर्णे च कृपे शल्ये च जीवति ।
अश्वत्थाम्नि च कौरव्य निधनं सैंधवोऽगमत् ॥ ४३१
तन्मां किमामितप्यंतं वाक्शरैरिव कृंतसि ।
अशक्तः सिंधुराजस्य भूत्वा त्राणाय भारत ॥ ४३२
नाहत्वा सर्वपांचालान् कवचस्य विमोक्षणम् ।
कर्तास्मि समरे कर्म धार्तराष्ट्र हितं तव ॥ ४३३
राजन्ब्रूयाः सुतं मे त्वमश्वत्थामानमाहवे ।
न सोमकाः प्रमोक्तव्या जीवितं परिरक्षता ॥ ४३४
एष त्वहमनीकानि प्रविशाम्यरिसूदन ।
रणाय महते राजंस्त्वया वाक्शरपीडितः ॥ ४३५
त्वं च दुर्योधन बलं यदि शक्तोऽसि पालय ।
रात्रावपि च योत्स्यंते संरब्धाः कुरुसृंजयाः ॥ ४३६
एवमुक्त्वा ततः प्रायाद्द्रोणः पांडवसृंजयान् ।
मुष्णन् क्षत्रियतेजांसि नक्षत्राणामिवांशुमान् ॥ ४३७
ततो दुर्योधनो राजा द्रोणेनैव प्रचोदितः ।
अमर्षवशमापन्नो युद्धायैव मनो दधे ॥ ४३८
ततः सर्वाणि सैन्यानि हतशिष्टानि यानि वै ।
सेनागोप्तॄनथादिश्य पुनर्व्यूहमकल्पयत् ॥ ४३९
द्रोणः पुरस्ताज्जघने तु शल्यस्तथा द्रौणिः कृतवर्मा शलश्च ।
स्वयं तु सर्वाणि बलानि राजन् राजा चरन्नभ्यधिकं निशायाम् ॥ ४४०
उवाच सर्वांश्च पदातिसंघान् दुर्योधनः पार्थिव सांत्वपूर्वम् ।
उत्सृज्य सर्वे परमायुधानि गृह्णीत हस्तैर्ज्वलितान् प्रदीपान् ।
ते चोदिताः पार्थिवसत्तमेन ततः प्रहृष्टा जगृहुः प्रदीपान् ॥ ४४१
सा भूय एव ध्वजिनी विभक्ता व्यरोचताग्निप्रभया निशायाम् ।
महाधनैराभरणैश्च दिव्यैः शस्त्रैश्च दीप्तैरपि संपतद्भिः ॥ ४४२
रथे रथे पंच विशीपिकास्तु प्रदीपिका तत्र गजे त्रयश्च ।
प्रत्यश्वमेकश्च महाप्रदीपः कृतास्तु तैः पांडवैः कौरवेयैः ॥ ४४३
क्षणेन सर्वे विहिताः प्रदीपा व्यादीपयंतो ध्वजिनीं तवाशु ॥ ४४४
सर्वास्तु सेना व्यतिसेव्यमानाः पदातिभिः पावकतैलहस्तैः ।
प्रकाशमाना ददृशुर्निशायां यथांतरिक्षे जलदास्तडिद्भिः ॥ ४४५

जांबूनदेष्वाभरणेषु चैव निष्केषु शुद्धेषु शरासनेषु ।
पीतेषु शस्त्रेषु च पावकस्य प्रतिप्रभास्तत्र ततो बभूवुः ॥ ४४६
गदाश्च शैक्याः परिघाश्च शुभ्रा रथेषु शक्त्यश्च विवर्तमानाः ।
प्रतिप्रभारश्मिभिराजमीढ पुनः पुनः संजनयंति दीपान् ॥ ४४७
तत्संप्रदीप्तं बलमस्मदीयं निशम्य पार्थास्त्वरितास्तथैव ।
सर्वेषु सैन्येषु पदातिसंघानचोदयंस्तेऽपि चक्रुः प्रदीपान् ॥ ४४८

---

९

प्रकाशिते तदा लोके रजसा तमसाऽऽवृते ।
समाजग्मुरथो वीराः परस्परवधैषिणः ॥ ४४९
असज्जत ततो वीरा वीरेष्वेव पृथक् पृथक् ।
नागा नागैः समाजग्मुस्तुरगाः सह वाजिभिः ॥ ४५०
रथा रथवरैरेव समाजग्मुर्मुदा युताः ।
तस्मिन् रात्रिमुखे घोरे तव पुत्रस्य शासनात् ॥ ४५१
विद्रुतं स्वबलं दृष्ट्वा वध्यमानं महात्मभिः ।
क्रोधेन महताविष्टः पुत्रस्तव विशांपते ॥ ४५२
अभ्येत्य सहसा कर्णं द्रोणं च जयतां वरम् ।
अमर्षवशमापन्नो वाक्यज्ञो वाक्यमब्रवीत् ॥ ४५३
भवद्भ्यामिह संग्रामः क्रुद्धाभ्यां संप्रवर्तितः ।
आहवे निहतं दृष्ट्वा सैंधवं सव्यसाचिना ॥ ४५४
निहन्यमानां पाडूनां बलेन मम वाहिनीम् ।
भूत्वा तद्विजये शक्तावशक्ताविव पश्यतः ॥ ४५५
यदि नाहं परित्याज्यो भवद्भ्यां पुरुषर्षभौ ।
युध्यतामनुरूपेण विक्रमेण सुविक्रमौ ॥ ४५६
वाक्प्रतोदेन तौ वीरौ प्रणुन्नौ तनयेन ते ।
प्रावर्तयेतां संग्रामं घट्टिताविव पन्नगौ ॥ ४५७
द्रोणेन वध्यमानानां पांचालानां विशांपते ।
शुश्रुवे तुमुलः शब्दः क्रोशतामितरेतरम् ॥ ४५८
सा तथा पांडवी सेना पीड्यमाना महात्मना ।
निशि संप्राद्रवद्राजन्नुत्सृज्योल्काः सहस्रशः ॥ ४५९

लब्धलक्ष्यस्तु राधेयः पांचालानां महारथान् ।
अभ्यपीडयदायस्तः शरैर्मेघ इवाचलम् ॥ ४६०
ते वध्यमानाः समरे पांचालाः सृंजयैः सह ।
तृणप्रस्यंदनाच्चापि सूतपुत्रं स्म मेनिरे ॥ ४६१
अपि स्वं समरे योधं धावमानं विचेतसम् ।
कर्णमेवाभ्यमन्यंत ततो भीता द्रवंति ते ॥ ४६२
अभ्यभाषत हैडिंबि दाशार्हः प्रहसन्निव ॥ ४६३
घटोत्कच विजानीहि यत्त्वां वक्ष्यामि पुत्रक ।
प्राप्तो विक्रमकालोऽय तव नान्यस्य कस्यचित् ॥ ४६४
पश्य कर्णेन हैडिंबे पांडवानामनीकिनी ।
काल्यमाना यथा गावः पालेन रणमूर्धनि ॥ ४६५
निशीथे सूतपुत्रेण शरवर्षेण पीडिताः ।
एते द्रवंति पांचालाः सिंहेनेवार्दिता मृगाः ॥ ४६६
एतस्यैवं प्रवृद्धस्य सूतपुत्रस्य संयुगे ।
निषेद्धा विद्यते नान्यस्त्वामृते भीमविक्रमः ॥ ४६७
स त्वं कुरु महाबाहो कर्म युक्तमिहात्मनः ।
मातुलानां पितॄणा च तेजसोऽस्त्रबलस्य च ॥ ४६८
पांडवानां प्रभग्नानां कर्णेन निशि सायकैः ।
मज्जतां धार्तराष्ट्रेषु भव पारं परंतप ॥ ४६९
जहि कर्णं महेष्वासं निशीथे मायया रणे ।
पार्था द्रोणं वधिष्यंति धृष्टद्युम्नपुरोगमाः ॥ ४७०
एवमुक्तो महाबाहुर्हैडिंबिः परवीरहा ।
अभ्ययात्तुमुले कर्णं तव सैन्यं विभीषयन् ॥ ४७१
तमापतंतं संक्रुद्धं दीप्तास्यं दीप्तमूर्धजम् ।
प्रहसन् पुरुषव्याघ्रः प्रतिजग्राह सूतजः ॥ ४७२
लोहिताक्षो महाकायस्ताम्रास्यो निम्नितोदरः ।
ऊर्ध्वरोमा हरिश्मश्रुः शंकुकर्णो महाहनुः ॥ ४७३
आकर्णदारितास्यश्च तीक्ष्णदंष्ट्रः करालवान् ।
सुदीर्घताम्रजिह्वोष्ठो लंबभ्रूः स्थूलनासिकः ॥ ४७४
नीलांगो लोहितग्रीवो गिरिवर्ष्मा भयंकरः ।
स्थूलस्फिग्गूढनाभिश्च शिथिलोपचयो महान् ॥ ४७५

किंकिणीशतनिर्घोषं रक्तध्वजपताकिनम् ।
ऋक्षचर्मावनद्धांगं नल्वमात्रं महारथम् ॥ ४७६
सर्वायुधवरोपेतमास्थितो ध्वजमालिनम् ।
अष्टचक्रसमायुक्तं मेघगंभीरनिस्वनम् ॥ ४७७
मत्तमातंगसंकाशा लोहिताक्षा विभीषणाः ।
कामवर्णजवायुक्ता बलवंतः शतं हयाः ॥ ४७८
वहंतो राक्षसं घोरं बलवंतो जितश्रमाः ॥ ४७९
वासवाशनिनिर्घोषं दृढज्यमतिविक्षिपन् ।
व्यक्तं किष्कुपरीणाहं द्वादशारत्निकार्मुकम् ॥ ४८०
रथाक्षमात्रैरिषुभिः सर्वाः प्रच्छादयन् दिशः ।
तस्यां वीरापहारिण्यां निशायां कर्णमभ्ययात् ॥ ४८१
स सन्निपातस्तुमुलस्तयोरासीद्विशांपते ॥ ४८२
घटोत्कच प्रयुक्तेन सिंहनादेन भीषिताः ।
प्रसुस्रुवुर्गजा मूत्रं विव्यथुश्च नरा भृशम् ॥ ४८३
पुत्राश्च तव योधाश्च व्यथिता विप्रदुद्रुवुः ।
तत्रैकोऽस्त्रबलश्लाघी कर्णो मानी न विव्यथे ॥ ४८४
घटोत्कचो यदा कर्णं न विशेषयते नृप ।
ततः प्रादुश्चकारोग्रमस्त्रमस्त्रविदां वरः ॥ ४८५
तेनास्त्रेणावधीत्तस्य रथं सहयसारथिम् ।
विरथश्चापि हैडिंबिः क्षिप्रमन्तरधीयत ॥ ४८६
ततो मायां दारुणामंतरिक्षे घोरां भीमां विहितां राक्षसेन ।
अपश्याम लोहिताभ्रप्रकाशां देदीप्यंतीमग्निशिखामिवोग्राम् ॥ ४८७
ततः शराः प्रापतन् रुक्मपुंखाः शक्त्यृष्टिप्रासमुसलान्यायुधानि ।
परश्वधास्तैलधौताश्च खड्गाः प्रदीप्ताग्रास्तोमराः पट्टिशाश्च ॥ ४८८
महाशिलाश्चापतंस्तत्र तत्र सहस्रशः साशनयश्च वज्राः ।
चक्राणि चानेकशतक्षुराणि प्रादुर्बभूवुर्ज्वलनप्रभाणि ॥ ४८९
तां शक्तिपाषाणपरश्वधानां प्रासासिवज्राशनिमुद्गराणाम् ।
वृष्टिं विशालां ज्वलितां पतंतीं कर्णः शरौघैर्न शशाक हंतुम् ॥ ४९०
शराहतानां पततां हयानां वज्राहतानां च तथा गजानाम् ।
शिलाहतानां च महारथानां महान्निनादः पततां बभूव ॥ ४९१

दौर्योधनं वै बलमार्तरूपमावर्तमानं ददृशे भ्रमत्तत् ।
हाहाकृतं संपरिवर्तमानं संलीयमानं च विषण्णरूपम् ॥ ४९२
तस्मिन् घोरे कुरुवीरावमर्दे कालोत्सृष्टे क्षत्रियाणामभावे ।
ते वै भग्नाः सहसा व्यद्रवंत प्राक्रोशंतः कौरवाः सर्व एव ॥ ४९३
ह्रीमान् कुर्वन् दुष्करं चार्यकर्म नैवामुह्यत्संयुगे सूतपुत्रः ॥ ४९४
ततोऽब्रुवन् कुरवः सर्व एक कर्णं दृष्ट्वा घोररूपां च मायाम् ।
शक्त्या रक्षो जहि कर्णाद्य तूर्णं नश्यंते ते कुरवो धार्तराष्ट्राः ॥ ४९५
करिष्यतः किं च नो भीमपार्थौ तपंतमेनं जहि पापं निशीथे ।
यो नः संग्रामाद्घोररूपाद्विमुंचेत्स नः पार्थान्सबलान्योधयेत्तु ॥ ४९६
अवध्यमाने राक्षसे वै निशीथे दृष्ट्वा राजंस्त्रास्यमानं बलं च ।
महच्छ्रुत्वा निनदं कौरवाणां मतिं दध्रे शक्तिमोक्षाय कर्णः ॥ ४९७
यासौ राजन्निहिता वर्षपूगान् वधायाजौ सत्कृता फाल्गुनस्य ।
यां वै प्रादात्सूतपुत्राय शक्रः शक्तिं श्रेष्ठां कुंडलाभ्या निमाय ॥ ४९८
तां वै शक्तिं लेलिहानां प्रदीप्तां पाशैर्युक्तामंतकस्यैकरात्रिम् ।
मृत्योः स्वसारं ज्वलितामिवोल्कां वैकर्तनः प्राहिणोद्राक्षसाय ॥ ४९९
सा तां मायां भस्म कृत्वा ज्वलंती भित्वा गाढं हृदयं राक्षसस्य ।
ऊर्ध्वं ययौ दीप्यमाना निशायां नक्षत्राणामतराण्याविवेश ॥ ५००
ततोऽन्तारिक्षादपतद्गतासुः स राक्षसेन्द्रो भुवि भिन्नदेहः ।
अवाक्शिराः स्तब्धगात्रो विजिह्वो घटोत्कचो महदास्थाय रूपम् ॥ ५०१
स तद्रूपं भैरवं भीमकर्मा भीमं कृत्वा भैमसेनिः पपात ।
हतोऽप्येवं तव सैन्येऽप्येकदेशमपोथयत्स्वेन देहेन राजन् ॥ ५०२
ततः कर्णः कुरुभिः पूज्यमानो यथा शक्रो वृत्रवधे मरुद्भिः ।
अन्वारूढस्तव पुत्रस्य यानं हृष्टश्चापि प्राविशत्तत्स्वसैन्यम् ॥ ५०३

---

## १०

हैडिंबिं निहतं दृष्ट्वा विशीर्णमिव पर्वतम् ।
बभूवुः पांडवाः सर्वे शोकबाष्पाकुलेक्षणाः ॥ ५०४
वासुदेवस्तु हर्षेण महताभिपरिप्लुतः ।
ननाद सिंहनादं वै पर्यष्वजत फाल्गुनम् ॥ ५०५
स विनद्य महानादमभीषून् सन्नियम्य च ।
ननर्त हर्षसंवीतो वातोद्धूत इव द्रुमः ॥ ५०६

अर्जुनोऽथाब्रवीद्राजन्नातिहृष्टमना इव ।
अतिहर्षोऽयमस्थाने तवाद्य मधुसूदन ॥ ५०७
समुद्रस्यैव संशोषं मेरोरिव विसर्पणम् ।
तथैतदद्य मन्येऽहं तव कर्म जनार्दन ॥ ५०८

कृ० उ०—अतिहर्षमिमं प्राप्तं शृणु मे त्वं धनंजय ।
अतीव मनसः सद्यःप्रसादकरमुत्तमम् ॥ ५०९
शक्तिं घटोत्कचेनेमां व्यंसयित्वा महाद्युते ।
कर्णं निहतमेवाजौ विद्धि सद्यो धनंजय ॥ ५१०
शक्तिहस्तं पुनः कर्णं को लोकेऽस्ति पुमानिह ।
य एनमभितस्तिष्ठेत्कार्तिकेयमिवाहवे ॥ ५११
दिष्ट्यापनीतकवचो दिष्ट्यापहृतकुंडलः ।
दिष्ट्या सा व्यंसिता शक्तिरमोघास्य घटोत्कचे ॥ ५१२
यदि हि स्यात्सकवचस्तथैव स्यात्सकुंडलः ।
सामरानपि लोकांस्त्रीनेकः कर्णो जयेद्रणे ॥ ५१३
गांडीवमुद्यम भवांश्चक्रं चाहं सुदर्शनम् ।
न शक्तौ स्वो रणे जेतुं तथा युक्तं नरर्षभम् ॥ ५१४
एव गतोऽपि शक्योऽय हंतुं नान्येन केनचित् ।
ऋते त्वां पुरुषव्याघ्र शपे सत्येन चानघ ॥ ५१५
ब्राह्मण्यः सत्यवादी च तपस्वी नियतव्रती ।
रिपुष्वपि दयावांश्च तस्मात्कर्णो वृषः स्मृतः ॥ ५१६

धृ० उ०—एकवीरवधेऽमोघा शक्तिः सूतात्मजे यदा ।
कस्मात्सर्वान्समुत्सृज्य स तां पार्थे न मुक्तवान् ॥ ५१७
आहूतो न निवर्तेयमिति तस्य महाव्रतम् ।
स्वयं मार्गयितव्यः स सूतपुत्रेण फाल्गुनः ॥ ५१८
विरोधी च कुमंत्री च प्राज्ञमानी ममात्मजः ।
यस्यैष समतिक्रांतो वधोपायोऽर्जुनं प्रति ॥ ५१९
तवापि समतिक्रांतमेतद्गावल्गणे कथम् ।
एतमर्थं महाबुद्धे यत्त्वया नावबोधितः ॥ ५२०

सं० उ०—दुर्योधनस्य शकुनेर्मम दुःशासनस्य च ।
रात्रौ रात्रौ भवत्येषा नित्यमेव समर्थना ॥ ५२१

श्वः सर्वसैन्यामुत्सृज्य जहि कर्ण धनंजयम् ।
प्रेष्यवत्पांडुपांचालानुपभोक्ष्यामहे ततः ॥ ५२२
अथवा निहते पार्थे पांडवान्यतमं ततः ।
स्थापयेद्यदि वार्ष्णेयस्तस्मात्कृष्णो हि हन्यताम् ॥ ५२३
कृष्णो हि मूलं पांडूनां पार्थः स्कंध इवोद्गतः ।
शाखा इवेतरे पार्थाः पांचालाः पत्रसंज्ञिताः ॥ ५२४
सा तु बुद्धिः कृताप्येवं जाग्रति त्रिदशेश्वरे ।
अप्रमेये हृषीकेशे युद्धकालेऽप्यमुह्यत ॥ ५२५
अर्जुनं चापि राधेयात्सदा रक्षति केशवः ।
न ह्येनमैच्छत्प्रमुखे सौतेः स्थापयितुं रणे ॥ ५२६
परिचिंत्य तु पश्यामि चक्रायुधमरिंदमम् ।
न सोऽस्ति त्रिषु लोकेषु यो जयेत जनार्दनम् ॥ ५२७
घटोत्कचे तु निहते सूतपुत्रेण तां निशाम् ।
दुःखामर्षवशं प्राप्तो धर्मराजो युधिष्ठिरः ॥ ५२८
दृष्ट्वा भीमेन महतीं वार्यमाणां चमूं तव ।
धृष्टद्युम्नमुवाचेदं कुंभयोनिं निवारय ॥ ५२९
त्वं हि द्रोणविनाशाय समुत्पन्नो हुताशनात् ॥ ५३०
सशरः कवची खड्गी धन्वी च परतापनः ।
अभिद्रव रणे हृष्टो मा च ते भीः कथंचन ॥ ५३१
ततो दुर्योधनो राजा सर्वोद्योगेन पांडवान् ।
अभ्यद्रवत संक्रुद्ध इच्छन्द्रोणस्य जीवितम् ॥ ५३२
ततः प्रववृते युद्धं श्रांतवाहनसैनिकम् ।
पांडवानां कुरूणां च गर्जतामितरेतरम् ॥ ५३३
निद्रांधास्ते महाराज परिश्रांताश्च संयुगे ।
नाभ्यपद्यंत समरे कांचिच्चेष्टां महारथाः ॥ ५३४
त्रियामा रजनी चैषा घोररूपा भयानका ।
सहस्रयामप्रतिमा बभूव प्राणहारिणी ॥ ५३५
ते तदा पारयंतश्च ह्रीमंतश्च विशेषतः ।
स्वधर्ममनुपश्यंतो न जहुः स्वमनीकिनीम् ॥ ५३६
आत्मानं समरे जघ्नुः स्वानेव च परानपि ।
नानावाचो विमुंचंतो निद्रांधास्ते महारणे ॥ ५३७

तेषामेतादृशीं चेष्टां विज्ञाय पुरुषर्षभ ।
उवाच वाक्यं बीभत्सुरुच्चैः सन्नादयन् दिशः ॥ ५३८
श्रांता भवंतो निद्रांधाः सर्व एव सवाहनाः ॥
तमसा च वृते सैन्ये रजसा बहुलेन च ॥ ५३९
ते यूयं यदि मन्यध्वमुपारमत सैनिकाः ।
निमीलयत चात्रैव रणभूमौ मुहूर्तकम् ॥ ५४०
ततो विनिद्रा विश्रांताश्चंद्रमस्युदिते पुनः ।
संसाधयिष्यथान्योन्यं संग्रामं कुरुपांडवाः ॥ ५४१
तद्वचः सर्वधर्मज्ञा धार्मिकस्य विशांपते ।
अरोचयंत सैन्यानि तथा चान्योन्यमब्रुवन् ॥ ५४२
तत्संपूज्य वचोऽक्रूरं सर्वसैन्यानि भारत ।
मुहूर्तमस्वपन् राजन् श्रांतानि भरतर्षभ ॥ ५४३
अश्वपृष्ठेषु चाप्यन्ये रथनीडेषु चापरे ।
गजस्कंधगताश्चान्ये शेरते चापरे क्षितौ ॥ ५४४
गजास्ते पन्नगाभोगैर्हस्तैर्भूरेणुगुंठितैः ।
निद्रांधा वसुधां चक्रुर्घ्राणनिश्वासशीतलान् ॥ ५४५
सुप्ताः शुशुभिरे तत्र विश्वसंतो महीतले ।
विकीर्णा गिरयो यद्वन्निश्वसाद्भिर्महोरगैः ॥ ५४६
समां च विषमां चक्रुः खुराग्रैर्विकृतां महीम् ।
हयाः कांचनयोक्त्रास्ते केशरालंबिभिर्युगैः ॥ ५४७
तद्बलं निद्रया मग्नमबोधं प्रास्वपद्भृशम् ।
कुशलैः शिल्पिभिर्न्यस्तं पटे चित्रमिवाद्भुतम् ॥ ५४८

---

## ११

ततः कुमुदनाथेन कामिनीगंडपांडुना ।
नेत्रानंदेन चंद्रेण माहेन्द्री दिगलंकृता ॥ ५४९
ततो मुहूर्ताद्भगवान्पुरस्ताच्छशलक्षणः ।
अरुणं दर्शयामास ग्रसज्ज्योतिःप्रभां प्रभुः ॥ ५५०
अरुणस्य तु तस्यानु जातरूपसमप्रभम् ।
रश्मिजालं महच्चंद्रो मंदमंदमवासृजत् ॥ ५५१

ततो मुहूर्ताद्भुवनं ज्योतिर्भूतमिवाभवत् ।
अप्रख्यमप्रकाशं च जगामाशु तमस्तथा ॥ ५५२
प्रतिप्रकाशिते लोके दिवाभूते निशाकरे ।
विचेरुर्न विचेरुश्च राजन्नक्तंचरास्ततः ॥ ५५३
बोध्यमानं तु तत्सैन्यं राजंश्चंद्रस्य रश्मिभिः ।
बुबुधे शतपत्राणां वनं सूर्यांशुभिर्यथा ॥ ५५४
यथा चंद्रोदयोद्भूतः क्षुभितः सागरोऽभवत् ।
तथा चंद्रोदयोद्भूतः स बभूव बलार्णवः ॥ ५५५
ततः प्रववृते युद्धं पुनरेव विशांपते ।
लोके लोकविनाशाय परं लोकमभीप्सताम् ॥ ५५६
ततो दुर्योधनो द्रोणमभिगम्याब्रवीदिदम् ।
अमर्षवशमापन्नो जनयन् हर्षतेजसी ॥ ५५७
न मर्षणीयाः संग्रामे विश्रमंतः श्रमान्विताः ।
सपत्ना ग्लानमनसो लब्धलक्षा विशेषतः ॥ ५५८
न पांडवेया न वयं नान्ये लोके धनुर्धराः ।
युध्यमानस्य ते तुल्याः सत्यमेतद्ब्रवीमि ते ॥ ५५९
स भवान्मर्षयत्येतांस्त्वत्तो भीतान् विशेषतः ।
शिष्यत्वं वा पुरस्कृत्य मम वा मंदभाग्यताम् ॥ ५६०
एवमुद्धर्षितो द्रोणः कोपितश्च सुतेन ते ।
समन्युरब्रवीद्राजन्दुर्योधनमिदं वचः ॥ ५६१
स्थविरः सन् परं शक्त्या घटे दुर्योधनाहवे ॥ ५६२
अतः परं मया कार्यं क्षुद्र विजयगृद्धिना ।
अनस्त्रविदयं सर्वो हंतव्योऽस्त्रविदा जनः ॥ ५६३
यद्भवान् मन्यते चापि शुभं वा यदि वाशुभम् ।
तद्वै कर्तास्मि कौरव्य वचनात्तव नान्यथा ॥ ५६४
निहत्य सर्वपांचालान्युद्धे कृत्वा पराक्रमम् ।
विमोक्ष्ये कवचं राजन् सत्येनायुधमालभे ॥ ५६५
त्वं तु सर्वाभिशंकित्वान्निष्ठुरः पापनिश्चयः ।
श्रेयसस्त्वाद्धिते युक्तांस्तत्तद्वक्तुमिहेच्छसि ॥ ५६६
मन्यसे यच्च कौंतेयमर्जुनं श्रांतमाहवे ।
गच्छ त्वमपि कौंतेयमात्मार्थे जहि मा चिरम् ॥ ५६७

इमान् किं क्षत्रियान् सर्वान् घातयिष्यस्यनागसः ।
त्वमस्य मूलं वैरस्य तस्मादासादयार्जुनम् ॥ ५६८
ततस्त्वभ्यवसृत्यैव संग्रामादुत्तरां दिशम् ।
आतिष्ठदाहवे द्रोणो विधूमोऽग्निरिव ज्वलन् ॥ ५६९
तमाजिशीर्षाद्विक्रांतमपक्रांतं निशम्य तु ।
समकंपंत सैन्यानि पांडवानां विशांपते ॥ ५७०
ततो विराटद्रुपदौ द्रोणं प्रति ययू रणे ।
तथा चरंतं संग्रामे भृशं समयदुर्जयम् ॥ ५७१
द्रुपदस्य ततः पौत्रास्त्रय एव विशांपते ।
चेदयश्च महेष्वासा द्रोणमेवाभ्ययुर्युधि ॥ ५७२
तेषां द्रुपदपौत्राणां त्रयाणां निशितैः शरैः ।
त्रिभिर्द्रोणोऽहरत्प्राणांस्ते हता न्यपतन्भुवि ॥ ५७३
ततो द्रोणोऽजयद्युद्धे चेदिकेकयसृंजयान् ।
मत्स्यांश्चैवाजयत्कृत्स्नं भारद्वाजो महारथान् ॥ ५७४
ततस्तु द्रुपदः क्रोधाच्छरवर्षमवासृजत् ।
द्रोणं प्रति महाराज विराटश्चैव संयुगे ॥ ५७५
ततो द्रोणो महाराज क्रोधामर्षसमन्वितः ।
भल्लाभ्यां भृशतीक्ष्णाभ्यां चिच्छेद धनुषी तयोः ॥ ५७६
ततो द्रोणः सुपीताभ्यां भल्लाभ्यामरिमर्दन ।
द्रुपदं च विराटं च प्रेषयामास मृत्यवे ॥ ५७७
द्रोणस्य कर्म तद्दृष्ट्वा कोपदुःखसमन्वितः ।
शशाप रथिनां मध्ये धृष्टद्युम्नो महामनाः ॥ ५७८
इष्टपूर्तात्तथा क्षात्राद्ब्राह्मण्याच्च स नश्यतु ।
द्रोणो यस्याद्य मुच्येत यं वा द्रोणः पराभवेत् ॥ ५७९
इति तेषां प्रतिश्रुत्य मध्ये सर्वधनुष्मताम् ।
आयाद्द्रोणं सहानीकः पांचाल्यः परवीरहा ॥ ५८०
तथा संसक्तयुद्धं तदभवद्भृशदारुणम् ।
अथ संध्यागतः सूर्यः क्षणेन समपद्यत ॥ ५८१
ते तथैव महाराज दंशिता रणमूर्धनि ।
संध्यागतं सहस्रांशुमादित्यमुपतस्थिरे ॥ ५८२

उदिते तु सहस्रांशौ तप्तकांचनसप्रभे ।
प्रकाशितेषु लोकेषु पुनर्युद्धमवर्तत ॥ ५८३
शुद्धात्मानः शुद्धवृत्ता राजन् स्वर्गपुरस्कृताः ।
आर्यं युद्धमवर्तंत परस्परजिगीषवः ॥ ५८४
न तत्रासीदधर्मिष्ठमशस्त्रं युद्धमेव च ।
न तत्र कर्णी नालीकोन लिप्तो न च बस्तिकः ॥ ५८५
न सूचिकपिशो नैव न गवास्थिर्गजास्थिकः ।
इषुरासीन्न संश्लिष्टो न पूर्तिर्न च जिह्मग ॥ ५८६
पांचालानां ततो द्रोणोऽप्यकरोत्कदनं महत् ॥ ५८७
तेषां तु च्छाद्यमानानां पांचालानां समंततः ।
अभवद्भैरवो नादो वध्यतां शरवृष्टिभिः ॥ ५८८
कच्चिद्द्रोणो न नः सर्वान् क्षपयेत्परमास्त्रवित् ।
समिद्धः शिशिरापाये दहन्कक्षमिवानल ॥ ५८९
न चैनं संयुगे कश्चित् समर्थः प्रतिवीक्षितुम् ।
न चैनमर्जुनो जातु प्रतियुध्येत धर्मवित ॥ ५९०
त्रस्तान् कुंतीसुतान् दृष्ट्वा द्रोणसायकपीडितान् ।
मतिमाञ्छ्रेयसे युक्तः केशवोऽर्जुनमब्रवीत् ॥ ५९१
नैष युद्धेन संग्रामे जेतुं शक्यः कथंचन ।
सधनुर्धन्विनां श्रेष्ठो देवैरपि सवासवैः ॥ ५९२
न्यस्तशस्त्रस्तु संग्रामे शक्यो हंतुं भवेन्नृभिः ।
आस्थीयतां जये योगो धर्ममुत्सृज्य पांडवा. ॥ ५९३
अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम ।
तं हतं संयुगे कश्चिदस्मै शंसतु मानवः ॥ ५९४
एतन्नारोचयद्राजन् कुंतीपुत्रो धनंजयः ।
अन्ये त्वरोचयन् सर्वे कृच्छ्रेण तु युधिष्ठिरः ॥ ५९५
ततो भीमो महाबाहुरनीके स्वे महागजम् ।
जघान गदया राजन्नश्वत्थामानमित्युत ।
परप्रमथनं घोरं मालवस्येन्द्रवर्मणः ॥ ५९६
भीमसेनस्तु सव्रीडमुपेत्य द्रोणमाहवे ।
अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह ॥ ५९७

संदिह्यमानो व्यथितः कुंतीपुत्रं युधिष्ठिरम् ।
अहतं वा हतं वेति पप्रच्छ सुतमात्मनः ॥ ५९८
स्थिरा बुद्धिर्हि द्रोणस्य न पार्थो वक्ष्यतेऽनृतम् ।
त्रयाणामपि लोकानामैश्वर्यार्थे कथंचन ।
तस्मात्तं परिपप्रच्छ नान्यं कंचिद्द्विजर्षभः ॥ ५९९
ततो निष्पांडवामुर्वीं करिष्यंते युधांपतिम् ।
द्रोणं ज्ञात्वा धर्मराजं गोविंदो व्यथितोऽब्रवीत् ॥ ६००
यद्यर्धदिवसं द्रोणो युध्यते मन्युमास्थितः ।
सत्यं ब्रवीमि ते सेना विनाशं समुपैष्यति ॥ ६०१
स भवांस्त्रातु नो द्रोणात्सत्याज्ज्यायोऽनृतं वचः ।
अनृतं जीवितस्यार्थे वदन् न स्पृश्यतेऽनृतैः ॥ ६०२
कामिनीषु विवाहेषु गवां भक्ते तथैव च ।
ब्राह्मणाभ्युपपत्तौ च अनृते नास्ति पातकम् ॥ ६०३
तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः ।
अव्यक्तमब्रवीद्राजन्हतः कुंजर इत्युत ॥ ६०४
तस्य पूर्वं रथः पृथ्व्याश्चतुरंगुलमुच्छ्रितः ।
बभूवैवं च तेनोक्ते तस्य वाहाः स्पृशन् महीम् ॥ ६०५
युधिष्ठिरात्तु तद्वाक्यं श्रुत्वा द्रोणो महारथः ।
पुत्रव्यसनसंतप्तो निराशो जीवितेऽभवत् ॥ ६०६
विचेताः परमोद्विग्नो धृष्टद्युम्नमवेक्ष्य च ।
योद्धुं नाशक्नुवद्राजन्यथापूर्वमरिंदम ॥ ६०७
तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसम् ।
पांचालराजस्य सुतो धृष्टद्युम्नः समाद्रवत् ६०८
ततः प्रयत्नमातिष्ठदाचार्यस्तस्य वारणे ।
न चास्यास्त्राणि राजेन्द्र प्रादुरासन्महात्मनः ॥ ६०९
तस्य त्वहानि चत्वारि क्षपा चैकास्यतो गता ।
तस्य चाह्नस्त्रिभागेन क्षयं जग्मुः पतत्रिणः ॥ ६१०
ततो भीमो दृढक्रोधाद्द्रोणस्याश्लिष्य तं रथम् ।
शनकैरिव राजेन्द्र द्रोणं वचनमब्रवीत् ॥ ६११
यदि नाम न युध्येरञ्छिक्षिता ब्रह्मबंधवः ।
स्वकर्मभिरसंतुष्टा न स्म क्षत्रं क्षयं व्रजेत् ॥ ६१२

अहिंसां सर्वभूतेषु धर्मं ज्यायस्तरं विदुः ।
तस्य च ब्राह्मणो मूलं भवांश्च ब्रह्मवित्तमः ॥ ६१३
एकस्यार्थे बहून् हत्वा पुत्रस्याधर्मविद्यया ।
स्वकर्मस्थान् विकर्मस्थो न व्यपत्रपसे कथम् ॥ ६१४
यस्यार्थे शस्त्रमादाय यमपेक्ष्य च जीवसि ।
स चाद्य पतितः शेते पृष्ठेनावेदितस्तव ॥ ६१५
एवमुक्तस्ततो द्रोणो भीमेनोत्सृज्य तद्धनुः ।
अभयं सर्वभूतानां प्रददौ योगमायिवान् । ६१६
तस्य तच्छिद्रमाज्ञाय धृष्टद्युम्नः प्रतापवान् ।
खड्गी रथादवप्लुत्य सहसा द्रोणमभ्ययात् ॥ ६१७
वयमेव तदाद्राक्ष्म पंच मानुषयोनयः ।
योगयुक्तं महात्मानं गच्छंतं परमां गतिम् ॥ ६१८
अहं धनंजयः पार्थो भारद्वाजस्य चात्मजः ।
वासुदेवश्च वार्ष्णेयो धर्मपुत्रश्च पांडवः ॥ ६१९
धिक्कृतः पार्षतस्तं तु सर्वभूतैः परामृशत् ।
तस्य मूर्धानमालंब्य गतसत्वस्य देहिनः ।
किंचिदब्रुवतः कायाद्विचकर्तासिना शिरः ॥ ६२०
हर्षेण महता युक्तो भारद्वाजे निपातिते ।
सिंहनादरवं चक्रे भ्रामयन् खड्गमाहवे ॥ ६२१
न हंतव्यो न हंतव्य इति ते सैनिकाश्च ह ।
उत्क्रोशन्नर्जुनश्चैव सानुक्रोशस्तमाव्रजत् ॥ ६२२
क्रोशमानेऽर्जुने चैव पार्थिवेषु च सर्वशः ।
धृष्टद्युम्नोऽवधीद्द्रोणं रथतल्पे नरर्षभम् ॥ ६२३
ते तु दृष्ट्वा शिरो राजन् भारद्वाजस्य तावकाः ।
पलायनकृतोत्साहा दुद्रुवुः सर्वतोदिशम् ॥ ६२४
अमर्षणीयं तद्दृष्ट्वा भारद्वाजस्य पातनम् ।
त्रस्तरूपतरा राजन् कौरवाः प्राद्रवन् भयात् ॥ ६२५
गांधारराजः शकुनिस्त्रस्तस्त्रस्ततरैः सह ।
हतं रुक्मरथं श्रुत्वा प्राद्रवत्साहितो रथैः ॥ ६२६
वरूथिनीं वेगवतीं विद्रुतां सपताकिनीम् ।
परिगृह्य महासेनां सूतपुत्रोऽप्ययाद्भयात् ॥ ६२७

रथनागाश्वकलिलां पुरस्कृत्य तु वाहिनीम् ।
मद्राणामीश्वरः शल्यो वीक्ष्यमाणोपयाद्भयात् ॥ ६२८
हतप्रवीरैर्भूयिष्ठैर्ध्वजैर्बहुपताकिभि ।
वृतः शारद्वतोऽगच्छत्कष्टं कष्टमिति ब्रुवन् ॥ ६२९

## १२

द्रवमाण बलं दृष्ट्वा पलायनकृतक्षणम् ।
दुर्योधनं समासाद्य द्रोणपुत्रोऽब्रवीदिदम् ॥ ६३०
किमियं द्रवते सेना त्रस्तरूपेव भारत ।
द्रवमाणा च राजेन्द्र नावस्थापयसे रणे ॥ ६३१
तत्तु दुर्योधनः श्रुत्वा द्रोणपुत्रस्य भाषितम् ।
घोरमप्रियमाख्यातुं नाशक्नोत्पार्थिवर्षभ ॥ ६३२
अथ शारद्वतो राजन्नार्तिमार्च्छत्पुनः पुनः ।
शशंस द्रोणपुत्राय यथा द्रोणो निपातितः ॥ ६३३
ततः क्रुद्धो रणे द्रौणिर्भृशं जज्वाल मारिष ।
यथेन्धनं महत्प्राप्य प्राज्वलद्धव्यवाहनः ॥ ६३४
तलं तलेन निष्पिष्य दंतैर्दंतानुपास्पृशत् ।
निश्वसन्नुरगो यद्वल्लोहिताक्षोऽभवत्तदा ॥ ६३५
तस्य क्रुद्धस्य राजेन्द्र वपुर्दीप्तमदृश्यत ।
अंतकस्येव भूतानि जिहीर्षोः कालपर्यये ॥ ६३६
अश्रुपूर्णे ततो नेत्रे व्यपमृज्य पुनः पुनः ।
उवाच कोपान्निश्वस्य दुर्योधनमिदं वचः ॥ ६३७
युद्धेष्वपि प्रवृत्तानां ध्रुव जयपराजयौ ।
द्वयमेतद्भवेद्राजन् वधस्तत्र प्रशस्यते ॥ ६३८
न्यायवृत्तो वधो यस्तु संग्रामे युध्यतो भवेत् ।
न स दुःखाय भवति तथा दृष्टो हि स द्विजैः ॥ ६३९
यत्तु धर्मप्रवृत्तः सन् केशग्रहणमाप्तवान् ।
पश्यतां सर्वसैन्यानां तन्मे मर्माणि कृंतति ॥ ६४०
यो ह्यसौ च्छद्मनाचार्यं शस्त्रं संन्यासयत्तदा ।
तस्याद्य धर्मराजस्य भूमिः पास्यति शोणितम् ॥ ६४१
धृष्टद्युम्नं च समरे हंताहं पापकारिणं ॥ ६४२

पित्रा तु मम सावस्था प्राप्ता निर्बधुना यथा ।
मयि शैलप्रतीकाशे पुत्रे शिष्ये च जीवति ॥ ६४३
धिङ्ममास्त्राणि दिव्यानि धिग्बाहू धिग्पराक्रमम् ।
यस्माद्द्रोणः सुतं प्राप्य केशग्रहमवाप्तवान् ॥ ६४४
अद्य पश्यंतु मे वीर्यं पांडवाः सजनार्दनाः ।
मृद्नतः सर्वसैन्यानि युगांतमिव कुर्वतः ॥ ६४५
न हि जानाति बीभत्सुस्तदस्त्रं न जनार्दनः ।
न भीमसेनो न यमौ न च राजा युधिष्ठिर. ॥ ६४६
सोऽहं नारायणास्त्रेण महता शत्रुतापनः ।
शत्रून् विध्वसयिष्यामि कदर्थीकृत्य पाडवान् ॥ ६४७
तच्छ्रुत्वा द्रोणपुत्रस्य पर्यवर्तत वाहिनी ।
ततः सर्वे महाशंखान् दध्मुः पुरुषसत्तमा ॥ ६४८
तं शब्दं पाडवाः श्रुत्वा पर्जन्यनिनदोपमम् ।
समेत्य रथिना श्रेष्ठाः सहिताश्चाप्यमत्रयन् ॥ ६४९
प्रागेव विद्रुतान् दृष्ट्वा धार्तराष्ट्रान् युधिष्ठिरः ।
पुनश्च तुमुलं शब्दं श्रुत्वार्जुनमथाब्रवीत् ॥ ६५०
क एष कौरवान् दीर्णानवस्थाप्य महारथः ।
निवर्तयति युद्धार्थं मृधे देवेश्वरो यथा ॥ ६५१
अ० ३०—यस्मिञ्जाते ददौ द्रोणो गवा दशशतं धनम् ।
ब्राह्मणेभ्यो महार्हेभ्यः सोऽश्वत्थामैष गर्जति ॥ ६५२
जातमात्रेण वीरेण येनोच्चैश्रवसा यथा ।
ह्रेषता कंपिता भूमिर्लोकाश्च सकलास्त्रयः ॥ ६५३
तच्छ्रुत्वांतर्हितं भूत नाम तस्याकरोत्तदा ।
अश्वत्थामेति सोऽद्यैष शूरो नदति पांडव ॥ ६५४
यो ह्यनाथ इवाक्रम्य पार्षतेन हतस्तथा ।
कर्मणा सुनृशंसेन तस्य नाथो व्यवस्थितः ॥ ६५५
गुरुं मे यत्र पांचाल्यः केशपक्षे परामृशत् ।
तन्न जातु क्षमेद्द्रौणिर्जानन्पौरुषमात्मन· ॥ ६५६
उपचीर्णो गुरुर्मिथ्या भवता राज्यकारणात् ।
धर्मज्ञेन सता नाम सोऽधर्मः सुमहान्कृतः ॥ ६५७

चिरं स्थास्यति चाकीर्तिस्त्रैलोक्ये सचराचरे ।
रामे वालिवधाद्यद्वदेवं द्रोणे निपातिते ॥ ६५८
सर्वधर्मोपपन्नोऽयं स मे शिष्यश्च पांडवः ।
नायं वदति मिथ्येति प्रत्ययं कृतवांस्त्वयि ॥ ६५९
स सत्यकंचुकं नाम प्रविष्टेन ततोऽनृतम् ।
आचार्य उक्तो भवता हत. कुंजर इत्युत ॥ ६६०
आत्तशस्त्रमधर्मेण घातयित्वा गुरुं भवान् ।
रक्षत्विद.नी सामात्यो यदि शक्तोऽसि पार्षतम् ॥ ६६१
ग्रस्तमाचार्यपुत्रेण क्रुद्धेन हतबंधुना ।
सर्वे वय परित्रातुं न शक्ष्यामोऽद्य पार्षतम् ॥ ६६२
पुत्रान् भ्रातॄन् पितुन् दारान् जीवितं चैव वासविः ।
त्यजेत्सर्वं मम प्रेम्णा जानात्येवं हि मे गुरुः ॥ ६६३
स मया राज्यकामेन हन्यमानो ह्युपेक्षितः ।
तस्मादवाक्शिरा राजन् प्राप्तोऽस्मि नरकं प्रभो ॥ ६६४
ब्राह्मणं वृद्धमाचार्यं न्यस्तशस्त्रं महामुनिम् ।
घातयित्वाद्य राज्यार्थे मृतं श्रेयो न जीवितम् ॥ ६६५
अर्जुनस्य वचः श्रुत्वा नोचुस्तत्र महारथाः ।
अप्रियं वा प्रियं वापि महाराज धनंजयम् ॥ ६६६
तत क्रुद्धो महाबाहुर्भीमसेनोऽभ्यभाषत ।
कुत्सयन्निव कौंतेयमर्जुनं भरतर्षभ ॥ ६६७
मुनिर्यथारण्यगतो भाषसे धर्मसंहितम् ।
व्यस्तदण्डो यथा पार्थ ब्राह्मणः संशितव्रतः ॥ ६६८
न पूजयेत्त्वां कोन्वद्य यत्त्रयोदशवार्षिकम् ।
अमर्ष पृष्ठतः कृत्वा धर्ममेवाभिकांक्षसे ॥ ६६९
दिष्ट्या तात मनस्तेऽद्य स्वधर्ममनुवर्तते ।
आनृशंस्यं च ते दिष्ट्या बुद्धिः सततमच्युत ॥ ६७०
यत्तु धर्मप्रवृत्तस्य हृतं राज्यमधर्मतः ।
द्रौपदी च परामृष्टा सभामानीय शत्रुभिः ॥ ६७१
वनं प्रव्राजिताश्च स्म वल्कलाजिनवाससः ।
अनर्हमाणास्तं भावं त्रयोदशसमाः परैः ॥ ६७२

एतान्यमर्षस्थानानि मर्षितानि मयानघ ।
विदीर्यते मे हृदयं त्वया वाक्शल्यपीडितम् ॥ ६७३
अधर्ममेनं विपुलं धार्मिकः सन्न बुध्यसे ।
यत्त्वमात्मानमस्मांश्च प्रशंस्यान्न प्रशंससि ॥ ६७४
वासुदेवे स्थिते चापि द्रोणपुत्रं प्रशंससि ।
यः कलां षोडशीं पूर्णां धनंजय न तेऽर्हति ॥ ६७५
यथा वा तिष्ठ बीभत्सो सह सर्वैः सहोदरैः ।
अहमेनं गदापाणिर्जेष्याम्येको महाहवे ॥ ६७६
ततः पांचालराजस्य पुत्रः पार्थमथाब्रवीत् ।
संक्रुद्धमिव नर्दंतं हिरण्यकशिपुर्हरिम् ॥ ६७७
अपक्रांतः स्वधर्माच्च क्षात्रधर्मव्यपाश्रितः ।
अमानुषेण हंत्यस्मानस्त्रेण क्षुद्रकर्मकृत् ॥ ६७८
तथा मायां प्रयुंजानमसह्यं ब्राह्मणब्रुवम् ।
माययैव निहन्याद्यो न युक्तं पार्थ तत्र किम् ॥ ६७९
यच्च मां धार्मिको भूत्वा ब्रवीषि गुरुघातिनम् ।
तदर्थमहमुत्पन्नः पांचाल्यस्य सुतोऽनलात् ॥ ६८०
यो ह्यनस्त्रविदो हन्याद्ब्रह्मास्त्रैः क्रोधमूर्छितः ।
सर्वोपायैर्न स कथं वध्यः पुरुषसत्तम ॥ ६८१
योऽसौ ममैव नान्यस्य बाधवान् युधि जज्ञिवान् ।
छित्त्वापि तस्य मूर्धानं नैवास्मि विगतज्वरः ॥ ६८२
तच्च मे कृंतते मर्म यन्न तस्य शिरो मया ।
निषादविषये क्षिप्तं जयद्रथशिरो यथा ॥ ६८३
स शत्रुर्निहतः संख्ये मया धर्मेण पांडव ।
यथा त्वया हतः शूरो भगदत्तः पितुः सखा ॥ ६८४
पितामहं रणे हत्वा मन्यसे धर्ममात्मनः ।
मया शत्रौ हते कस्मात्पापे धर्मं न मन्यसे ॥ ६८५
सबंधावनतं पार्थ न मां त्वं वक्तुमर्हसि ।
स्वगात्रकृतसोपानं निषण्णमिव दंतिनम् ॥ ६८६
क्षमामि ते सर्वमेव वाग्व्यतिक्रममर्जुन ।
द्रौपद्या द्रौपदेयानां कृते नान्येन हेतुना ॥ ६८७

श्रुत्वा द्रुपदपुत्रस्य ता वाचः क्रूरकर्मणः ।
तूष्णींबभूवू राजानः सर्वे एव विशांपते ॥ ६८८

अर्जुनस्तु कटाक्षेण जिह्मं विप्रेक्ष्य पार्षतम् ।
सबाष्पनतिनि श्वस्य धिग्धिगित्येव चाब्रवीत् ॥ ६८९

युधिष्ठिरश्च भीमश्च यमौ कृष्णस्तथा परे ।
आसन् सुव्रीडिता राजन् सात्यकिस्त्वब्रवीदिदम् ॥ ६९०

नेहास्ति पुरुषः कश्चिद्य इम पापपूरुषम् ।
भाषमाणमकल्याणं शीघ्र हन्यान्नराधमम् ॥ ६९१

एतत्कृत्वा महत्पापं निंदितः सर्वसाधुभिः ।
न लज्जसे कथं वक्तु समिति प्राप्य शोभनाम् ॥ ६९२

कथं च शतधा जिह्वा न ते मूर्धा च दीर्यते ।
गुरुमाक्रोशतः क्षुद्र न चाधर्मेण पात्यसे ॥ ६९३

कस्त्वेतद्व्यवसेदार्यस्त्वदन्यः पुरुषाधमः ।
निगृह्य केशेषु वध गुरोर्धर्मात्मनः सतः ॥ ६९४

उक्तवांश्चापि यत्पार्थो भीष्मं प्रति नरर्षभम् ।
तथातो विहितस्तेन स्वयमेव महात्मना ॥ ६९५

तस्यापि तव सोदर्यो निहंता पापकृत्तमः ।
नान्य पांचालपुत्रेभ्यो विद्यते भुवि पापकृत् ॥ ६९६

स चापि सृष्टः पित्रा ते भीष्मस्यांतकरः किल ।
शिखंडी रक्षितो येन स च मृत्युर्महात्मनः ॥ ६९७

पुनश्चेदीदृशीं वाचं मत्समीपे वदिष्यसि ।
शिरस्ते पोथयिष्यामि गदया वज्रकल्पया ॥ ६९८

१० उ०—श्रूयते श्रूयते चेति क्षम्यते चेति माधव ।
सदाऽनार्योऽशुभः साधुं पुरुषं क्षेप्तुमिच्छति ॥ ६९९

क्षमा प्रशस्यते लोके न तु पापोऽर्हति क्षमाम् ।
क्षमावंत हि पापात्मा जितोऽयमिति मन्यते ॥ ७००

स त्वं क्षुद्रसमाचारो नीचात्मा पापनिश्चयः ।
आकेशाग्रान्नखाग्राच्च वक्तव्ये वक्तुमिच्छसि ॥ ७०१

यः स भूरिश्रवाश्छिन्नभुजः प्रायगतस्त्वया ।
वार्यमाणेन हि हतस्ततः पापतरं नु किम् ॥ ७०२

व्यूहमानो मया द्रोणो दिव्येनास्त्रेण संयुगे ।
विशिष्टशस्त्रो निहतः किं तत्र क्रूर दुष्कृतम् ॥ ७०३
स त्वमेवंविधं कृत्वा कर्म चांडालवत्स्वयम् ।
वक्तुमर्हसि वक्तव्यः कस्मात्त्वं परुषाण्यथ ॥ ७०४
जोषमास्व न मां भूयो वक्तुमर्हस्यतः परम् ।
अधरोत्तरमेतद्धि यन्मां त्वं वक्तुमर्हसि ॥ ७०५
एवमादीनि वाक्यानि क्रूराणि परुषाणि च ।
श्रावितः सात्यकिः श्रीमानाकंपित इवाभवत् ॥ ७०६
तच्छ्रुत्वा क्रोधताम्राक्षः सात्यकिस्त्वाददे गदाम् ।
विनिश्वस्य यथा सर्पः प्रणिधाय रथे धनुः ॥ ७०७
तमापतंतं सहसा महाबलममर्षणम् ।
चोदितो वासुदेवेन भीमसेनो महाबलः ।
अवप्लुत्य रथात्तूर्णं बाहुभ्यां समवारयत् ॥ ७०८
तौ वृषाविव नर्दंतौ बलिनौ बाहुशालिनौ ॥ ७०९
त्वरया वासुदेवश्च धर्मराजश्च मारिष ।
यत्नेन महता वीरौ वारयामासतुस्ततः ॥ ७१०

---

## १३

ततः समागमो राजन् कुरुपांडवसेनयोः ।
पुनरेवाभवत्तीव्रः पूर्णसागरयोरिव ॥ ७११
प्रादुश्चक्रे ततो द्रौणिरस्त्रं नारायणं तदा ।
अभिसंधाय पांडूनां पांचालानां च वाहिनीम् ॥ ७१२
प्रादुरासंस्ततो बाणा दीप्ताग्राः खे सहस्रशः ।
पांडवान् क्षपयिष्यंतो दीप्तास्या पन्नगा इव ॥ ७१३
चतुश्चक्रा द्विचक्राश्च शतघ्न्यो बहुला गदाः ।
चक्राणि च क्षुरांतानि मंडलानीव भास्वतः ॥ ७१४
शस्त्राकृतिभिराकीर्णमतीव पुरुषर्षभ ।
दृष्ट्वांतरिक्षमाविग्नाः पांडुपांचालसृंजयाः ॥ ७१५
यथा यथा ह्ययुध्यंत पांडवानां महारथाः ।
तथा तथा तदस्त्रं वै व्यवर्धत जनाधिप ॥ ७१६
आपूर्यमाणेनास्त्रेण सैन्ये क्षीयति च प्रभो ।
जगाम परमं त्रासं धर्मपुत्रो युधिष्ठिरः ॥ ७१७

द्रवमाणं तु तत्सैन्यं दृष्ट्वा विगतचेतनम् ।
मध्यस्थतां च पार्थस्य धर्मपुत्रोऽब्रवीदिदम् ॥ ७१८
धृष्टद्युम्न पलायस्व सह पांचालसेनया ।
सात्यके त्वं च गच्छस्व वृष्ण्यंधकवृतो महान् ॥ ७१९
वासुदेवोऽपि धर्मात्मा करिष्यत्यात्मनः क्षमम् ।
श्रेयोऽभ्युपदिशत्येष लोकस्य किमुतात्मनः ॥ ७२०
संग्रामस्तु न कर्तव्यः सर्वसैन्यान् ब्रवीमि वः ।
अहं हि सह सोदर्यैः प्रवेक्ष्ये हव्यवाहनम् ॥ ७२१
भीष्मद्रोणार्णवं तीर्त्वा संग्रामे भीरु दुस्तरे ।
निमज्जिष्यामि सलिले सगणो द्रौणिगोष्पदे ॥ ७२२
कामः संपद्यतामस्य बीभत्सोराशु मां प्रति ।
कल्याणवृतिराचार्यो मया युधि निपातितः ॥ ७२३
येन बालः स सौभद्रो युद्धानामविशारदः ।
समर्थैर्बहुभिः क्रूरैर्घातितो नाभिपालित. ॥ ७२४
येन विब्रुवती प्रश्नं तथा कृष्णा सभां गता ।
उपेक्षिता सपुत्रेण दासभावं नियच्छती ॥ ७२५
येन ब्रह्मास्त्रविदुषा पांचालाः सत्यजिन्मुखाः ।
कुर्वाणा मज्जये यत्नं समूला विनिपातिताः ॥ ७२६
योऽसावत्यंतमस्मासु कुर्वाण· सौहृदं परम् ।
हतस्तदर्थे मरणं गमिष्यामि सबान्धवः ॥ ७२७
एवं ब्रुवति कौंतेये दाशार्हस्त्वरितस्ततः ।
निवार्य सैन्यं बाहुभ्यामिदं वचनमब्रवीत् ॥ ७२८
शीघ्रं न्यस्यत शस्त्राणि वाहेभ्यश्चावरोहत ।
एष योगोऽत्र विहितः प्रतिषेधे महात्मना ॥ ७२९
द्विपाश्वस्यंदनेभ्यश्च क्षिप्रं सर्वेऽवरोहत ।
एवमेतन्न वो हन्यादस्त्रं भूमौ निरायुधान् ॥ ७३०
यत्वेतत्प्रतियोत्स्यंति मनसापीह केचन ।
निहनिष्यति तान् सर्वान् रसातलगतानपि ॥ ७३१
ते वचस्तस्य तच्छ्रुत्वा वासुदेवस्य भारत ।
ईषुः सर्वे समुत्स्रष्टुं मनोभिः करणेन च ॥ ७३२
अ० उ०—भीम नारायणास्त्रे मे गोषु च ब्राह्मणेषु च ।
एतेषु गांडिवं न्यस्यमेतद्धि व्रतमुत्तमम् ॥ ७३३

तस्मिन् प्रशांते विधिना तेन तेजसि दुःसहे ।
बभुवुर्विमलाः सर्वा दिशः प्रदिश एव च ॥ ७३४
हतशेषं बलं तत्तु पांडवानामतिष्ठत ।
अस्त्रव्युपरमं दृष्ट्वा तव पुत्रजिघांसया ॥ ७३५
व्यवस्थिते बले तस्मिन्नस्त्रे प्रतिहते तदा ।
दुर्योधनो महाराज द्रोणपुत्रमथाब्रवीत् ॥ ७३६
आचार्यपुत्र यद्येतद्भूरिरस्त्र न प्रयुज्यते ।
अन्यैर्गुरुघ्ना वध्यंतामस्त्रैरस्त्रविदां वर ॥ ७३७
स तु यत्तो रणे स्थित्वा वार्युपस्पृश्य वीर्यवान् ।
देवैरपि सुदुर्धर्षमस्त्रमाग्नेयमादधे ॥ ७३८
ततस्तुमुलमाकाशे शरवर्षमजायत ।
पावकार्चिःपरीतं तत्पार्थमेवाभिपुप्लुवे ॥ ७३९
कृत्स्ना ह्यक्षौहिणी राजन् सव्यसाची च पाडवः ।
तमसा संवृते लोके नादृश्यंत महाहवे ॥ ७४०
अर्जुनस्तु महाराज ब्राह्ममस्त्रमुदैरयत् ।
सर्वास्त्रप्रतिघातार्थं विहितं पद्मयोनिना ।
ततो मुहूर्तादिव तत्तमो व्युपशशाम ह ॥ ७४१
तत्राद्भुतमपश्याम कृत्स्नामक्षौहिणीं हताम् ॥
अनभिज्ञेयरूपां च प्रदग्धामस्त्रतेजसा ॥ ७४२
ततो वीरौ महेष्वासौ विमुक्तौ केशवार्जुनौ ।
सहितौ समदृश्येतां तमसीव तमोनुदौ ॥ ७४३
हताविति ह तत्रासीत्सेनयोरुभयोर्मतिः ।
तावक्षतौ प्रमुदितौ दध्मतुर्वारिजोत्तमौ ॥ ७४४
विमुक्तौ च महात्मानौ दृष्ट्वा द्रौणिः सुदुःखितः ।
मुहूर्तं चिंतयामास किं त्वेतदिति मारिष ॥ ७४५
चिंतयित्वा तु राजेन्द्र ध्यानशोकपरायणः ।
निश्वसन् दीर्घमुष्णं च विमनाश्चाभवत्ततः ॥ ७४६
ततो द्रौणिर्धनुस्त्यक्त्वा रथात्प्रस्कंद्य वेगितः ।
धिग्धिक्सर्वमिदं मिथ्येत्युक्त्वा संप्राद्रवद्रणात् ॥ ७४७

इति श्रीसंक्षिप्तमहाभारते द्रोणपर्व समाप्तम् । श्लो. ७४७.

# ८ कर्णपर्व.

## १

ततो द्रोणे हते राजन् दुर्योधनमुखा नृपाः ।
भृशमुद्विग्नमनसो द्रोणपुत्रमुपागमन् ॥ १
ते मुहूर्तं समाश्वास्य हेतुभिः शास्त्रसंमितैः ।
रात्र्यागमे महीपालाः स्वानि वेश्मानि भेजिरे ॥ २
ते वेश्मस्वपि कौरव्य पृथ्वीशा नाप्नुवन् सुखम् ।
चिंतयन्तः क्षयं तीव्रं दुःखशोकसमन्विताः ॥ ३
तथा तु सचिंतयता तान् क्लेशान् द्यूतकारितान् ।
दुःखेन क्षणदा राजन् जगामाब्दशतोपमा ॥ ४
ततः प्रभाते विमले स्थिता दिष्टस्य शासने ।
चक्रुरावश्यकं सर्वे विधिदृष्टेन कर्मणा ॥ ५
ते कृत्वावश्यकार्याणि समाश्वास्य च भारत ।
योगमाज्ञापयामासुर्युद्धाय च विनिर्ययुः ॥ ६
कर्णं सेनापतिं कृत्वा कृतकौतुकमंगलाः ।
पूजयित्वा द्विजश्रेष्ठान् दधिपात्रघृताक्षतैः ॥ ७
निष्कैर्गोभिर्हिरण्यैश्च वासोभिश्च महाधनैः ।
वद्यमाना जयाशीर्भिः सूतमागधवंदिभिः ॥ ८
तथैव पांडवा राजन् कृतपूर्वाह्णिकक्रियाः ।
शिबिरान्निर्ययुस्तूर्णं युद्धाय कृतनिश्चयाः ॥ ९
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
कुरूणां पांडवानां च परस्परजयैषिणाम् ॥ १०
तयोर्द्वौ दिवसौ युद्धं कुरुपांडवसेनयोः ।
कर्णे सेनापतौ राजन् बभूवाद्भुतदर्शनम् ॥ ११
ततः शत्रुक्षयं कृत्वा सुमहांतं रणे वृषः ।
पश्यतां धार्तराष्ट्राणां फाल्गुनेन निपातितः ॥ १२
ततस्तु संजयः सर्वं गत्वा नागपुरं द्रुतम् ।
आचष्टे धृतराष्ट्राय यद्वृत्तं कुरुजांगले ॥ १३
तच्छ्रुत्वा तु महाराज धृतराष्ट्रोऽम्बिकासुतः ।
शोकस्यांतमपश्यन् वै हतं मेने सुयोधनम् ॥ १४

विह्वलः पतितो भूमौ नष्टचेता इव द्विपः ॥ १५
तस्मिन्निपतिते भूमौ विह्वले राजसत्तमे ।
आर्तनादो महानासीत्स्त्रीणां भरतसत्तम ॥ १६
ततस्ताः संजयो राजन् समाश्वासयदातुराः ।
मुह्यमानाः सुबहुशो मुंचंत्यो वारि नेत्रजम् ॥ १७
स लब्ध्वा शनकैः संज्ञां ताश्च दृष्ट्वा स्त्रियो नृपः ।
उन्मत्त इव राजेन्द्र स्थितस्तूर्ष्णी विशांपते । १८
धृत० उ०—यमाश्रित्य महाबाहुं विद्विषां जयकांक्षया ।
दुर्योधनोऽकरोद्वैरं पांडुपुत्रैर्महारथैः ॥ १९
स कथं रथिनां श्रेष्ठः कर्णः पार्थेन संयुगे ।
निहतः पुरुषव्याघ्रः प्रसह्यासह्यविक्रमः ॥ २०
शार्ङ्गगांडीवधन्वानौ सहितावपराजितौ ।
अहं दिव्याद्रथादेकः पातयिष्यामि संयुगे ॥ २१
इति यः सतत मंदमवोचल्लोभमोहितम् ।
दुर्योधनमवाचीनं राज्यकामुकमातुरम् ॥ २२
वृषो महेन्द्रो देवेषु वृषः कर्णो नरेष्वपि ।
तृतीयमन्यलोकेषु वृषं नैवानुशुश्रुम ॥ २३
तं श्रुत्वा निहतं कर्णं द्वैरथे सव्यसाचिना ।
शोकार्णवे निमग्नोऽहं भिन्ना नौरिव सागरे ॥ २४
ईदृशैर्यद्यहं दुःखैर्न विनश्यामि संजय ।
वज्राद्दृढतरं मन्ये हृदयं दुर्भिदं मम ॥ २५
ज्ञातिसंबंधिमित्राणामिमं श्रुत्वा पराभवम् ।
को मदन्यः पुमांल्लोके न जह्यात्सूत जीवितम् ॥ २६
विषमग्निं प्रपातं च पर्वताग्रादहं वृणे ।
न हि शक्ष्यामि दुःखानि सोढुं कष्टानि संजय ॥ २७
अहमेव पुरा भूत्वा सर्वलोकस्य सत्कृतः ।
परिभूतः कथं सूत परैः शक्ष्यामि जीवितुम् ॥ २८
यथा हि शकुनिं गृह्य छित्त्वा पक्षौ च संजय ।
विसर्जयंति संहृष्टास्ताड्यमानाः कुमारकाः ॥ २९
तथाहमपि संप्राप्तो लूनपक्ष इव द्विजः ।
क्षीणः सर्वार्थहीनश्च निर्ज्ञातिर्बंधुवर्जितः ।
कां दिशं प्रतिपत्स्यामि दीनः शत्रुवशं गतः ॥ ३०

स० उ०—हते द्रोणे महेष्वासे तस्मिन्नहनि भारत ।
कृते च मोघसंकल्पे द्रोणपुत्रे महारथे ॥ ३१
आशा बलवती राजन् पुत्रस्य तव ह्यभवत् ।
हते भीष्मे च द्रोणे च कर्णो जेष्यति पांडवान् ॥ ३२
तामाशां हृदये कृत्वा कर्णमेवं तदाब्रवीत् ।
सूतपुत्र न ते पार्थः स्थित्वाग्रे न युयुत्सति ॥ ३३
क० उ०—उक्तमेतन्मया पूर्वं गांधारे तव सन्निधौ ।
जेष्यामि पांडवान् सर्वान् सपुत्रान् सजनार्दनान् ॥ ३४
सेनापतिर्भविष्यामि तवाहं नात्र संशयः ।
स्थिरो भव महाराज विजितान् विद्धि पांडवान् ॥ ३५
ततोऽभिषिषिचुः कर्णं विधिदृष्टेन कर्मणा ।
दुर्योधनमुखा राजन् राजानो विजयैषिणः ॥ ३६
शातकुंभमयैः कुंभैर्माहेयैश्चाभिमंत्रितैः ।
तोयपूर्णविषाणैश्च द्विपखड्गमहर्षभैः ॥ ३७
ततः श्वेतपताकेन बलाकावर्णवाजिना ।
हेमपृष्ठेन धनुषा नागकक्षेण केतुना ॥ ३८
तूणीरशतपूर्णेन सांगदेन वरूथिना ।
शतघ्नीकिंकिणीशक्तिशूलतोमरधारिणा ॥ ३९
कार्मुकैरुपपन्नेन विमलादित्यवर्चसा ।
रथेनाभिपताकेन सूतपुत्रोऽभ्यदृश्यत ॥ ४०
ध्मापयन् वारिजं राजन् हेमजालविभूषितम् ।
विधुन्वानो महच्चापं कार्तस्वरविभूषितम् ॥ ४१
ततस्तु त्वरयन् योधान् शंखशब्देन मारिष ।
कर्णो निष्कर्षयामास कौरवाणां महद्बलम् ॥ ४२
व्यूहं व्यूह्य महेष्वासो मकरं शत्रुतापनः ।
प्रत्युद्ययौ तथा कर्णः पांडवान् विजिगीषया ॥ ४३
युधि० उ०—पश्य पार्थ यथा सेना धार्तराष्ट्रीह संयुगे ।
कर्णेन विहिता वीर गुप्ता वीरैर्महारथैः ॥ ४४
तं हत्वाद्य महाबाहो विजयस्तव फाल्गुन ।
उद्धृतश्च भवेच्छल्यो मम द्वादशवार्षिकः ॥ ४५

भ्रातुरेतद्वचः श्रुत्वा पांडवः श्वेतवाहनः ।
अर्धचंद्रेण व्यूहेन प्रत्यव्यूहत तां चमूम् ॥ ४६
तत्र यत्तौ सुसंरब्धौ दृष्ट्वान्योन्यं व्यवस्थितौ ।
अनीकमध्ये राजेन्द्र चेरतुः कर्णपांडवौ ॥ ४७
ततः प्रववृते युद्धं नरवारणवाजिनाम् ।
रथानां च महाराज अन्योन्यमभिनिघ्नताम् ॥ ४८
ततो नररथाश्वेभाः पत्तयश्चोग्रविक्रमाः ।
संप्रहारान् भृशं चक्रुर्देहपाप्मासुनाशनान् ॥ ४९
पूर्णचंद्रार्कपद्मानां कांतिभिर्गंधतः समैः ।
उत्तमांगैर्नृसिंहानां नृसिंहास्तस्तरुर्महीम् ॥ ५०
द्विरदस्यंदनाश्वेभ्यः पेतुर्वीरा द्विषद्धताः ।
विमानेभ्यो यथा क्षीणे पुण्ये स्वर्गसदस्तथा ॥ ५१
रथिनः समहामात्रान् गजानश्वांश्च सादिनः ।
पत्तिव्रातांश्च संक्रुद्धो निघ्नन् कर्णो व्यदृश्यत ॥ ५२
तद्वध्यमानं पांडूनां बलं कर्णास्त्रतेजसा ।
विशस्त्रक्षतदेहं तु प्राय आसीत्पराङ्मुखम् ॥ ५३
अथ कर्णास्त्रमस्त्रेण प्रतिहत्यार्जुनः स्मयन् ।
दिशं खं चैव भूमिं च प्रावृणोच्छरवृष्टिभिः ॥ ५४
मुसलानीव संपेतुः परिघा इव चेषवः ।
शतघ्न्य इव चाप्यन्ये वज्राण्युग्राणि चापरे ॥ ५५
तैर्वध्यमानं तत्सैन्यं सपत्त्यश्वरथद्विपम् ।
निमीलिताक्षमत्यर्थं बभ्राम च ननाद च ॥ ५६
त्वदीयानां तदा युद्धे संसक्तानां जयैषिणाम् ।
गिरिमस्तं समासाद्य प्रत्यपद्यत भानुमान् ॥ ५७
ते त्रस्यंतो महेष्वासा रात्रियुद्धस्य भारत ।
अपयानं ततश्चक्रुः सहिताः सर्वयोधिभिः ॥ ५८
कौरवेष्वपयातेषु तदा राजन् दिनक्षये ।
जयं सुमनसः प्राप्य पार्थाः स्वशिबिरं ययुः ॥ ५९

---

## २

प्रभातायां रजन्यां तु कर्णो राजानमभ्ययात् ।
समेत्य च महाबाहुर्दुर्योधनमथाब्रवीत् ॥ ६०

अथ राजन्समेष्यामि पांडवेन यशस्विना ।
निहनिष्यामि तं वीरं स वा मां विहनिष्यति ॥ ६१
कार्यस्य महतो भेदे लाघवे दूरपातने ।
सौष्ठवे चास्त्रपाते च सव्यसाची न मत्समः ॥ ६२
प्राणे शौर्येऽथ विज्ञाने विक्रमे चापि भारत ।
निमित्तज्ञानयोगे च सव्यसाची न मत्समः ॥ ६३
सर्वायुधमहामात्रं विजयं नाम तद्धनुः ।
इंद्रार्थं प्रियकामेन निर्मितं विश्वकर्मणा ॥ ६४
तद्भार्गवाय प्रायच्छच्छक्रः परमसंमतम् ।
तद्दिव्यं भार्गवो मह्यमदद्द्धनुरुत्तमम् ॥ ६५
तेन योत्स्ये महाबाहुमर्जुनं जयतां वर ।
धनुर्घोरं रामदत्तं गांडीवात्तद्विशिष्यते ॥ ६६
अवश्यं तु मया वाच्यं येन हीनोऽस्मि फाल्गुनात् ।
ज्या तस्य धनुषो दिव्या तथाक्षय्ये महेषुधी ।
सारथिस्तस्य गोविंदो मम तादृङ् न विद्यते ॥ ६७
अयं तु सदृशः शौरेः शल्यः समितिशोभनः ।
सारथ्यं यदि मे कुर्याद्ध्रुवस्ते विजयो भवेत् ॥ ६८
तस्य मे सारथिः शल्यो भवत्वसुकरः परैः ।
नाराचान् गार्धपत्रांश्च शकटानि वहंतु मे ॥ ६९
यथाश्वहृदयं वेद दाशार्हः परवीरहा ।
तथा शल्यो विजानाति हयज्ञानं महारथः ॥ ७०
बाहुवीर्ये समो नास्ति मद्रराजस्य कश्चन ।
तथास्त्रैर्मत्समो नास्ति कश्चिदेव धनुर्धरः ॥ ७१
क्रियातामेष कामो मे मा वः कालोऽत्यगादयम् ।
ततो द्रक्ष्यसि संग्रामे यत्करिष्यामि भारत ॥ ७२

दु० उ०—एवमेतत्करिष्यामि यथा त्वं कर्ण मन्यसे ।
सोपासंगा रथाः साश्वा अनुयास्यंति संयुगे ॥ ७३
एवमुक्त्वा महाराज तव पुत्रः प्रतापवान् ।
अभिगम्याब्रवीद्राजा मद्रराजमिदं वचः ॥ ७४
सत्यव्रत महाभाग द्विषतां तापवर्धन ।
महेश्वर रणे शूर परसैन्यभयंकर ॥ ७५

श्रुतवानसि कर्णस्य ब्रुवतो वदतां वर ।
तस्मात्पार्थविनाशार्थं हितार्थं मम चैव हि ।
सारथ्यं रथिनां श्रेष्ठ प्रणयात्कर्तुमर्हसि ॥ ७६
अभीशूनां हि कर्णस्य ग्रहीतान्यो न विद्यते ।
ऋते हि त्वां महाभाग वासुदेवसमं युधि ॥ ७७
यथा च सर्वथापत्सु वार्ष्णेयः पाति पांडवम् ।
तथा मद्रेश्वराद्य त्वं राधेयं प्रतिपालय ॥ ७८
कर्णो ह्येको महाबाहुरस्मत्प्रियहिते रतः ।
भवांश्च पुरुषव्याघ्रः सर्वलोकमहारथः ॥ ७९
कृष्णेन सहितः पार्थो धार्तराष्ट्रीं महाचमूम् ।
अहन्यहनि मद्रेश द्रावयन् दृश्यते युधि ॥ ८०
अरुणेन यथा सार्धं तमः सूर्यो व्यपोहति ।
तथा कर्णेन सहितो जहि पार्थं महाहवे ॥ ८१
रथिनां प्रवरः कर्णो यंतॄणां प्रवरो भवान् ।
सयोगो युवयोर्लोके नाभून्न च भविष्यति ॥ ८२
दुर्योधनवचः श्रुत्वा शल्यः क्रोधसमन्वित ।
त्रिशिखां भ्रुकुटिं कृत्वा धुन्वन् हस्तौ पुन. पुनः ॥ ८३
क्रोधरक्ते महानेत्रे परिवृत्य महाभुजः ।
कुलैश्वर्यश्रुतबलैर्दृप्तः शल्योऽब्रवीदिदम् ॥ ८४
अवमन्यसि गांधारे ध्रुव च परिशंकसे ।
यन्मां ब्रवीषि विश्रब्ध सारथ्यं क्रियतामिति ॥ ८५
अस्मत्तोऽभ्यधिकं कर्ण मन्यमानः प्रशंससि ।
न चाहं युधि राधेयं गणये तुल्यमात्मनः ॥ ८६
आदिश्यतामभ्यधिको ममांशः पृथिवीपते ।
तमहं समरे जित्वा गमिष्यामि यथागतम् ॥ ८७
अथवाप्येक एवाहं योत्स्यामि कुरुनंदन ।
पश्य वीर्यं ममाद्य त्वं संग्रामे दहतो रिपून् ॥ ८८
पश्य पीनौ मम भुजौ वज्रसंहननोपमौ ।
गदां च पश्य गांधारे हेमपट्टविभूषिताम् ॥ ८९
दारयेयं महीं कृत्स्नां विकिरेयं च पर्वतान् ।
शोषयेयं समुद्रांश्च तेजसा स्वेन पार्थिव ॥ ९०

तं मामेवंविधं राजन् समर्थमरिनिग्रहे ।
कस्माद्युनंक्षि सारथ्ये नीचस्याधिरथे रणे ॥ ९१
न मामधुरि राजेन्द्र नियोक्तुं त्वमिहार्हसि ।
न हि पापीयसः श्रेयान् भूत्वा प्रेष्यत्वमुत्सहे ॥ ९२
अहं मूर्धाभिषिक्तो हि राजर्षिकुलजो नृप ।
महारथः समाख्यातः सेव्यः स्तुत्यश्च बंदिनाम् ॥ ९३
सोऽहमेतादृशो भूत्वा नेहारिबलसूदन ।
सूतपुत्रस्य संग्रामे सारथ्यं कर्तुमुत्सहे ॥ ९४
एवमुक्त्वा महाराज शल्यः समितिशोभनः ।
उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ॥ ९५
प्रणयाद्बहुमानाच्च तं निगृह्य सुतस्तव ।
अब्रवीन्मधुरं वाक्यं साम्ना सर्वार्थसाधकम् ॥ ९६
यथा शल्य विजानीषे एवमेतदसंशयम् ।
न कर्णोऽभ्यधिकस्त्वत्तो न शंके त्वां च पार्थिव ॥ ९७
न हि मद्रेश्वरो राजा कुर्याद्यदनृतं भवेत् ।
ऋतमेव हि पूर्वास्ते वदंति पुरुषोत्तमाः ॥ ९८
तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम ।
वृणेऽहं त्वां हयाग्र्याणां यंतारमिह संयुगे ॥ ९९
कर्णो ह्यभ्यधिकः पार्थादस्त्रैरेव नरर्षभ ।
भवानप्यधिकः कृष्णादश्वज्ञाने बले तथा ॥ १००
एवं स भगवान् देवः सर्वलोकपितामहः ।
सारथ्यमकरोत्तत्र ब्रह्मा रुद्रोऽभवद्रथी ॥ १०१
रथिनोऽभ्यधिको वीर कर्तव्यो रथसारथिः ।
तस्मात्त्वं पुरुषव्याघ्र नियच्छ तुरगान् युधि ॥ १०२
श० उ०—यन्मां ब्रवीषि गांधारे अग्रे सैन्यस्य मानद ।
विशिष्टं देवकीपुत्रात्प्रीतिमानस्म्यहं त्वयि ॥ १०३
एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः ।
युध्यतः पांडवाग्र्येण यथा त्वं वीर मन्यसे ॥ १०४
समयश्च हि मे वीरः कश्चिद्वैकर्तनं प्रति ।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ ॥ १०५

यत्तु कर्णमहं ब्रूयां हितकामः प्रियाप्रिये ।
मम तत्क्षमतां सर्वं भवान् कर्णश्च सर्वशः ॥ १०६
ततो जैत्रं रथवरं गन्धर्वनगरोपमम् ।
विधिवत्कल्पितं सूतो जयेत्युक्त्वा न्यवेदयत् ॥ १०७
तं रथं रथिनां श्रेष्ठः कर्णोऽभ्यर्च्य यथाविधि ।
संपादितं ब्रह्मविदा पूर्वमेव पुरोधसा ॥ १०८
कृत्वा प्रदक्षिणं यत्नादुपस्थाय च भास्करम् ।
समीपस्थं मद्रराजमारोह त्वमथाब्रवीत् ॥ १०९
ततः कर्णस्य दुर्धर्षं स्यंदनप्रवरं महत् ।
आरुरोह महातेजाः शल्यः सिंह इवाचलम् ॥ ११०
ततः शल्याश्रितं दृष्ट्वा कर्णः स्वं रथमुत्तमम् ।
अध्यतिष्ठद्यथांभोदं विद्युत्वंतं दिवाकरः ॥ १११
तं रथस्थं महाबाहुं युद्धायामिततेजसम् ।
दुर्योधनस्तु राधेयमिदं वचनमब्रवीत् ॥ ११२
अकृतं द्रोणभीष्माभ्यां दुष्करं कर्म संयुगे ।
कुरुष्वाधिरथे वीर मिषतां सर्वधन्विनाम् ॥ ११३
जयश्च तेऽस्तु भद्रं ते प्रयाहि पुरुषर्षभ ।
पांडुपुत्रस्य सैन्यानि कुरु सर्वाणि भस्मसात् ॥ ११४
ततस्तूर्यसहस्राणि भेरीणामयुतानि च ।
वाद्यमानान्यरोचंत मेघशब्दो यथा दिवि ॥ ११५
प्रतिगृह्य तु तद्वाक्यं रथस्थो रथसत्तमः ।
अभ्यभाषत राधेयः शल्यं युद्धविशारदम् ।
चोदयाश्वान् महाबाहो यावद्धन्मि धनंजयम् ॥ ११६
दृष्ट्वा कर्णं महेष्वासं युयुत्सुं समवस्थितम् ।
चुक्रुशुः कुरवः सर्वे हृष्टरूपाः समंततः ॥ ११७
उल्कापाताश्च संजग्मुर्दिशां दाहास्तथैव च ।
शुष्काशन्यश्च संपेतुर्ववुर्वाताश्च भैरवाः ॥ ११८

---

## ३

प्रयाणे च ततः कर्णो हर्षयन् वाहिनीं तव ।
एकैकं समरे दृष्ट्वा पांडवान् पर्यपृच्छत ॥ ११९

यो मामद्य महात्मानं दर्शयेच्छ्वेतवाहनम् ।
तस्मै दद्यामभिप्रेतं धनं यन्मनसेच्छति ॥ १२०
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं चास्मै पुनर्दद्यां सौवर्णं हस्तिषड्गवम् ॥ १२१
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यदस्मै वरं दद्यां कुञ्जराणां शतानि षट् ॥ १२२
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यदस्मै वरं दद्यां वैश्यग्रामांश्चतुर्दश ॥ १२३
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं तस्मै वरं दद्यां यमसौ कामयेत्स्वयम् ॥ १२४
हत्वा च सहितौ कृष्णौ तयोर्वित्तानि सर्वशः ।
तस्मै दद्यामहं यो मे प्रब्रूयात्केशवार्जुनौ ॥ १२५
एता वाचः सुबहुशः कर्ण उच्चारयन् युधि ॥ १२६
विकत्थमानं च तदा राधेयमरिकर्षणम् ।
मद्रराजः प्रहस्येदं वचनं प्रत्यभाषत ॥ १२७
मा सूतपुत्र दानेन सौवर्णं हस्तिषड्गवम् ।
प्रयच्छ पुरुषायाद्य द्रक्ष्यसि त्वं धनंजयम् ॥ १२८
बाल्यादिह त्वं त्यजसि वसु वैश्रवणो यथा ।
अयत्नेनैव राधेय द्रष्टास्यद्य धनंजयम् ॥ १२९
यत्त्वं प्रेरयसे वित्तं बहु तेन खलु त्वया ।
शक्यं बहुविधैर्यज्ञैर्यष्टुं सूत यजस्व तैः ॥ १३०
यच्च प्रार्थयसे हंतुं कृष्णौ मोहाद्वृथैव तत् ।
न हि शुश्रुम संमर्दे क्रोष्ट्रा सिंहौ निपातितौ ॥ १३१
अप्रार्थितं प्रार्थयसे सुहृदो न हि संति ते ।
ये त्वां निवारयंत्याशु प्रपतंतं हुताशने ॥ १३२
सहितः सर्वयोधैस्त्वं व्यूढानीकैः सुरक्षितः ।
धनंजयेन युध्यस्व श्रेयश्चेत्प्राप्तुमिच्छसि ॥ १३३
हितार्थं धार्तराष्ट्रस्य ब्रवीमि त्वां न हिंसया ॥ १३४
क० उ०—श्रद्धस्वैवं मया प्रोक्तं यदि तेऽस्ति जिजीविषा ।
स्वबाहुवीर्यमाश्रित्य प्रार्थयाम्यर्जुनं रणे ।
त्वं तु मित्रमुखः शत्रुर्मां भीषयितुमिच्छसि ॥ १३५

इति कर्णस्य वाक्यांते शल्यः प्राहोत्तरं वचः ।
विक्षोपरिषुरत्यर्थं कर्णं मद्रेश्वरः पुनः ॥ १३६

ईषादंतं महानागं प्रभिन्नकरटामुखम् ।
शशको ह्वयसे युद्धे कर्ण पार्थं धनंजयम् ॥ १३७

सिंहं केसरिणं क्रुद्धमतिक्रम्याभिनर्दसे ।
शृगाल इव मूढस्त्वं नृसिंहं कर्ण पांडवम् ॥ १३८

महामेघं महाघोरं दर्दुरः प्रतिनर्दति ।
कामतोयप्रदं लोके नरपर्जन्यमर्जुनम् ॥ १३९

यथा च स्वगृहस्थः श्वा व्याघ्रं वनगतं भषेत् ।
तथा त्वं भषसे कर्ण नरव्याघ्रं धनंजयम् ॥ १४०

क० उ०—गुणान् गुणवतां शल्य गुणवान् वेत्ति नागुणः ।
त्वं तु शल्य गुणैर्हीनः किं ज्ञास्यसि गुणागुणम् ॥ १४१

अर्जुनस्य महास्त्राणि क्रोधं वीर्यं धनुः शरान् ।
अहं शल्याभिजानामि विक्रमं च महात्मन. ॥ १४२

तथा कृष्णस्य माहात्म्यं ऋषभस्य महीक्षिताम् ।
यथाहं शल्य जानामि न त्वं जानासि तत्तथा ॥ १४३

एवमेवात्मनो वीर्यमहं वीर्यं च पांडवे ।
जानन्नेवाह्वये युद्धे शल्य गांडीवधारिणम् ॥ १४४

अस्ति वायमिषुः शल्य सुपुंखो रक्तभोजन ।
एकतूणीशयः पत्री सुधौतः समलंकृतः ॥ १४५

शेते चंदनचूर्णेषु पूजितो बहुलाः समा ।
आहेयो विषवानुग्रो नराश्वाद्विपसंघहा ॥ १४६

घोररूपो महारौद्रस्तनुत्रास्थिविदारण ॥ १४७

तेनाहमिषुणा शल्य वासुदेवधनंजयौ ।
योत्स्ये परमसंक्रुद्धस्तत्कर्म सदृशं मम ॥ १४८

सर्वेषां वृष्णिवीराणां कृष्णे लक्ष्मीः प्रतिष्ठिता ।
सर्वेषां पांडुपुत्राणां जय. पार्थे प्रतिष्ठितः ॥ १४९

तावेतौ पुरुषव्याघ्रौ समेतौ स्यंदने स्थितौ ।
मणी सूत्र इव प्रोतौ द्रष्टासि निहतौ मया ॥ १५०

त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः ।
भयावदीर्णः संत्रासादबद्धं बहु भाषसे ॥ १५१

संस्तौषि तौ तु केनापि हेतुना त्वं कुदेशज ।
तौ हत्वा समरे हंता त्वामद्य सहबांधवम् ॥ १५२
ममैष प्रथमः कल्पो निधने स्वर्गमिच्छतः ।
सोऽयं प्रियः सखा चास्मि धार्तराष्ट्रस्य धीमतः ।
तदर्थे हि मम प्राणा यच्च मे विद्यते वसु ॥ १५३
व्यक्तं त्वमप्युपहितः पांडवैः पापदेशज ।
यथा चामित्रवत्सर्वं त्वमस्मासु प्रवर्तसे ॥ १५४
न तद्भूतं प्रपश्यामि त्रिषु लोकेषु मद्रप ।
यो मामस्मादभिप्रायाद्वारयेदिति मे मतिः ॥ १५५
एवं विद्वञ्जोषमास्व त्रासात्किं बहु भाषसे ॥ १५६
श० उ०—जातोऽहं यज्वनां वंशे संग्रामेष्वनिवर्तिनाम् ।
राज्ञां मूर्धाभिषिक्तानां स्वयं धर्मपरायणः ॥ १५७
यथैव मत्तो मद्येन त्वं तथा लक्ष्यसे वृष ।
तथाद्य त्वां प्रमाद्यंतं चिकित्सेयं सुहृत्तया ॥ १५८
इमां काकोपमां कर्ण प्रोच्यमानां निबोध मे ।
श्रुत्वा यथेष्टं कुर्यास्त्वं निहीन कुलपांसन ॥ १५९
वैश्यः किल समुद्रांते प्रभूतधनधान्यवान् ।
यज्वा दानपतिः क्षांतः स्वकर्मस्थोऽभवच्छुचिः ॥ १६०
पुत्राणां तस्य बालानां कुमाराणां यशस्विनाम् ।
काको बहूनामभवदुच्छिष्टकृतभोजनः ॥ १६१
तस्मै सदा प्रयच्छंति वैश्यपुत्राः कुमारकाः ।
मासोदनं दधि क्षीरं पायसं मधुसर्पिषी ॥ १६२
स चोच्छिष्टभृतः काको वैश्यपुत्रैः कुमारकैः ।
सदृशान् पक्षिणो दृप्तः श्रेयसश्चाधिचिक्षिपे ॥ १६३
अथ हंसाः समुद्रांते कदाचिद्दूरपातिनः ।
गरुडस्य गतौ तुल्याश्चक्रांगा हृष्टचेतसः ॥ १६४
तान् सोऽभिपत्य जिज्ञासुः क एषां श्रेष्ठभागिति ।
तेषां यं प्रवरं मेने हंसानां दूरपातिनाम् ।
तमाह्वयत दुर्बुद्धिः पताव इति पक्षिणम् ॥ १६५
हं० उ०—कथं नु हंसं बलिनं चक्रांगं दूरपातिनम् ।
काको भूत्वा निपतने समाह्वयसि दुर्मते ॥ १६६

कथं त्वं पतिता काक सहास्माभिर्ब्रवीहि तत् ॥ १६७
अथ हंसवचो मूढः कुत्सयित्वा पुनः पुनः ।
प्रजगादोत्तरं काकः कत्थनो जातिलाघवात् ॥ १६८
शतमेकं च पातानां पतितास्मि न संशयः ।
शतयोजनमेकैकं विचित्रं विविधं तथा ॥ १६९
उड्डीनमवडीनं च प्रडीनं डीनमेव च ।
निडीनमथ संडीनं तिर्यग्डीनगतानि च ॥ १७०
गतागतं प्रतिगतं बह्वीश्च निकुलीनकाः ।
कर्तास्मि मिषता वोऽद्य ततो द्रक्ष्यथ मे बलम् ॥ १७१
एवमुक्ते तु काकेन प्रहस्यैको विहंगमः ।
उवाच काकं राधेयं वचनं तन्निबोध मे ॥ १७२
शतमेकं च पातानां त्वं काक पतिता ध्रुवम् ।
एकमेव तु यं पातं विदुः सर्वे विहंगमाः ।
तमहं पतिता काक नान्यं जानामि कंचन ॥ १७३
अथ काकाः प्रजहसुर्ये तत्रासन् समागताः ।
कथमेकेन पातेन हंसः पातशतं जयेत् ॥ १७४
प्रपेततुः स्पर्धया च ततस्तौ हंसवायसौ ।
एकपाती च चक्रांगः काकः पातशतेन च ॥ १७५
अथ काकस्य चित्राणि पतितानि मुहुर्मुहुः ।
दृष्ट्वा प्रमुदिताः काका विनेदुरधिकैः स्वरैः ॥ १७६
वृक्षाग्रेभ्यः स्थलेभ्यश्च निपतंत्युत्पतंति च ।
कुर्वाणा विविधान् रावानाशंसंतो जयं तथा ॥ १७७
अवमन्य च हंसांस्तानिदं वचनमब्रुवन् ।
योसावुत्पत्तितो हंसः सोऽसावेव प्रहीयते ॥ १७८
अथ हंसः स तच्छ्रुत्वा प्रापतत्पश्चिमां दिशम् ।
उपर्युपरि वेगेन सागरं मकरालयम् ॥ १७९
ततो भीः प्राविशत्काकं तदा तत्र विचेतसम् ।
द्वीपद्रुमानपश्यंतं निपातार्थे श्रमान्वितम् ॥ १८०
तं तथा हीयमानं तु हंसो दृष्ट्वाब्रवीदिदम् ।
उज्जिहीर्षुर्निमज्जंतं स्मरन् सत्पुरुषव्रतम् ॥ १८१

बहूनि पतितानि त्वमाचक्षाणो मुहुर्मुहुः ।
किं नाम पतितं काक यत्त्वं पतसि सांप्रतम् ॥ १८२
जलं स्पृशसि पक्षाभ्यां तुंडेन च पुनः पुनः ।
प्रब्रूहि कतमे तत्र पाते वर्तसि वायस ॥ १८३
अपश्यन्नंभसः पारं निपतश्च श्रमान्वितः ।
पातवेगप्रमथितो हंसं काकोऽब्रवीदिदम् ॥ १८४
वयं काकाः कुतो नाम चरामः काकवाशिकाः ।
हंस प्राणैः प्रपद्ये त्वामुदकांतं नयस्व माम् ॥ १८५
उच्छिष्टदर्पितो हंस मन्येऽत्मानं सुपर्णवत् ।
अवमन्य बहूंश्चाहं काकानन्यांश्च पक्षिणः ॥ १८६
यद्यहं स्वास्तिमान् हंस स्वदेशं प्राप्नुयां विभो ।
न कंचिदवमन्येऽहमापदो मां समुद्धर ॥ १८७
तमेववादिनं दीनं विलपंतमचेतनम् ।
कृपयादाय हंसस्तु जलक्लिन्नं सुदर्शनम् ॥ १८८
पद्भ्यामुत्क्षिप्य वेगेन पृष्ठमारोपयच्छनैः ॥ १८९
आरोप्य पृष्ठं हंसस्तं काकं तूर्णं विचेतनम् ।
आजगाम पुनर्द्वीपं स्पर्धया पेततुर्यतः ॥ १९०
संस्थाप्य त चापि पुनः समाश्वास्य च खेचरम् ।
गतो यथेप्सितं देशं हंसो मन इवाशुगः ॥ १९१
एवं त्वमुच्छिष्टभृतो धार्तराष्ट्रैर्न संशयः ।
सदृशाञ्छ्रेयसश्चापि सर्वान् कर्णावमन्यसे ॥ १९२
द्रोणद्रौणिकृपैर्गुप्तो भीष्मेणान्यैश्च कौरवैः ।
विराटनगरे पार्थमेकं किं नावधीस्तदा ॥ १९३
सततं च त्वमश्रौषीर्वचनं द्रोणभीष्मयोः ।
अवध्यौ वदतोः कृष्णौ सन्निधौ च महीक्षिताम् ॥ १९४
इदानीमेव द्रष्टासि प्रधाने स्यंदने स्थितौ ।
पुत्रं च वसुदेवस्य कुंतीपुत्रं च पांडवम् ॥ १९५
यदा शरशतैः पार्थो दर्पं तव वधिष्यति ।
तदा त्वमंतरं द्रष्टा आत्मनश्चार्जुनस्य च ॥ १९६
क० उ०—यत्त्वं निदर्शनार्थं मां शल्य जल्पितवानसि ।
नाहं शक्यस्त्वया वाचा बिभीषयितुमाहवे ॥ १९७

नीचस्य बलमेतावत्पारुष्यं यत्त्वमात्थ माम् ।
अशक्तो मद्गुणान् वक्तुं वल्गसे बहु दुर्मते ॥ १९८
सखिभावेन सौहार्दान्मित्रभावेन चैव हि ।
कारणैस्त्रिभिरेतैस्त्वं शल्य जीवसि सांप्रतम् ॥ १९९
कृतश्च समयः पूर्वं क्षंतव्य विप्रियं तव ।
ऋते शल्यसहस्रेण विजयेयमहं परान् ॥ २००
ततो दुर्योधनो राजा कर्णशल्याववारयत् ।
सखिभावेन राधेयं शल्यं स्वांजलयकेन च ॥ २०१

---

## ४

तत परानीकसहं व्यूहमप्रतिम कृतम् ।
समीक्ष्य कर्णः पार्थानां धृष्टद्युम्नाभिरक्षितम् ॥ २०२
प्रययौ रथघोषेण सिंहनादरवेण च ।
वादित्राणां च निनदैः कंपयन्निव मेदिनीम् ॥ २०३
प्रतिव्यूह्य महातेजा यथावद्भरतर्षभ ।
व्यधमत्पांडवीं सेनामासुरीं मघवानिव ॥ २०४
अथ संसप्तकाः पार्थमभ्यधावन् वधैषिण ।
विजये धृतसंकल्पा मृत्युं कृत्वा निवर्तनम् ॥ २०५
स संप्रहारस्तुमुलस्तेषामासीत्किरीटिना ॥ २०६
अथ पंचालचेदीनां सृंजयानां च मारिष ।
त्वदीयैः सह संग्राम आसीत्परमदारुणः ॥ २०७
विदार्य कर्णस्तां सेनां युधिष्ठिरमथाद्रवत् ।
रथहस्त्यश्वपत्तीनां सहस्रैः परिवारितः ॥ २०८
ततो बाह्वोर्ललाटे च हृदि चैव युधिष्ठिरः ।
चतुर्भिस्तोमरैः कर्ण ताडयित्वानदन् मुदा ॥ २०९
उद्भिन्नरुधिरः कर्णः क्रुद्धः सर्प इव श्वसन् ।
ध्वजं चिच्छेद भल्लेन त्रिभिर्विव्याध पांडवम् ।
इषुधी चास्य चिच्छेद रथं च तिलशोऽच्छिनत् ॥ २१०
कालबालास्तु ये पार्थं दंतवर्णा वहन् हयाः ।
तैर्युक्तं रथमास्थाय प्रायाद्राजा पराङ्मुखः ॥ २११

अभिद्रुत्य तु राधेयः पांडुपुत्रं युधिष्ठिरम् ।
ग्रहीतुमिच्छन् स बलात्कुंतीवाक्यं च सोऽस्मरत् ॥ २१२
अब्रवीत्प्रहसन् राजन् कुत्सयन्निव पांडवम् ॥ २१३
कथं नाम कुले जातः क्षत्रधर्मे व्यवस्थितः ।
प्रजह्यात्समरं भीतः प्राणान् रक्षन् महाहवे ॥ २१४
न भवान् क्षत्रधर्मेषु कुशलो हीति मे मतिः ।
ब्राह्मे बले भवान्युक्तः स्वाध्याये यज्ञकर्मणि ॥ २१५
मा स्म युध्यस्व कौंतेय मा स्म वीरान् समासदः ॥ २१६
एवमुक्त्वा ततः पार्थं विसृज्य च महाबलः ।
न्यहनत्पांडवीं सेनां वज्रहस्त इवासुरीम् ॥ २१७
गते कर्णे तु कौंतेयः पांडुपुत्रो युधिष्ठिरः ।
अपायाज्जवनैरश्वैः सहदेवश्च मारिष ॥ २१८
ताभ्यां स सहितस्तूर्णं व्रीडन्निव जनेश्वरः ।
प्राप्य सेनानिवेशं च मार्गणैः क्षतविक्षतः ॥ २१९
अवतीर्णो रथात्तूर्णमाविशच्छयनं शुभम् ।
अपनीतशल्यः सुभृशं हृच्छल्याभिनिपीडितः ॥ २२०
सोऽब्रवीद्भ्रातरौ राजा माद्रीपुत्रौ महारथौ ।
अनीकं भीमसेनस्य पांडवावाशु गच्छताम् ॥ २२१
द्रौणिं पराजित्य ततोऽग्रधन्वा कृत्वा महद्दुष्करं शूरकर्म ।
आलोकयामास ततः स्वसैन्यं धनंजयः शत्रुभिरप्रधृष्यः ॥ २२२
अपश्यमानस्तु किरीटमाली युधिष्ठिरं भ्रातरमाजमीढम् ।
उवाच भीमं तरसाभ्युपेत्य राज्ञः प्रवृत्तिं वद कुत्र राजा ॥ २२३
भी० उ०—त्वमेव जानीहि महानुभाव राज्ञः प्रवृत्तिं भरतर्षभस्य ।
अयं हि यद्यर्जुन याम्यमित्रा वदंति मां भीत इति प्रवीराः ॥ २२४
तस्माद्भवान् शीघ्रमितः प्रयातु राज्ञः प्रवृत्त्यै कुरुसत्तमस्य ।
नूनं स विद्धोऽतिभृशं पृषत्कैः कर्णेन राजा शिबिरं गतोऽसौ ॥ २२५
सं० उ०—ततो हयान् सर्वदशार्हमुख्यः प्रचोदयन् भीममुवाच चेदम् ।
नैतच्चित्रं तव कर्माद्य भीम यास्याम्यहं जहि पार्थारिसंघान् ॥ २२६
ततो ययौ हृषीकेशो यत्र राजा युधिष्ठिरः ।
शीघ्राच्छीघ्रतरं राजन् वाजिभिर्गरुडोपमैः ॥ २२७

ततस्तु गत्वा पुरुषप्रवीरौ राजानमासाद्य शयानमेकम् ।
रथादुभौ प्रत्यवरुह्य तस्माद्ववंदतुर्धर्मराजस्य पादौ ॥ २२८
मन्यमानो हतं कर्णं धर्मराजो युधिष्ठिरः ।
हर्षगद्गदया वाचा प्रीतः प्राह परंतपः ॥ २२९
स्वागतं देवकीमातः स्वागतं ते धनंजय ।
प्रियं मे दर्शनं गाढं युवयोरच्युतार्जुनौ ॥ २३०
अक्षताभ्यामरिष्टाभ्यां हतः कर्णो महारथः ॥ २३१
आशीविषसमं युद्धे सर्वशस्त्रविशारदम् ।
अग्रगं धार्तराष्ट्राणां सर्वेषां शर्म वर्म च ॥ २३२
अंतकं मम मित्राणां हत्वा कर्णं महामृधे ।
दिष्ट्या युवामनुप्राप्तौ जित्वासुरमिवामरौ ॥ २३३
सं० उ०—तद्धर्मशीलस्य वचो निशम्य राज्ञः क्रुद्धस्यातिरथो महात्मा ।
उवाच दुर्धर्षमदीनसत्वं युधिष्ठिरं जिष्णुरनंतवीर्यः ॥ २३४
संसप्तकैर्युध्यमानस्य मेऽद्य सेनाग्रयायी कुरुसैन्येषु राजन् ।
आशीविषाभान् खगमान् प्रमुंचन् द्रौणिः पुरस्तात्सहसाभ्यातिष्ठत् ॥ २३५
समेत्याहं सूतपुत्रेण संख्ये वृत्रेण वज्रीव नरेन्द्रमुख्यः ।
योत्स्याम्यहं भारत सूतपुत्रमस्मिन् संग्रामे यदि वै दृश्यतेऽद्य ॥ २३६
आमंत्रये त्वां ब्रूहि जय रणे मे पुरा भीमं धार्तराष्ट्रा ग्रसंते ।
सौतिं हनिष्यामि नरेन्द्रसिंह सैन्यं तथा शत्रुगणांश्च सर्वान् ॥ २३७
यु० उ०—विप्रद्रुता तात चमूस्त्वदीया तिरस्कृता चाद्य यथा न साधु ।
भीतो भीमं त्यज्य चायास्तथा त्वं यन्नाशकः कर्णमथो निहन्तुम् ॥ २३८
स्नेहस्त्वया पार्थ कृतः पृथाया गर्भं समाविश्य यथा न साधु ।
त्यक्त्वा रणे यदपायाः स भीमं यन्नाशकः सूतपुत्रं निहन्तुम् ॥ २३९
यत्तद्वाक्यं द्वैतवने त्वयोक्तं कर्णं हतास्म्येकरथेन सत्यम् ।
तं त्यक्त्वा त्वं कथमद्यापयातः कर्णाद्भीतो भीमसेनं विहाय ॥ २४०
इदं यदि द्वैतवनेऽप्यचक्षः कर्णं योद्धुं न प्रशक्ष्ये नृपेति ।
वयं ततः प्राप्तकालं च सर्वे कृत्यान्युपैष्याम तथैव पार्थ ॥ २४१
अन्वाशिष्म वयमर्जुन त्वयि यियासवो बहुकल्याणमिष्टम् ।
तन्नः सर्वं विफलं राजपुत्र फलार्थिनां विदुल इवातिपुष्पः ॥ २४२
प्रयच्छान्यस्मै गांडीवमेतदद्य त्वत्तो योऽस्त्रैरभ्यधिको वा नरेन्द्रः ।
धिग्गांडीवं धिक्च ते बाहुवीर्यमसंख्येयान् बाणगणांश्च धिक्ते ॥ २४३

५

युधिष्ठिरेणैवमुक्तः कौंतेयः श्वेतवाहनः ।
असिं जग्राह संक्रुद्धो जिघांसुर्भरतर्षभ ॥ २४४
तस्य कोपं समुद्वीक्ष्य चित्तज्ञः केशवस्तदा ।
उवाच किमिदं पार्थ गृहीतः खड्ग इत्युत ॥ २४५
अपयातोऽसि कौंतेय राजा द्रष्टव्य इत्यपि ।
स राजा भवता दृष्टः कुशली च युधिष्ठिरः ॥ २४६
स दृष्ट्वा नृपशार्दूलं शार्दूलसमविक्रम ।
हर्षकाले च संप्राप्ते किमिदं मोहकारितम् ॥ २४७
न तं पश्यामि कौतेय यस्ते वध्यो भविष्यति ।
प्रहर्तुमिच्छसे कस्मात्किं वा ते चित्तविभ्रमः ॥ २४८
अर्जुनः प्राह गोविंदं क्रुद्धः सर्प इव श्वसन् ॥ २४९
अन्यस्मै देहि गांडीवमिति मां योऽभिचोदयेत् ।
भिंद्यामहं तस्य शिर इत्युपांशुव्रतं मम ॥ २५०
तदुक्तं मम चानेन राज्ञामितपराक्रम ।
समक्षं तव गोविंद न तत्क्षंतुमिहोत्सहे ॥ २५१
तस्मादेनं वधिष्यामि राजानं धर्मभीरुकम् ।
किं वा त्वं मन्यसे प्राप्तमस्मिन् काल उपस्थिते ॥ २५२
धिग्धिगित्येव गोविंदः पार्थमुक्त्वाब्रवीत्पुनः ।
इदानीं पार्थ जानामि न वृद्धाः सेवितास्त्वया ।
कालेन पुरुषव्याघ्र संरंभं यद्भवानगात् ॥ २५३
अनुसृत्य तु यं धर्मं कवयः समुपस्थिताः ।
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ॥ २५४
प्राणिनामवधस्तात सर्वज्यायान् मतो मम ।
अनृतां वा वदेद्वाचं न तु हिंस्यात्कथंचन ॥ २५५
स कथं भ्रातरं ज्येष्ठं राजानं धर्मकोविदम् ।
हन्याद्भवान्नरश्रेष्ठ प्राकृतोऽन्यः पुमानिव ॥ २५६
अयुध्यमानस्य वधस्तथा शत्रोश्च मानद ।
पराङ्मुखस्य द्रवतः शरणं चापि गच्छतः ॥ २५७
कृतांजलेः प्रपन्नस्य प्रमत्तस्य तथैव च ।
न वधः पूज्यते सद्भिस्तच्च सर्वं गुरौ तव ॥ २५८

इदं धर्मरहस्यं च तव वक्ष्यामि पांडव ।
यद्ब्रूयात्तव भीष्मो हि पांडवो वा युधिष्ठिरः ॥ २५९
भवेत्सत्यमवक्तव्यं वक्तव्यमनृतं भवेत् ।
यत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत् ॥ २६०
विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे ।
विप्रस्य चार्थे ह्यनृतं वदेत पचानृतान्याहुरपातकानि ॥ २६१
यत्स्यादहिंसासंयुक्तं स धर्म इति निश्चयः ।
अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम् ॥ २६२
धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः ।
यस्माद्धारणसंयुक्तः स धर्म इति निश्चयः ॥ २६३
ये न्यायेन जिहीर्षंतो धर्ममिच्छंति कर्हिचित् ।
अकूजनेन मोक्षो वा नानुकूजेत्कथंचन ॥ २६४
अवश्यं कूजितव्ये वा शंकेरन्नप्यकूजित ।
श्रेयस्तत्रानृतं वक्तुं तत्सत्यमविचारितम् ॥ २६५
यस्तेनैः सह संबंधान्मुच्यते शपथैरपि ।
श्रेयस्तत्रानृतं वक्तु तत्सत्यमविचारितम् ॥ २६६
न च तेभ्यो धनं देयं शक्ये सति कथंचन ।
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् ॥ २६७
एष ते लक्षणोद्देशो मयोद्दिष्टो यथाविधि ।
एतच्छ्रुत्वा ब्रूहि पार्थ यदि वध्यो युधिष्ठिरः ॥ २६८
अ० उ०—यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महामतिः ।
हितं चैव यथास्माकं तथैतद्वचनं तव ॥ २६९
अवध्यं पांडवं मन्ये धर्मराजं युधिष्ठिरम् ।
अस्मिंस्तु मम संकल्पे ब्रूहि किंचिदनुग्रहम् ॥ २७०
कृ० उ०—यदा मानं लभते माननार्हस्तदा स वै जीवति जीवलोके ।
यदावमानं लभते महांतं तदा जीवन् मृत इत्युच्यते सः ॥ २७१
संमानितः पार्थिवोऽयं सदैव त्वया च भीमेन तथा यमाभ्याम् ।
वृद्धैश्च लोके पुरुषैश्च शूरैस्तथापमानं कलया प्रयुंक्ष्व ॥ २७२
त्वमित्यत्रभवंत हि ब्रूहि पार्थ युधिष्ठिरम् ।
त्वामित्युक्तो हि निहतो गुरुर्भवति भारत ॥ २७३

इत्येव मुक्तस्तु जनार्दनेन पार्थः प्रपशस्याथ सुहृद्वचस्तत् ।
ततोऽब्रवीदर्जुनो धर्मराजमनुक्तपूर्वं परुषं प्रसह्य ॥ २७४
मा त्वं राजन् व्याहार व्याहरस्व यस्तिष्ठसे क्रोशमात्रे रणाद्र ।
भीमस्तु मामर्हति गर्हणाय यो युध्यते सर्वलोकप्रवीरैः ॥ २७५
सुदुष्करं कर्म करोति वीरः कर्तुं यथा नार्हसि त्वं कदाचित् ।
रथादवप्लुत्य गदां परामृशंस्तया निहत्याश्वरथद्विपान् रणे ॥ २७६
यते हि नित्य तव कर्तुमिष्टं दारैः सुतैर्जीवितेनात्मना च ।
एवं यन्मा वाग्विशिखेन हंसि त्वत्तः सुखं न वय विद्म किंचित् ॥ २७७
मां मावमंस्था द्रौपदीतल्पसंस्थो महारथान् प्रतिहन्मि त्वदर्थे ।
तेनाभिशंकी भारत निष्ठुरोऽसि त्वत्तः सुखं नाभिजानामि किंचित॥ २७८
न चाभिनंदामि तवाधिराज्यं यतस्त्वमक्षेष्वाहिताय सक्तः ॥
स्वयं कृत्वा पापमनार्यजुष्टमस्माभिर्वा तर्तुमिच्छस्यरींस्त्वम् ॥ २७९
अक्षेषु दोषा बहवो विधर्माः श्रुतास्त्वया सहदेवोऽब्रवीद्यान् ।
तान्नैषि त्व त्यक्तुमसाधुजुष्टांस्तेन स्म सर्वे निरयं प्रपन्ना. ॥ २८०
शेतेऽस्माभिर्निहता शत्रुसेना छिन्नैर्गात्रैर्भूमितले नदंती ।
त्वया हि तत्कर्म कृतं नृशंसं यस्माद्दोषः कौरवाणां वधश्च ॥ २८१
त्वं देविता त्वत्कृते राज्यनाशस्त्वत्संभवं नो व्यसनं नरेन्द्र ।
मास्मान् क्रूरैर्वाक्प्रतोदैस्तुदंस्त्वं भूयो राजन् कोपयेस्त्वल्पभाग्य ॥ २८२
एता वाचः परुषाः सव्यसाची स्थिरप्रज्ञः श्रावयित्वानुरूक्षाः ।
बभूवासौ विमना धर्मभीरुः कृत्वा प्राज्ञः पातकं किंचिदेवम् ॥ २८३
तदानुतेपे सुरराजपुत्रो विनिश्वसश्चासिमथोद्बबर्ह ।
तमाह कृष्णः किमिदं पुनर्भवान् विकोशमाकाशनिभं करोत्यसिम्॥ २८४
ब्रवीहि मां त्वं पुनरुत्तरं वचस्तथा प्रवक्ष्याम्यहमर्थसिद्धये ।
इत्येवमुक्तः पुरुषोत्तमेन सुदुःखितः केशवमर्जुनोऽब्रवीत् ॥ २८५
अहं हनिष्ये स्वशरीरमेव प्रसह्य येनाहितमाचरं वै ।
निशम्य तत्पार्थवचोऽब्रवीदिदं धनंजयं धर्मभृतां वरिष्ठः ॥ २८६
राजानमेनं त्वमितीदमुक्त्वा किं कश्मलं प्राविशः पार्थ घोरम् ।
त्वं चात्मानं हंतुमिच्छस्यरिघ्न नेदं सद्भिः सेवितं वै किरीटिन् ॥ २८७
सूक्ष्मो धर्मो दुर्विदश्चापि पार्थ विशेषतोऽज्ञैः प्रोच्यमानं निबोध ।
हत्वात्मानमात्मना प्राप्नुयास्त्वं वधाद्भ्रातुर्नरकं चातिघोरम् ॥ २८८

ब्रवीहि वाचाद्य गुणानिहात्मनस्तथा हतात्मा भवितासि पार्थ ।
तथास्तु कृष्णेत्यभिनंद्य तद्वचो धनंजयः प्राह धनुर्विनाम्य ॥ २८९
न मादृशोऽन्यो नरदेव विद्यते धनुर्धरो देवमृते पिनाकिनम् ।
अहं हि तेनानुमतो महात्मा क्षणेन हन्यां सचराचरं जगत् ॥ २९०
मया हि राजन् सदिगीश्वरा दिशो विजित्य सर्वा भवतः कृता वशे ।
स राजसूयश्च समाप्तदक्षिणः सभा च दिव्या भवतो ममौजसा ॥ २९१
पाणौ पृषत्का निशिता ममैव धनुश्च सज्जं विततं सबाणम् ।
इत्येवमुक्त्वा पुनरेव पार्थो युधिष्ठिरं धर्मभृतां वरिष्ठम् ॥ २९२
सव्रीडया नम्रशिराः किरीटी युधिष्ठिरं प्रांजलिरभ्युवाच ।
प्रसीद राजन् क्षम यन्मयोक्तं काले भवान् वेत्स्यति तन्नमस्ते ॥ २९३
याम्येष भीमं समरात्प्रमोक्तुं सर्वात्मना सूतपुत्रं च हन्तुम् ।
इति प्रयास्यन्नुपगृह्य पादौ समुत्थितो दीप्ततेजाः किरीटी ॥ २९४
एतच्छ्रुत्वा पांडवो धर्मराजो भ्रातुर्वाक्यं परुषं फाल्गुनस्य ।
उत्थाय तस्माच्छयनादुवाच पार्थं ततो दुःखपरीतचेताः ॥ २९५
कृतं मया पार्थ यथा न साधु येन प्राप्तं व्यसनं वः सुघोरम् ।
तस्माच्छिरश्छिंधि ममेदमद्य कुलांतकस्याधमपूरुषस्य ॥ २९६
पापस्य पापव्यसनान्वितस्य विमूढबुद्धेरलसस्य भीरोः । २९७
योग्यो राजा भीमसेनो महात्मा क्लीबस्य वा मम किं राज्यकृत्यम् ।
न चापि शक्तः परुषाणि सोढुं पुनस्तवेमानि रुषान्वितस्य ॥ २९८
इत्येवमुक्त्वा सहसोत्पपात राजा ततस्तच्छयनं विहाय ।
इयेष निर्गन्तुमथो वनाय तं वासुदेवः प्रणतोऽभ्युवाच ॥ २९९

राजन् विदितमेतद्वै यथा गांडीवधन्विनः ।
प्रतिज्ञा सत्यसंधस्य गांडीवं प्रति विश्रुता ॥ ३००
ब्रूयाद्य एवं गांडीवमन्यस्मै देयमित्युत ।
वध्योऽस्य स पुमांल्लोके त्वया चोक्तोऽयमीदृशम् ॥ ३०१
ततः सत्यां प्रतिज्ञां तां पार्थेन प्रतिरक्षता ।
मच्छंदादवमानोऽयं कृतस्तव महीपते ॥ ३०२
गुरूणामवमानो हि वध इत्यभिधीयते ।
तस्मात्त्वं वै महाबाहो मम पार्थस्य चोभयोः ।
व्यतिक्रममिमं राजन् सत्यसंरक्षणं प्रति ॥ ३०३

शरणं त्वां महाराज प्रपन्नौ स्व उभावपि ।
क्षंतुमर्हसि मे राजन् प्रणतस्याभियाचतः ॥ ३०४
राधेयस्याद्य पापस्य भूमिः पास्यति शोणितम् ।
सत्यं ते प्रतिजानामि हतं विद्ध्यद्य सूतजम् ॥ ३०५
इति कृष्णवचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
ससंभ्रम हृषीकेशमुत्थाप्य प्रणतं तदा ॥ ३०६
कृतांजलिस्ततो वाक्यमुवाचानंतरं वचः ।
एवमेव यथात्थ त्वमस्त्वेषोऽतिक्रमो मम ॥ ३०७
अनुनीतोऽस्मि गोविंद तारितश्चास्मि माधव ।
मोचिता व्यसनाद्घोराद्वयमद्य त्वयाच्युत ॥ ३०८
त्वद्बुद्धिप्लवमासाद्य दुःखशोकार्णवाद्वयम् ।
समुत्तीर्णाः सहामात्याः सनाथाः स्म त्वयाच्युत ॥ ३०९
ततोऽर्जुनो महाराज लज्जया वै समन्वितः ।
धर्मराजस्य चरणौ प्रपद्य शिरसा नतः ।
उवाच भरतश्रेष्ठं प्रसीदेति पुनः पुनः ॥ ३१०
यु० उ०—एह्येहि पार्थ बीभत्सो मां परिष्वज पांडव ।
वक्तव्यमुक्तोऽस्मि हितं त्वया क्षांत च तन्मया ॥ ३११
तस्य राजा महाप्राज्ञो धर्मराजो युधिष्ठिरः ।
आशिषोऽयुंक्त स ततः प्रायात्कर्णरथं प्रति ॥ ३१२
तमायांतं महेष्वासं दृष्ट्वा भूतानि भारत ।
निहतं मेनिरे कर्ण पांडवेन महात्मना ॥ ३१३
बभूवुर्विमलाः सर्वा दिशो राजन् समंततः ।
निमित्तानि च धन्यानि पार्थिवस्य शशंसिरे ॥ ३१४

---

६

प्रयातस्याथ पार्थस्य महान् स्वेदो व्यजायत ।
चिंता च विपुला जज्ञे कथं चेदं भविष्यति ॥ ३१५
ततो गांडीवधन्वानमब्रवीन्मधुसूदन ।
दृष्ट्वा पार्थं तथा यांतं चिंतापरिगतं तदा ॥ ३१६
गांडीवधन्वन् संग्रामे ये त्वया धनुषा जिताः ।
न तेषां मानुषो जेता त्वदन्य इह विद्यते ॥ ३१७

को हि द्रोणं च भीष्मं च भगदत्तं च मारिष ।
विंदानुविंदावावंत्यौ कांबोजं च सुदक्षिणम् ।
प्रत्युद्गम्य भवेत्क्षेमी यो न स्यात्त्वामिव प्रभो ॥ ३१८
अवश्यं तु मया वाच्यं यत्पथ्यं तव पांडव ।
मावमंस्था महाबाहो कर्णमाहवशोभिनम् ॥ ३१९
कर्णो हि बलवान् दृढः कृतास्त्रश्च महारथः ।
कृती च चित्रयोधी च देशकालस्य कोविदः ॥ ३२०
बहुनात्र किमुक्तेन संक्षेपाच्छृणु पांडव ।
त्वत्समं त्वद्विशिष्टं वा कर्णं मन्ये महारथम् ॥ ३२१
अष्टरत्निर्महाबाहुर्व्यूढोरस्कः सुदुर्जयः ।
अभिमानी च शूरश्च प्रवीरः प्रियदर्शनः ॥ ३२२
त्वां तु प्राप्य रणे क्षत्रमेकाहादिति भारत ।
नश्यमनमहं युक्तं मन्येयमिति मे मतिः ॥ ३२३
इमं पापमतिं क्षुद्रमत्यंतं पांडवान् प्रति ।
कर्णमद्य नरश्रेष्ठ जह्याः सुनिशितैः शरैः ३२४
एतत्ते सुकृतं कर्म नात्र किंचन युज्यते ।
वयमप्यनुजानीमो नात्र दोषोऽस्ति कश्चन ॥ ३२५
दहने यत्सपुत्राया निशि मातुस्तवानघ ।
द्यूतार्थे यच्च युष्मासु प्रावर्तत सुयोधनः ॥ ३२६
तस्य सर्वस्य दुष्टात्मा कर्णो वै मूल इत्युत ।
कर्णाद्धि मन्यते त्राणं नित्यमेव सुयोधनः ॥ ३२७
ततो मामपि संरब्धो निगृहीतुं प्रचक्रमे ॥ ३२८
स्थिरा बुद्धिर्नरेन्द्रस्य धार्तराष्ट्रस्य मानद ।
कर्णः पार्थान् रणे सर्वान् विजेष्यति न संशयः ॥ ३२९
कर्णो हि भाषते नित्यमहं पार्थान् समागतान् ।
वासुदेवं च दाशार्हं विजेष्यामि महारथम् ॥ ३३०
प्रोत्साहयन् दुरात्मानं धार्तराष्ट्रं सुदुर्मतिम् ।
समितौ गर्जते कर्णस्तमद्य जहि भारत ॥ ३३१
यच्च तद्धार्तराष्ट्रस्य क्रूरैः षड्भिर्महारथैः ।
अपश्यन्निहतं वीरं सौभद्रमृषभेक्षणम् ॥
तन्मे दहति गात्राणि सखे सत्येन ते शपे ॥ ३३२

यच्च कर्णोऽब्रवीत्कृष्णां सभायां परुषं वचः ।
प्रमुखे पांडवेयानां कुरूणां च नृशंसवत् ॥ ३३३
विनष्टाः पांडवाः कृष्णे शाश्वतं नरकं गता ।
पतिमन्यं पृथुश्रोणि वृणीष्व मृदुभाषिणि ॥ ३३४
अद्य पापस्य तद्वाक्यं सुवर्णविकृताः शराः ।
शमयंतु शिलाधौतास्त्वयास्ता जीवितच्छिदः ॥ ३३५
अद्य हाहाकृता दीना विषण्णास्त्वच्छरार्दिताः ।
प्रपतंतं रथात्कर्णं पश्यंतु वसुधाधिपाः ॥ ३३६
ततः सुयोधनो दृष्ट्वा हतमाधिरथिं त्वया ।
निराशो जीविते त्वद्य राज्ये चैव भवत्वरि. ॥ ३३७
एते द्रवंति पांचाला वध्यमानाः शितैः शरैः ।
कर्णेन भरतश्रेष्ठ पांडवानुज्जिहीर्षवः ॥ ३३८
स केशवस्य बीभत्सुः श्रुत्वा भारत भाषितम् ।
विशोकः संप्रहृष्टश्च क्षणेन समपद्यत ॥ ३३९
ततो ज्यामभिमृज्याशु व्याक्षिपद्गांडिवं धनुः ।
दध्रे कर्णविनाशाय केशवं चाभ्यभाषत ॥ ३४०
त्वया नाथेन गोविंद ध्रुव एव जयो मम ।
प्रसन्नो यस्य मेऽद्य त्वं लोके भूतभविष्यकृत् ॥ ३४१
त्वत्सहायो ह्यहं कृष्ण त्रीँल्लोकान् वै समागतान् ।
प्रापयेयं परं लोकं किमु कर्णं महाहवे ॥ ३४२
इत्येवमुक्त्वार्जुन एकवीरः क्षिप्रं रिपुघ्नः क्षतजोपमाक्षः ।
भीमं मुमुक्षुः समरे प्रयातः कर्णस्य कायाच्च शिरो जिहीर्षुः ॥ ३४३
ततः प्रहस्याशु नरप्रवीरो रथं रथेनाधिरथेर्जगाम ।
विस्फार्य गाण्डीवमथोग्रघोषं ज्यया समाहत्य तले भृशं च ॥ ३४४

---

## ७

तत्रांतरे सुमहान् सूतपुत्रश्चक्रे युद्धं सोमकान् संप्रगृह्य ।
रथाश्वमातंगगणान् जघान प्रच्छादयामास शरैर्दिशश्च ॥ ३४५
तमुत्तमौजा जनमेजयश्च क्रुद्धौ युधामन्युशिखंडिनौ च ।
कर्णं बिभेदुः सहिताः पृषत्कैः संमर्दमानाः सह पार्षतेन ॥ ३४६

स शक्रचापप्रतिमेन धन्वना भृशायतेनाधिरथिः शरान् सृजन् ।
बभौ रणे दीप्तमरीचिमंडलो यथांशुमाली परिवेषवांस्तथा ॥ ३४७
ततोऽभवद्युद्धमतीव दारुणं तवाहितानां तव सैनिकैः सह ।
रथाश्वमातंगविनाशनं तथा यथा सुराणामसुरैः पुराभवत् । ३४८
तथागते भीममभीस्तवात्मजः ससार राजावरजः किरञ्छरैः ।
तमभ्यधावत्त्वरितो वृकोदरो महारुरुं सिंह इवाभिपेदिवान् ॥ ३४९
ततस्तयोर्युद्धमतीव दारुणं प्रदीव्यतोः प्राणदुरोदरं द्वयोः ।
परस्परेणाभिनिविष्टरोषयोरुदग्रयोः शंबरशक्रयोर्यथा ॥ ३५०
ततः शरं सूर्यमरीचिसप्रभं सुवर्णवज्रोत्तमरत्नभूषितम् ।
महेन्द्रवज्राशनिपातदुःसहं मुमोच भीमांगविदारणक्षमम् ॥ ३५१
स तेन निर्विद्धतनुर्वृकोदरो निपातितस्त्रस्ततनुर्गतासुवत् ।
प्रसार्य बाहू रथवर्यमाश्रित· पुनः स संज्ञामुपलभ्य चानदत् ॥ ३५२
चुक्रोध भीमः पुनराशु तस्मै भृशं प्रजज्वाल रुषाभिवीक्ष्य ।
स विक्षरन्नाग इव प्रभिन्नो गदामस्मै तुमुले प्राहिणोद्वै ॥ ३५३
तया हतः पतितो वेपमानो दुःशासनो गदया वेगवत्या ।
विध्वस्तवर्माभरणाबरस्रग् विचेष्टमानो भृशवेदनातुरः ॥ ३५४
दुःशासनं पाडवाः प्रेक्ष्य सर्वे हृष्टाः पांचालाः सिंहनादानमुंचन् ।
भीमोऽपि वेगादवतीर्य यानाद्दुःशासनं वेगवानभ्यधावत् ॥ ३५५
स्मृत्वाथ केशग्रहणं च देव्या वस्त्रापहारं च रजस्वलायाः ।
अनागसो भर्तृपराङ्मुखाया दुःखानि दत्तान्यपि विप्रचिंत्य ॥ ३५६
जज्वाल क्रोधादथ भीमसेन आज्यप्रसक्तो हि यथा हुताशनः ।
तत्राह कर्णं च सुयोधनं च कृपं द्रौणिं कृतवर्माणमेव ॥ ३५७
निहन्मि दुःशासनमद्य पापं संरक्षतामद्य समस्तयोधाः ।
इत्येवमुक्त्वा सहसाभ्यधावन्निहंतुकामोऽतिबलस्तरस्वी ॥ ३५८
तथातु विक्रम्य रणे वृकोदरो महागजं केसरिको यथैव ।
असिं समुद्यम्य सितं सुधारं कंठे पदाक्रम्य च वेपमानम् ॥ ३५९
उत्कृत्य वक्ष· पतितस्य भूमावथापिबच्छोणितमस्य कोष्णम् ।
सत्यां चिकीर्षुर्मतिमान् प्रतिज्ञामास्वाद्य चास्वाद्य च वीक्षमाणः ॥ ३६०
अथाह भीम पुनरुग्रकर्मा दुःशासनं क्रोधपरीतचेताः ।
गतासुमालोक्य विहस्य सुस्वरं किं वा कुर्या मृत्युना रक्षितोसि ॥ ३६१

ये भीमसेनं ददृशुस्तदानीं भयेन तेऽपि व्यथिता निपेतुः ।
ये चापि नासन् व्यथिता मनुष्यास्तेषां करेभ्यः पतितं हि शस्त्रम् ॥ ३६२
तस्मिन् कृते भीमसेनेन रूपे दृष्ट्वा जनाः शोणितं पीयमानम् ।
संप्राद्रवंश्चित्रसेनेन सार्धं भीमं रक्षो भाषमाणा भयार्ताः ॥ ३६३

भीमोऽपि हत्वा तत्रैव दुःशासनममर्षणम् ।
पूरयित्वांजलिं भूयो रुधिरस्योग्रनिस्वनः ।
शृण्वतां लोकवीराणामिदं वचनमब्रवीत् ॥ ३६४
एष ते रुधिरं कंठात्पिबामि पुरुषाधम ।
ब्रूहीदानीं तु संहृष्टः पुनर्गौरिति गौरिति ॥ ३६५
ये तदास्मान् प्रनृत्यंति पुनर्गौरिति गौरिति ।
तान् वयं प्रति नृत्यामः पुनर्गौरिति गौरिति ॥ ३६६

ततः क्रुद्धो वृषसेनोऽभ्यधावदवस्थितं प्रमुखे पांडवं तम् ।
वृकोदरं कालमिवात्तदंडं गदाहस्तं योधयंतं त्वदीयान् ॥ ३६७
तमभ्यधावन्नकुलः प्रवीरो रोषादमित्रं प्रतुदन् पृषत्कैः ।
वितत्य पक्षौ सहसा पतंतं श्येन यथैवामिषलुब्धमाजौ ॥ ३६८
अवाकिरद्वृषसेनस्ततस्तं शितैः शरैर्नकुलमुदारवीर्यम् ॥ ३६९
स भीमसेनस्य रथं हताश्वो माद्रीसुतः कर्णशराभितप्तः ।
आपुप्लुवे सिंह इवाचलाग्रं संप्रेक्ष्यमाणस्य धनंजयस्य ॥ ३७०
ततः किरीटी परवीरघाती हताश्वमालोक्य नरप्रवीरः ।
माद्रीसुतं नकुलं लोकमध्ये समीक्ष्य कृष्णं भृशविक्षतं च ।
समभ्यधावद्वृषसेनमाहवे स सूतजस्य प्रमुखे स्थितस्तदा ॥ ३७१
तमापतंतं नरवीरमुग्रं महाहवे बाणसहस्रधारिणम् ।
अभ्यापतत्कर्णसुतो महारथं यथा महेन्द्रं नमुचिः पुरा तथा ॥ ३७२
ततो द्रुतं चैकशरेण पार्थं सितेन विध्वा युधि कर्णपुत्रः ।
ननाद नादं सुमहानुभावो विद्ध्वेव शक्रं नमुचिः स वीरः ॥ ३७३
ससर्ज बाणान् विशिखान् महात्मा वधाय राजन् कर्णसुतस्य संख्ये ।
स पार्थबाणाभिहतः पपात रथाद्द्विबाहुर्विशिरा धरायाम् ।
सुपुष्पितो वृक्षवरोऽतिकायो वातेरितः शाल इवाद्रिशृंगात् ॥ ३७४
ततः समक्षं स्वसुतं विलोक्य कर्णो हतं श्वेतहयेन संख्ये ।
संरंभमागम्य परं महात्मा कृष्णार्जुनौ सहसैवाभ्यधावत् ॥ ३७५

८

वृषसेनं हतं दृष्ट्वा शोकामर्षसमन्वितः ।
पुत्रशोकोद्भवं वारि नेत्राभ्यां समवासृजत् ॥ ३७६
रथेन कर्णस्तेजस्वी जगामाभिमुखो रिपुम् ।
युद्धायामर्षताम्राक्षः समाहूय धनंजयम् ॥ ३७७
तौ रथौ सूर्यसंकाशौ वैय्याघ्रपरिवारितौ ।
समेतौ ददृशुस्तत्र द्वाविवार्कौ समुद्गतौ ॥ ३७८
दृष्ट्वा च द्वैरथं ताभ्या तत्र योधाः सहस्रशः ।
चक्रुर्बाहुस्वनांश्चैव तथा चैलावधूननम् ॥ ३७९
आजघ्नुः कुरवस्तत्र वादित्राणि समंततः ।
कर्ण प्रहर्षयिष्यंतः शखान् दध्मुश्च सर्वशः ॥ ३८०
तथैव पांडवाः सर्वे हर्षयंतो धनंजयम् ।
तूर्यशंखनिनादेन दिशः सर्वाभ्यनादयन् ॥ ३८१
प्रभिन्नाविव मातंगौ सुसरब्धाविवाचलौ ।
देवगर्भौ देवबलौ देवतुल्यौ च रूपतः ॥ ३८२
संशयः सर्वभूताना विजये समपद्यत ।
समेतौ पुरुषव्याघ्रौ प्रेक्ष्य कर्णधनंजयौ ॥ ३८३
उभौ वरायुधधरावुभौ रणकृतश्रमौ ।
उभौ विश्रुतकर्माणौ पौरुषेण बलेन च ॥ ३८४
तावकाना रणे कर्णो ग्लहो ह्यासीद्विशांपते ।
तथैव पांडवेयानां ग्लहः पार्थोऽभवत्तदा ॥ ३८५
त एव सभ्यास्तत्रासन् प्रेक्षकाश्चाभवन् स्म ते ।
ताभ्यां श्रुतं समासक्तं विजयायेतराय च ॥ ३८६
देवदानवगंधर्वाः पिशाचोरगराक्षसाः ।
प्रतिपक्षग्रहं चक्रुः कर्णार्जुनसमागमे ॥ ३८७
द्यौरासीत्सूतपुत्रस्य पक्षे मातेव धिष्ठिता ।
भूमिर्धनंजयस्यासीन्मातेव जयकांक्षिणी ॥ ३८८
ब्रह्मक्षत्रं च यज्ञाश्च दक्षिणाश्चार्जुनं श्रिताः ।
राक्षसाः सह यादोभिः श्वशृगालाश्च कर्णतः ॥ ३८९
दिदृक्षवः समाजग्मुः कर्णार्जुनसमागमम् ।
देवदानवगंधर्वा नागा यक्षाः पतत्रिणः ॥ ३९०

अथाब्रवीत्सूतपुत्रः शल्यमाभाष्य सस्मितम् ।
यदि पार्थो रणे हन्यादद्य मामिह कर्हिचित् ॥ ३९१
किं करिष्यसि संग्रामे शल्य सत्यमथोच्यताम् ॥ ३९२

श० उ०—यदि कर्ण रणे हन्यादद्य त्वा श्वेतवाहनः ।
उभावेकरथेनाहं हन्या माधवपांडवौ ॥ ३९३
एवमेव तु गोविंदमर्जुनः प्रत्यभ्याषत ।
तं प्रहस्याब्रवीत्कृष्णः सत्यं पार्थमिदं वचः ॥ ३९४
पतेद्दिवाकरः स्थानाच्छुष्येदपि महोदधिः ।
शैत्यमग्निरियान्न त्वा हन्यात्कर्णो धनंजय ॥ ३९५
यदि चैतत्कथंचित्स्याल्लोकपर्यासनं भवेत् ।
हन्यां कर्णं तथा शल्यं बाहुभ्यामेव संयुगे ॥ ३९६
यदि कृष्णवचः श्रुत्वा प्रहसन् कपिकेतनः ।
ममैव तावत्पर्याप्तौ कर्णशल्यौ जनार्दन ॥ ३९७
सपताकाध्वजं कर्णं सशल्यरथवाजिनम् ।
द्रष्टास्यद्य रणे कृष्ण शरैश्छिन्नमनेकधा ॥ ३९८
अद्य राधेयभार्याणां वैधव्यं समुपस्थितम् ।
ध्रुवं स्वप्नेष्वनिष्टानि ताभिर्दृष्टानि माधव ॥ ३९९
न हि मे शाम्यते मन्युर्यदनेन पुरा कृतम् ।
कृष्णां सभागतां दृष्ट्वा मूढेनादीर्घदर्शिना ॥ ४००
अद्याभिमन्युजननीं प्रहृष्टः सात्वयिष्यसि ।
कुंतीं बाष्पमुखीं कृष्णां संप्रहृष्टा जनार्दन ॥ ४०१
तौ शंखभेरीनिनदे समृद्धे समीयतुः श्वेतहयौ नराग्र्यौ ।
वैकर्तनः सूतपुत्रोऽर्जुनश्च दुर्मंत्रिते तव पुत्रस्य राजन् ॥ ४०२
ततः कर्णः प्रथमं तत्र पार्थं महेषुभिर्दशभिः प्रत्यविध्यत् ।
तं चार्जुनः प्रत्यविध्यच्छिताग्रैः कक्षांतरे दशभिः संप्रहस्य ॥ ४०३
ततोर्जुनः प्रासृजदुग्रधन्वा भुजावुभौ गांडिवं चानुमृज्य ।
नाराचनालीकवराहकर्णान् क्षुरांस्तथा सांजलिकार्धचंद्रान् ॥ ४०४
ते सर्वतः समकीर्यंत राजन् पार्थेषवः कर्णरथं विशंतः ।
अवाङ्मुखाः पक्षिगणा दिनांते विशंति केतार्थमिवाशु वृक्षम् ॥ ४०५
यानर्जुनः सभृकुटीकटाक्षैः कर्णाय राजन्नसृजज्जितारिः ।
तान् सायकैर्ग्रसते सूतपुत्रः क्षिप्तान् क्षिप्तान् पांडवस्येषुसंघान् ॥ ४०६

ततोऽस्त्रमाग्नेयममित्रसाधनं मुमोच कर्णाय महेन्द्रसूनुः ।
भूम्यंतरिक्षे च दिशोऽर्कमार्गं प्रावृत्य देहोऽस्य बभूव दीप्तः ॥ ४०७
योधाश्च सर्वे ज्वलितांबरा भृशं प्रदुद्रुवुस्तत्र विदग्धवस्त्राः ।
शब्दश्च घोरोऽतिबभूव तत्र यथा वने वेणुवनस्य दह्यतः ॥ ४०८
तद्वीक्ष्य कर्णो ज्वलनास्त्रमुद्यत स वारुणं तत्प्रशमार्थमाहवे ।
समुत्सृजत्सूतसुतः प्रतापवान् स तेन वह्निं शमयांबभूव ॥ ४०९
ततोऽप्यस्त्रं दयितं देवराज्ञ प्रादुश्चक्रे वज्रमतिप्रभावम् ।
गांडीवं ज्यां विशिखांश्चानुमंत्र्य धनंजयः शत्रुभिरप्रधृष्यः ॥ ४१०
ततः क्षुरं प्रांजलिकार्धचंद्रा नीलीकनाराचवराहकर्णाः ।
गांडीवतः प्रादुरासन् सुतीक्ष्णाः सहस्रशो वज्रसमानवेगाः ॥ ४११
शराचितांगो रुधिरार्द्रगात्रः कर्णस्तदा रोषविवृत्तनेत्रः ।
दृढज्यमानाम्य समुद्रघोषं प्रादुश्चक्रे भार्गवास्त्रं महात्मा ॥ ४१२
तस्यास्त्रमस्त्रेण निहत्य सोऽथ जघान संख्ये रथनागपत्तीन् ।
पांचालानां प्रवरांश्चापि योधान् क्रोधाविष्टः सूतपुत्रस्तरस्वी ॥ ४१३
तदुत्तमं ब्राह्ममसह्यमस्त्रं प्रादुश्चक्रे मनसा यद्विधेयम् ।
तदस्य हत्वा विरराज कर्णो मुक्त्वा शरान् मेघ इवाबुधाराः ॥ ४१४
घ्नतोस्तथान्योन्यमिषुप्रवेकैर्धनंजयस्याधिरथेश्च तत्र ।
ततो धनुर्ज्या सहसातिकृष्टा सुघोषमच्छिद्यत पांडवस्य ॥ ४१५
तस्मिन् क्षणे पांडव सूतपुत्रः समाचिनोत्क्षुद्रकाणां शतेन ।
निर्मुक्तसर्पप्रतिमैरभीक्ष्ण तैलप्रधौतैः खगपत्रवाजैः ॥ ४१६
ततो धनुर्ज्यामवनाम्य शीघ्रं शरानस्तानाधिरथेर्विधम्य ।
सुसंरब्धः कर्णशरक्षतांगो रणे पार्थः कौरवान् प्रत्यगृह्णात् ॥ ४१७
तयोरेवं युध्यतोराजिमध्ये सूतात्मजोऽभूदधिकः कदाचित् ।
पार्थः कदाचित्त्वधिकः किरीटी वीर्यास्त्रमायाबलपौरुषेण ॥ ४१८
कर्णोऽथ पार्थं न विशेषयद्यदा भृशं च पार्थेन शराभितप्तः ।
ततस्तु वीरः शरविक्षतांगो दधे मनो ह्येकशयस्य तस्य ॥ ४१९
ततो रिपुघ्नं समधत्त कर्णः सुसंचितं सर्पमुखं ज्वलंतम् ।
रौद्रं शरं सन्नतमुग्रधौतं पार्थार्थमत्यर्थचिराभिगुप्तम् ॥ ४२०
सदार्चितं चंदनचूर्णशायिनं सुवर्णतूणीरशयं महार्चिषम् ।
आकर्णपूर्णं च विकृष्य कर्णः पार्थोन्मुखः सदधे चोत्तमौजाः ॥ ४२१

प्रदीप्तमैरावतवंशसंभवं शिरो जिहीर्षुर्युधि सव्यसाचिनः ।
ततः प्रजज्वाल दिशो नभश्च उल्काश्च घोरा शतशः प्रपेतुः ॥ ४२२
ततोऽब्रवीन्मद्रराजो महात्मा दृष्ट्वा कर्णं प्रहितेषुं तमुग्रम् ।
न कर्ण ग्रीवामिषुरेव लप्स्यते समीक्ष्य संधत्स्व शरं शिरोघ्नम् ॥ ४२३
अथाब्रवीत्क्रोधसंरक्तनेत्रो मद्राधिपं सूतपुत्रस्तरस्वी ।
न संधत्ते द्विः शरं शल्य कर्णो न मादृशा जिह्मयुद्धा भवन्ति ॥ ४२४
इतीदमुक्त्वा विससर्ज तं शरं प्रयत्नतो वर्षगणाभिपूजितम् ।
हतोऽसि वै फाल्गुन इत्युवाच त्वरन् स राजन् विजयार्थमुद्यतः ॥ ४२५
तं प्रेक्ष्य दीप्तं युधि माधवस्तु त्वरान्वितः स त्वरयैव लीलया ।
पदा विनिष्पिष्य रथोत्तमं स प्रावेशयन्पृथिवीं किंचिदेव ॥ ४२६
तस्मिंस्तथा वै धरणीं निमग्ने रथे प्रयत्नान्मधुसूदनस्य ।
ततः शरः सोऽभ्यहनत्किरीटं तस्येंद्रदत्तं सुदृढं च धीमतः ॥ ४२७
विना किरीटं शुशुभे स पार्थः श्यामो युवा नील इवोच्चशृंगः ।
ततः समुद्ग्रथ्य सितेन वाससा स्वमूर्धजानव्यथितस्तदार्जुनः ॥ ४२८
समुज्जहाराशु पुनः पतत रथं भुजाभ्यां पुरुषोत्तमस्ततः ।
ततो वृषो बाणनिपातकोपितो महोरगो दंडविघट्टितो यथा ॥ ४२९
ततः किरीटी भृशमुग्रनिस्वनं महाशरं सर्पविषानलोपमम् ।
अयस्मयं रौद्रमहास्त्रसंभृतं महाहवे क्षेप्तुमना महामतिः ॥ ४३०
ततस्तदस्त्रं मनसः प्रनष्टं यद्भार्गवोऽस्मै प्रददौ महात्मा ।
चक्रं च वामं प्राग्रसद्भूमिरस्य प्राप्ते तस्मिन् वधकाले नृवीर ॥ ४३१
घूर्णे रथे ब्राह्मणस्याभिशापाद्रामादुपात्ते त्वविभाति चास्त्रे ।
छिन्ने शरे सर्पमुखे च घोरे पार्थेन तस्मिन् विषसाद कर्णः ॥ ४३२
धर्मप्रधानं किल पाति धर्म इत्यब्रुवन् धर्मविदः सदैव ।
स चापि निघ्नाति न पाति भक्तान् मन्ये न नित्यं परिपाति धर्मः ॥ ४३३
एवं ब्रुवन् प्रस्खलिताश्वसूतो विचाल्यमानोऽर्जुनबाणपातैः ।
मर्माभिघाताच्छिथिलः क्रियासु पुनः पुनर्धर्ममसौ जगर्ह ॥ ४३४

९

ततोऽवतीर्य राधेयो रथादाशु समुद्यतः ।
चक्रं भुजाभ्यामालंब्य समुत्क्षेप्तुमियेष सः ॥ ४३५

ग्रस्तचक्रस्तु राधेयः क्रोधादश्रूण्यवर्तयत् ।
अर्जुनं वीक्ष्य संरब्धमिदं वचनमब्रवीत् ॥ ४३६

भो भो पार्थ महेष्वास मुहूर्तं परिपालय ।
यावच्चक्रमिदं ग्रस्तमुद्धरामि महीतलात् ॥ ४३७

न त्वं कापुरुषाचीर्णं मार्गमास्थातुमर्हसि ।
ख्यातस्त्वमसि कौंतेय विशिष्टो रणकर्मसु ॥ ४३८

शरणागते न्यस्तशस्त्रे याचमाने तथार्जुन ।
अबाणे भ्रष्टकवचे भ्रष्टभग्नायुधे तथा ॥ ४३९

न विमुंचंति शस्त्राणि शूराः साधुव्रते स्थिताः ।
त्वं च शूरतमो लोके साधुवृत्तश्च पांडव ॥ ४४०

यावच्चक्रमिदं ग्रस्तमुद्धरामि महाभुज ।
न मां रथस्थो भूमिष्ठं विकलं हंतुमर्हसि ॥ ४४१

तमब्रवीद्वासुदेवो रथस्थो राधेय दिष्ट्या स्मरसीह धर्मम् ।
प्रायेण नीचा व्यसनेषु मग्ना निंदंति दैवं कुकृतं न तु स्वम् ॥ ४४२

यद्द्रौपदीमेकवस्त्रां सभायामानाययेस्त्वं च सुयोधनश्च ।
दुःशासनः शकुनिः सौबलश्च न ते कर्ण प्रत्यभात्तत्र धर्मः ॥ ४४३

यदा सभायां राजानमनक्षज्ञं युधिष्ठिरम् ।
अजैषीच्छकुनिर्ज्ञानात्क्व ते धर्मस्तदा गतः ॥ ४४४

वनवासे व्यतीते च कर्ण वर्षे त्रयोदशे ।
न प्रयच्छसि यद्राज्यं क्व ते धर्मस्तदा गतः ॥ ४४५

यद्वारणावते पार्थान् सुप्तान् जतुगृहे तदा ।
आदीपयस्त्वं राधेय क्व ते धर्मस्तदा गतः ॥ ४४६

यदा रजस्वलां कृष्णां दुःशासनवशे स्थिताम् ।
सभायां प्राहसः कर्ण क्व ते धर्मस्तदा गतः ॥ ४४७

राज्यलुब्धः पुनः कर्ण समाह्वयसि पांडवान् ।
यदा शकुनिमाश्रित्य क्व ते धर्मस्तदा गतः ॥ ४४८

यदाभिमन्युं बहवो युद्धे जघ्नुर्महारथाः ।
परिवार्य रणे बालं क्व ते धर्मस्तदा गतः ॥ ४४९

यद्येष धर्मस्तत्र न विद्यते हि किं सर्वथा तालुविशोषणेन ।
अद्येह धर्म्याणि विधत्स्व सूत तथापि जीवन्न विमोक्ष्यसे हि ॥ ४५०

एवमुक्तस्तदा कर्णो वासुदेवेन भारत ।
लज्जयावनतो भूत्वा नोत्तरं किंचिदुक्तवान् ॥ ४५१
क्रोधात्प्रस्फुरमाणौष्ठो धनुरुद्यम्य भारत ।
योधयामास वै पार्थं महावेगपराक्रमः ॥ ४५२
ततोऽब्रवीद्वासुदेवः फाल्गुनं पुरुषर्षभम् ।
दिव्यास्त्रेणैव निर्भिद्य पातयस्व महाबलः ॥ ४५३
एवमुक्तस्तु देवेन क्रोधमागात्तदार्जुनः ।
तस्य क्रुद्धस्य सर्वेभ्यः स्रोतोभ्यस्तेजसोऽर्चिषः ।
प्रादुरासंस्तदा राजंस्तदद्भुतमिवाभवत् ॥ ४५४
तत्समीक्ष्य ततः कर्णो ब्रह्मास्त्रेण धनंजयम् ।
अभ्यवर्षत्पुनर्यत्नमकरोद्रथसज्जने ॥ ४५५
ब्रह्मास्त्रेणैव तं पार्थो ववर्ष शरवृष्टिभिः ।
तदस्त्रमस्त्रेणावार्य प्रजहार च पाडवः ॥ ४५६
अथ त्वरन् कर्णवधाय पार्थो महेन्द्रवज्रानलदंडसन्निभम् ।
आदत्त पार्थोञ्जलिकं निषंगात्सहस्ररश्मेरिव रश्मिमुत्तमम् ॥ ४५७
ततोऽर्जुनस्तस्य शिरो जहार वृत्रस्य वज्रेण यथा महेन्द्रः ।
शरोत्तमेनांजलिकेन राजस्तदा महास्त्रप्रतिमंत्रितेन ॥ ४५८
पार्थोऽपराह्णे शिर उच्चकर्त वैकर्तनस्याथ महेन्द्रसूनुः ।
वरागमुर्व्यामपतच्चमूमुखे दिवाकरोऽस्तादिव रक्तमंडलः ॥ ४५९
ततः शंखान् पांडवा दध्मुरुच्चैर्दृष्ट्वा कर्णं पातितं फाल्गुनेन ॥ ४६०
प्रताप्य सेना स तु पाडवी रणे शरांशुभिर्भास्करतुल्यदीधितिः ।
किरीटिकालेन सुवर्णभास्करोऽप्यनीयतास्त दिवसावसाने ॥ ४६१
कर्णं तु शूरं पतितं पृथिव्यां शराचितं शोणितदिग्धगात्रम् ।
दृष्ट्वा शयानं भुवि मद्रराजश्छिन्नध्वजेनाथ ययौ रथेन ॥ ४६२
हते कर्णे कुरवः प्राद्रवंत भयार्दिता गाढविद्धाश्च संख्ये ।
अवेक्षमाणा मुहुरर्जुनस्य ध्वजं महांतं वपुषा ज्वलंतम् ॥ ४६३
निपातितस्यंदनवाजिनागं बलं च दृष्ट्वा हतसूपुत्रम् ॥
दुर्योधनोऽश्रुपरिपूर्णनेत्रो दीनो मुहुर्निश्वसंश्चार्तरूपः ॥ ४६४
कर्णं तु शूरं पतितं पृथिव्यां शराचित शोणितदिग्धगात्रम् ।
यदृच्छया सूर्यमिवावनिस्थं दिदृक्षवः संपरिवार्य तस्थुः ॥ ४६५

भीमश्च भीमेन तदा स्वनेन नादं कृत्वा रोदसी कंपमानः ।
आस्फोटयन् वल्गते नृत्यते च हते कर्णे त्रासयन् धार्तराष्ट्रान् ॥ ४६६
मद्राधिपश्चापि विमूढचेतास्तूर्णं रथेनापकृतध्वजेन ।
दुर्योधनस्यांतिकमेत्य राजन् सबाष्पदुःखाद्वचनं बभाषे ॥ ४६७
विशीर्णनागाश्वरथप्रवीरं बलं त्वदीयं यमराष्ट्रकल्पम् ॥
अन्योन्यमासाद्य हतं महद्भिर्नराश्वनागैर्गिरिकूटकल्पैः ॥ ४६८
नैतादृशं भारतयुद्धमासीद्यथा तु कर्णार्जुनयोर्बभूव ।
ग्रस्तौ हि कर्णेन समेत्य कृष्णावन्ये च सर्वे तव शत्रवो ये ॥ ४६९
दैवं ध्रुवं पार्थवशात्प्रवृत्तं यत्पांडवान् पाति हिनस्ति चास्मान् ।
तवार्थसिद्ध्यर्थकराश्च सर्वे प्रसह्य वीरा निहता द्विषद्भिः ॥ ४७०
वीर्येण शौर्येण बलेन तेजसा तैस्तैस्तु युक्ता विविधैर्गुणौघैः ।
अवध्यकल्पा निहता नरेन्द्रास्तवार्थकामा युधि पांडवेयैः ॥ ४७१
तन्मा शुचो भारत दिष्टमेतत्पर्याश्वस त्वं न सदास्ति सिद्धिः ॥ ४७२
एतद्वचो मद्रपतेर्निशम्य स्वं चापनीतं मनसा निरीक्ष्य ।
दुर्योधनो दीनमना विसंज्ञः पुनः पुनर्न्यश्वसदार्तरूपः ।
तं द्रोणपुत्रप्रमुखा नरेन्द्राः सर्वे समाश्वास्य मुहुः प्रयान्ति ॥ ४७३
वधेन कर्णस्य तु दुःखितास्ते हा कर्ण हा कर्ण इति ब्रुवाणाः ।
द्रुतं प्रयाताः शिबिराणि राजन् दिवाकरं रक्तमवेक्ष्यमाणाः ॥ ४७४
कर्णस्य देहं रुधिरावसिक्तं भक्तानुकंपी भगवान् विवस्वान् ।
स्पृष्ट्वांशुभिर्लोहितरक्तरूपः सिस्नासुरभ्येति परं समुद्रम् ॥ ४७५

शरसंकृत्तवर्माणं रुधिरोक्षितवाससम् ।
गतासुमपि राधेयं नैव लक्ष्मीर्विमुंचति ॥ ४७६
तथा निपातिते कर्णे परसैन्ये च विद्रुते ।
आश्लिष्य पार्थं दाशार्हो हर्षाद्वचनमब्रवीत् ॥ ४७७
हतो वज्रभृता वृत्रस्त्वया कर्णो धनंजय ।
वृत्रकर्णवधं घोरं कथयिष्यंति मानवाः ॥ ४७८
तमिमं विक्रमं लोके प्रथितं ते यशस्करम् ।
निवेदयावः कौंतेय कुरुराजस्य धीमतः ॥ ४७९
पार्थमादाय गोविंदो ददर्श च युधिष्ठिरम् ।
शयानं राजशार्दूलं कांचने शयनोत्तमे ॥ ४८०

अगृह्णीतां च मुदितौ चरणौ पार्थिवस्य तौ ।
तयोः प्रहर्षमालक्ष्य हर्षादश्रूण्यवर्तयत् ॥ ४८१

कृ० उ०—हतो वैकर्तनो राजन् सूतपुत्रो महारथः ।
दिष्ट्या जयसि राजेन्द्र दिष्ट्या वर्धसि भारत ॥ ४८२
यस्तु द्यूतजितां कृष्णां प्राह सत्पुरुषाधमः ।
तस्याद्य सूतपुत्रस्य भूमिः पिबति शोणितम् ॥ ४८३
इति श्रुत्वा वचस्तस्य केशवस्य महात्मनः ।
धर्मपुत्रः प्रहृष्टात्मा दाशार्हं वाक्यमब्रवीत् ॥ ४८४
नैतच्चित्रं महाबाहो त्वयि देवकिनंदन ।
त्वया सारथिना पार्थो यत्नवानहनच्च तम् ॥ ४८५
इत्युक्त्वा धर्मराजस्तु रथं हेमविभूषितम् ।
आस्थाय पुरुषव्याघ्र स्वबलेनाभिसंवृतः ।
प्रययौ स महाबाहुर्द्रष्टुमायोधनं तदा ॥ ४८६
गंधतैलावसिक्ताभिः कांचनीभिः सहस्रशः ।
दीपिकाभिः कृतोद्योतं पश्यते वै वृषं तदा ॥ ४८७
सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः ।
संजातप्रत्ययोऽतीव वीक्ष्य चैवं पुनः पुनः ॥ ४८८
अद्य राजास्मि गोविंद पृथिव्यां भ्रातृभिः सह ।
त्वया नाथेन वीर्येण विदुषा परिपालितः ॥ ४८९
त्वत्प्रसादाद्वयं चैव कृतार्थाः पुरुषर्षभ ।
दिष्ट्या जयसि गोविंद दिष्ट्या शत्रुर्निपातितः ॥ ४९०
स्वप्स्यामोऽद्य सुखं रात्रौ त्वत्प्रसादान्महाभुज ।
एवं स बहुशो राजा प्रशशंस जनार्दनम् ॥ ४९१

इति श्रीसंक्षिप्तमहाभारते कर्णपर्व समाप्तम् । श्लोक संख्या ४९१.

---

# ९ शल्यपर्व.

१

ततः पूर्वाह्णसमये शिबिरादेत्य संजयः ।
प्रविवेश पुरं दीनो दुःखशोकसमन्वितः ॥ १
प्रविश्य च पुरं सूतो भुजावुच्छ्रित्य दुःखितः ।
वेपमानस्ततो राज्ञः प्रविवेश निवेशनम् ॥ २
रुरोद स नरव्याघ्र हा राजन्निति दुःखितः ।
अहो बत विनष्टाः स्मो निधनेन महात्मनः ॥ ३
अहो सुबलवान् कालो गतिश्च विषमा तथा ।
शक्रतुल्यबलाः सर्वे यत्रावध्यंत पांडवैः ॥ ४
दृष्ट्वैव तु पुरे राजञ्जनः सर्वः स संजयम् ।
प्ररुरोद भृशोद्विग्नो हा राजन्निति सस्वरम् ॥ ५
तथा स विह्वल. सूतः प्रविश्य नृपते. क्षयम् ।
ददर्श नृपतिश्रेष्ठं प्रज्ञाचक्षुषमीश्वरम् ॥ ६
स्नुषाभिर्भरतश्रेष्ठ गांधार्या विदुरेण च ।
तमेव चार्थं ध्यायंतं कर्णस्य निधनं प्रति ॥ ७
रुदन्नेवाब्रवीद्वाक्यं राजानं जनमेजय ।
नातिहृष्टमनाः सूतो बाष्पसंदिग्धया गिरा ॥ ८
संजयोऽहं नरव्याघ्र नमस्ते भरतर्षभ ।
मद्राधिपो हतः शल्यः शकुनिः सौबलस्तथा ॥ ९
उलूकः पुरुषव्याघ्र कैतव्यो दृढविक्रमः ।
संसप्तका हताः सर्वे कांबोजाश्च शकैः सह ॥ १०
म्लेच्छाश्च पार्वतीयाश्च यवनाश्च निपातिताः ॥ ११
दुर्योधनो हतो राजा यथोक्तं पांडवेन ह ।
भग्नसक्थो महाराज शेते पांसुषु रूषितः ॥ १२
धृष्टद्युम्नो हतो राजञ् शिखंडी चापराजितः ।
उत्तमौजा युधामन्युस्तथा राजन् प्रभद्रकाः ॥ १३
पांचालाश्च नरव्याघ्राश्चेदयश्च निषूदिताः ।
तव पुत्रा हताः सर्वे द्रौपदेयाश्च भारत ॥ १४
प्रायः स्त्रीशेषमभवज्जगत्कालेन मोहितम् ।
सप्त पांडवतः शेषा धार्तराष्ट्रास्तथा त्रयः ॥ १५

ते चैव भ्रातरः पंच वासुदेवश्च सात्यकिः ।
कृपश्च कृतवर्मा च द्रौणिश्च जयतां वरः ॥ १६
एतच्छ्रुत्वा वचः क्रूरं धृतराष्ट्रो जनेश्वरः ।
निपपात महाराज गतसत्वो महीतले ॥ १७
तस्मिन्निपतिते भूमौ विदुरोऽपि महायशाः ।
निपपात महाराज शोकव्यसनकर्षित ॥ १८
गांधारी च नृपश्रेष्ठ सर्वाश्च कुरुयोषितः ।
पतिताः सहसा भूमौ श्रुत्वा क्रूरं वचश्च ताः ॥ १९
लब्ध्वा तु स नृपः संज्ञां वेपमान सुदुःखितः ।
उद्वीक्ष्य च दिश. सर्वाः क्षत्तारं वाक्यमब्रवीत् ॥ २०
विद्वन् क्षत्तर्महाप्राज्ञ त्व गतिर्भरतर्षभ ।
ममानाथस्य सुभृशं पुत्रैर्हीनस्य सर्वशः ।
एवमुक्त्वा ततो भूयो विसज्ञो निपपात ह ॥ २१
तं तथा पतितं दृष्ट्वा बाधवा येऽस्य केचन ।
शीतैस्ते सिषिचुस्तोयैर्विव्यजुर्व्यजनैरपि ॥ २२
स तु दीर्घेण कालेन प्रत्याश्वस्तो महीपतिः ।
तूष्णीं दध्यौ महीपाल पुत्रव्यसनकार्षितः ॥ २३
संजयोऽप्यरुदत्तत्र दृष्ट्वा राजानमातुरम् । २४
ततो दीर्घेण कालेन विदुरं वाक्यमब्रवीत् ।
धृतराष्ट्रो नरश्रेष्ठो मुह्यमानो मुहुर्मुहुः ॥ २५
गच्छतु योषितः सर्वा गांधारी च यशस्विनी ।
तथेमे सुहृदः सर्वे भ्रश्यते मे मनो भृशम् ॥ २६
एवमुक्तस्ततः क्षत्ता तास्त्रियो भरतर्षभ ।
विसर्जयामास शनैर्वेपमानाः पुनः पुनः ॥ २७
सधूममिव निश्वस्य करौ धुन्वन् पुनः पुनः ।
विचिंत्य च महाराज ततो वचनमब्रवीत् ॥ २८
अहो बत महद्दुःख यदहं पांडवान् रणे ।
क्षेमिणश्चाव्ययांश्चैव त्वत्तः सूत शृणोमि वै ॥ २९
चिंतयित्वा वयस्तेषां बालक्रीडां च संजय ।
अद्य श्रुत्वा हतान् पुत्रान् भृशं मे दीर्यते मनः ॥ ३०

अंधत्वाद्यदि तेषां तु न मे रूपनिदर्शनम् ।
पुत्रस्नेहकृता प्रीतिर्नित्यमेतेषु धारिता ॥ ३१

एह्येहि पुत्र राजेन्द्र ममानाथस्य सांप्रतम् ।
त्वया हीनो महाबाहो का नु यास्याम्यहं गतिम् ॥ ३२

गतिर्भूत्वा महाराज ज्ञातीना सुहृदा तथा ।
अंधं वृद्धं च वीर विहाय क्वाभिगच्छसि ॥ ३३

कोऽनु मामुत्थित काले तात तातेति वक्ष्यति ।
महाराजेति सततं लोकनाथेति चासकृत् ॥ ३४

ननु नामाहमश्रौषं वचनं तव पुत्रक ।
भूयसी मम पृथ्वीय यथा पार्थस्य नो तथा ॥ ३५

यत्र शूरा महात्मानः सर्वशस्त्रास्त्रपारगाः ।
बहवो निहताः सूत महेन्द्रसमविक्रमाः ॥ ३६

पुत्राश्च मे विनिहताः पौत्राश्चैव महाबलाः ।
वयस्या भ्रातरश्चैव किमन्यद्भागधेयतः ॥ ३७

अहं विमुक्ताः स्वैर्भाग्यैः पुत्रैश्चैवेह संजय ।
कथमद्य भविष्यामि वृद्धः शत्रुवशं गतः ॥ ३८

नान्यदत्र परं मन्ये वनवासादृते प्रभो ।
सोऽहं वनं गमिष्यामि निर्बंधुर्ज्ञातिसंक्षये ॥ ३९

एवं स शोकसंतप्तः पार्थिवो हतबांधवः ।
मुहुर्मुहुर्मुह्यमानः पुत्राधिभिरभिप्लुतः ॥ ४०

दीर्घमुष्णं च निश्वस्य चिंतयित्वा पराभवम् ।
पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ॥ ४१

ब्रूहि सर्वं यथा तत्त्वं भरतानां महाक्षयम् ।
यथा च निहतः संख्ये पुत्रो दुर्योधनो मम ॥ ४२

यद्यद्यथा यादृशं च युद्धं वृत्तमभूत्तत. ।
अखिलं श्रोतुमिच्छामि कुशलो ह्यसि संजय ॥ ४३

---

## २

सं० उ०—सूतपुत्रे हते राजन् पुत्रास्ते प्राद्रवन् भयात् ।
विशस्त्रकवचाः सर्वे कांदिशीका विचेतसः ॥ ४४

कृपाविष्टः कृपो राजन् वयःशीलसमन्वितः ।
अब्रवीत्तत्र तेजस्वी सोऽभिसृत्य जनाधिपम् ॥ ४५
दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि भारत ।
श्रुत्वा कुरु महाराज यदि ते रोचतेऽनघ ॥ ४६
न युद्धधर्माच्छ्रेयान् वै पंथा राजेन्द्र विद्यते ।
यं समाश्रित्य युध्यंते क्षत्रियाः क्षत्रियर्षभ ॥ ४७
तत्र त्वां प्रतिवक्ष्यामि किंचिदेव हितं वचः ॥ ४८
हते भीष्मे च द्रोणे च कर्णे चैव महारथे ।
जयद्रथे च निहते तव भ्रातृषु चानघ ।
लक्ष्मणे तव पुत्रे च किं शेषं पर्युपास्महे ॥ ४९
येषु भारं समासाद्य राज्ये मतिमकुर्महि ।
ते संत्यज्य तनूर्याताः शूरा ब्रह्मविदां गतिम् ॥ ५०
तां नावमिव पर्यस्तां वातभ्रातामिवार्णवे ।
तव सेनां महाराज सव्यसाची व्यकंपयत् ॥ ५१
आत्मनोऽर्थे त्वया लोको यत्नतः सर्व आहृतः ।
स ते संशयितस्तात आत्मा च भरतर्षभ ॥ ५२
रक्ष दुर्योधनात्मानमात्मा सर्वस्य भाजनम् ।
भिन्ने हि भाजने तात दिशो गच्छति तद्गतम् ॥ ५३
हीयमानेन वै संधिः पर्येष्टव्यः समेन च ।
विग्रहो वर्धमानेन नीतिरेषा बृहस्पतेः ॥ ५४
ते वयं पांडुपुत्रेभ्यो हीनाः स्वबलशक्तितः ।
तदत्र पांडवैः सार्धं संधिं मन्ये क्षमं विभो ॥ ५५
प्रणिपत्य हि राजानं राज्यं यदि लभेमहि ।
श्रेयः स्यान्न तु मौढ्येन राजन् गंतुं पराभवम् ॥ ५६
वैचित्रवीर्यवचनात् कृपाशीलो युधिष्ठिरः ।
विनियुंजीत राज्ये त्वां गोविंदवचनेन च ॥ ५७
न त्वां ब्रवीमि कार्पण्यान्न प्राणपरिरक्षणात् ।
पथ्यं राजन् ब्रवीमि त्वां तत्परासुः स्मरिष्यसि ॥ ५८
एवमुक्तस्ततो राजा गौतमेन यशस्विना ।
निश्वस्य दीर्घमुष्णं च तूष्णीमासीद्विशांपते ॥ ५९

ततो मुहूर्तं स ध्यात्वा धार्तराष्ट्रो महामनाः ।
कृपं शारद्वतं वाक्यमित्युवाच परंतपः ॥ ६०
यत्किंचित्सुहृदा वाच्यं तत्सर्वं श्रावितो ह्यहम् ।
कृतं च भवता सर्वं प्राणान् संत्यज्य युध्यता ॥ ६१
हेतुकारणसंयुक्तं हितं वचनमुत्तमम् ।
उच्यमानं महाबाहो न मे विप्राग्र्य रोचते ॥ ६२
राज्याद्विनिकृतोऽस्माभिः कथं सोऽस्मासु विश्वसेत् ।
अक्षद्यूतेन नृपतिर्जितोऽस्माभिर्महाधनः ॥ ६३
विप्रलब्धो हृषीकेशस्तच्च कर्माविचारितम् ।
स च मे वचनं ब्रह्मन् कथमेवाभिपद्यते ॥ ६४
विललाप हि यत्कृष्णा सभामध्ये समेयुषी ।
तन्न मर्षयते कृष्णो न राज्यहरणं तथा ॥ ६५
स्वस्रीयं च हतं श्रुत्वा दुःखं स्वपिति केशवः ।
कृतागसो वयं तस्य स मदर्थे कथं भवेत् ॥ ६६
कथं च नाम भुक्त्वेमां पृथिवीं सागरांबराम् ।
पाण्डवानां प्रसादेन भोक्ष्ये राज्यमहं कथम् ॥ ६७
उपर्युपरि वै राज्ञां ज्वलित्वा भास्करो यथा ।
युधिष्ठिरं कथं पश्चादनुयास्यामि दासवत् ॥ ६८
कथं भुक्त्वा स्वयं भोगान् दत्त्वा दायांश्च पुष्कलान् ।
कृपणं वर्तयिष्यामि कृपणैः सह जीविकाम् ॥ ६९
नाभ्यसूयामि ते वाक्यमुक्तं स्निग्धं हितं त्वया ।
न तु संधिमहं मन्ये प्राप्तकालं कथंचन ॥ ७०
नायं क्लीबायितुं कालः संयोद्धुं काल एव नः ॥ ७१
इष्टं मे बहुभिर्यज्ञैर्दत्ता विप्रेषु दक्षिणाः ।
प्राप्ताः कामाः श्रुता वेदाः शत्रूणां मूर्ध्नि च स्थितम् ।
भृत्या मे सुभृतास्तात दीनाश्चाभ्युद्धृता जनाः ॥ ७२
न सुखं ध्रुवमस्तीह कुतो राज्यं कुतो यशः ।
इह कीर्तिर्विधातव्या सा च युद्धेन नान्यथा ॥ ७३
गृहे यत्क्षत्रियस्यापि निधनं तद्विगर्हितम् ।
अधर्मः सुमहानेष यच्छय्यामरणं गृहे ॥ ७४

अरण्ये यो विमुंचेत संग्रामे वा तनु नरः ।
क्रतूनाहृत्य महतो महिमानं स गच्छति ॥ ७५
कृपणं विलपन्नार्तो जरयाभिपरिप्लुतः ।
म्रियते रुदतां मध्ये ज्ञातीना न स पूरुषः ॥ ७६
अपि तै. संगत मार्गं वयमध्यारुहेमहि ।
पितामहेन वृद्धेन तथाचार्येण धीमता ।
जयद्रथेन कर्णेन तथा दुःशासनेन च ॥ ७७
ये मदर्थे हताः शूरास्तेषा कृतमनुस्मरन् ।
ऋणं प्रति प्रयुंजानो न राज्ये मन आददे ॥ ७८
पातयित्वा वयस्यांश्च भ्रातॄनथ पितामहान् ।
जीवितं यदि रक्षेयं लोको मां गर्हयेदध्रुवम् ॥ ७९
कीदृश तद्भवेद्राज्यं मम हीनस्य बंधुभि. ।
सखिभिश्च सुहृद्भिश्च प्रणिपत्य च पाण्डवम् ॥ ८०
सोऽहमेतादृश कृत्वा जगतोऽस्य पराभवम् ।
सुयुद्धेन ततः स्वर्गं प्राप्स्यामि न तदन्यथा ॥ ८१
एवं दुर्योधनेनोक्ताः सर्वे संपूज्य तद्वच· ।
साधु साध्विति राजानं क्षत्रियाः संबभाषिरे ॥ ८२
पराजयमशोचंतः कृतचित्ताश्च विक्रमे ।
सर्वे विनिश्चिता योद्धुमुदग्रमनसोऽभवन् ॥ ८३
ततो वाहान् समाश्वास्य सर्वे युद्धाभिनन्दिनः ।
ऊने द्वियोजने गत्वा प्रत्यतिष्ठंत कौरवाः ॥ ८४
आकाशे विद्रुमे पुण्ये प्रस्थे हिमवतः शुभे ।
अरुणा सरस्वतीं प्राप्य पपु सस्नुश्च तज्जलम् ॥ ८५
तव पुत्रकृतोत्साहाः पर्यवर्तंत ते ततः ।
पर्यवस्थाप्य चात्मानमन्योन्येन पुनस्तदा ॥ ८६
सर्वे राजन् न्यवर्तंत क्षत्रियाः कालचोदिताः ॥ ८७
अश्व० उ०—अय कुलेन वीर्येण तेजसा यशसा श्रिया ।
सर्वैर्गुणैः समुदितः शल्यो नोऽस्तु चमूपति· ॥ ८८
दु० उ०—सेनापत्येन वरये त्वामहं मातुलाऽतुलम् ।
सोऽस्मान् पाहि युधा श्रेष्ठ स्कंदो देवानिवाहवे ॥ ८९

अभिषिच्यस्व राजेन्द्र देवानामिव पावकिः ।
जहि शत्रून् रणे वीर महेन्द्रो दानवानिव ॥ ९०

श० उ०—उद्यतां पृथिवीं सर्वां ससुरासुरमानवाम् ।
योधयेयं रणमुखे संक्रुद्धः किमु पांडवान् ॥ ९१

विजेष्ये च रणे पार्थान् सोमकांश्च समागतान् ।
अहं सेनाप्रणेता ते भविष्यामि न संशयः ॥ ९२

एवमुक्तस्ततो राजा मद्राधिपतिमंजसा ।
अभ्यषिंचत सेनाया मध्ये भरतसत्तम ॥ ९३

प्रहर्षं प्राप्य सेना तु तावकी भरतर्षभ ।
ता रात्री सुखिनी सुप्ता सुस्थचित्ता च साभवत् ॥ ९४

---

## ३

व्यतीतायां रजन्यां तु राजा दुर्योधनस्तदा ।
अब्रवीत्तावकान् सर्वान् संनह्यंता महारथाः ॥ ९५

ततो बलानि सर्वाणि सेनाशिष्टानि भारत ।
सन्नद्धान्येव ददृशुर्मृत्युं कृत्वा निवर्तनम् ॥ ९६

ततः सर्वे समागम्य पुत्रेण तव सैनिकाः ।
अन्ये च पार्थिवाः शेषाः समयं चक्रिरे तदा ॥ ९७

न तु एकेन योद्धव्य कदाचिदपि पांडवैः ।
अन्योन्य परिरक्षद्भिर्योद्धव्यं सहितैश्च न ॥ ९८

एवं ते समयं कृत्वा सर्वे तत्र महारथाः ।
मद्रराजं पुरस्कृत्य तूर्णमभ्यद्रवन् परान् ॥ ९९

तथैव पांडवा सर्वे व्यूह्य सैन्यं महारणे ।
अभ्ययुः कौरवान् राजन् योत्स्यमानाः समंततः ॥ १००

यावच्चासीद्बलं शिष्टं संग्रामे तन्निबोध मे ।
एकादशसहस्राणि रथाना भरतर्षभ ॥ १०१

दशदंतिसहस्राणि सप्त चैव शतानिच ।
पूर्णे शतसहस्रे द्वे हयानां भरतर्षभ ।
नवकोट्यस्तथा तिस्रो बलमेतत्तवाऽभवत् ॥ १०२

रथानां षट्सहस्राणि षट्सहस्राश्च कुंजराः ॥ १०३

दश चाश्वसहस्राणि पत्तिकोटी च भारत ।
एतद्बलं पांडवानामभवच्छेषमाहवे ॥ १०४
ततः प्रववृते युद्धं कुरूणां भयवर्धनम् ।
सृंजयैः सह राजेन्द्र घोरं देवासुरोपमम् ॥ १०५
संरक्षितो भीमसेनेन राजा माद्रीसुताभ्यामथ माधवेन ।
मद्राधिपं पत्रिभिरुग्रवेगैः स्तनांतरे धर्मसुतो निजघ्ने ॥ १०६
ततो रणे तावकानां रथौघाः समीक्ष्य मद्राधिपतिं शरात्तम् ।
पर्यावव्रुः प्रवरास्ते सुसज्जा दुर्योधनस्यानुमते पुरस्तात् ॥ १०७
स धर्मराजो मणिहेमदंडां जग्राह शक्तिं कनकप्रकाशाम् ।
नेत्रे च दीप्ते सहसा विवृत्य मद्राधिपं क्रुद्धमना निरैक्षत् ॥ १०८
ततस्तु शक्तिं रुचिरोग्रदंडां मणिप्रवेकोज्ज्वलितां सुदीप्ताम् ।
चिक्षेप वेगात्सुभृशं महात्मा मद्राधिपाय प्रवरः कुरूणाम् ॥ १०९
सा तस्य मर्माणि विदार्य शुभ्रमुरो विशालं च तथैव भित्त्वा ।
विवेश गां तोयमिवाप्रसक्ता यशो विशालं नृपतेर्वहंती ॥ ११०
बाहू प्रसार्याभिमुखे धर्मराजस्य मद्रराट् ।
ततो निपीततो भूमाविंद्रध्वज इवोच्छ्रितः ॥ १११
प्रत्युद्गत इव प्रेम्णा भूम्या स नरपुंगवः ।
प्रियया कान्तया कान्तः पतमान इवोरसि ॥ ११२
धर्म्ये धर्मात्मना युद्धे निहतो धर्मसूनुना ।
सम्यग्घुत इव स्विष्टः प्रशांतोऽग्निरिवाध्वरे ॥ ११३
ततः पार्थस्य बाणौघैरावृताः सैनिकास्तव ।
निमीलिताक्षाः क्षिण्वन्तो भृशमन्योन्यमर्दिताः ॥ ११४
नातिदूरापयातं तु कृतबुद्धिं पलायने ।
दुर्योधनः स्वकं सैन्यमब्रवीद्भृशविक्षतम् ॥ ११५
न तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु वा ।
यत्र यातान्न वो हन्युः पांडवाः किं सृतेन वः ॥ ११६
अल्पं च बलमेतेषां कृष्णौ च भृशविक्षतौ ।
यदि सर्वेऽत्र तिष्ठामो ध्रुवं नो विजयो भवेत् ॥ ११७
विप्रयातांस्तु वो भिन्नान् पांडवाः कृतविप्रियाः ।
अनुसृत्य हनिष्यन्ति श्रेयान्नः समरे वधः ॥ ११८

यदा शूरं च भीरुं च मारयत्यतकः सदा ।
को नु मूढो न युध्येत पुरुषः क्षत्रियो ध्रुवम् ॥ ११९
श्रेयो नो भीमसेनस्य क्रुद्धस्याभिमुखे स्थितम् ।
सुखः सांग्रामिको मृत्युः क्षत्रधर्मेण युध्यताम् ॥ १२०
मर्त्येनावश्यमतर्व्यं गृहेष्वपि कदाचन ।
अचिरेणार्जितांल्लोकान् हतो युद्धे समश्नुते ॥ १२१
श्रुत्वा तु वचनं तस्य पूजयित्वा च पार्थिवाः ।
पुनरेवाभ्यवर्तत पाडवानाततायिनः ॥ १२२
संनिवृत्ते बलौघे तु शाल्वो म्लेच्छगणाधिपः ।
अभ्यवर्तत संक्रुद्धः पांडवानां महद्बलम् ॥ १२३
आस्थाय सुमहानागं प्रभिन्नं पर्वतोपमम् ।
दृप्तमैरावतप्रख्यममित्रगणमर्दनम् ॥ १२४
तस्मिंस्तु निहते शूरे शाल्वे समितिशोभने ।
तवाभज्यद्बलं वेगाद्वातेनेव महान् द्रुमः ॥ १२५
तत्प्रभग्नं बलं दृष्ट्वा कृतवर्मा महारथः ।
दधार समरे शूर शत्रुसैन्यं महाबलः ॥ १२६
स युद्धे युयुधानेन हताश्वो हतसारथिः ।
कृतवर्मा कृतास्त्रेण धरणीमन्वपद्यत ॥ १२७
तं चारोप्य रथोपस्थे मिषतां सर्वधन्विनाम् ।
अपोवाह महाबाहुं कृप आयोधनादपि ॥ १२८
पुत्रस्तु ते महाराज रथस्थो रथिना वरः ।
निरुत्साहो बभौ युद्धे यथा रुद्रः प्रतापवान् ॥ १२९
तस्य बाणसहस्रैस्तु प्रच्छन्ना ह्यभवन्मही ।
परांश्च सिषिचे बाणैर्धाराभिरिव पर्वतान् ॥ १३०
ततो गांधारराजस्य पुत्रः शकुनिरब्रवीत् ।
युध्यध्वमग्रतो यावत्पृष्ठतो हन्मि पांडवान् ॥ १३१
अनीकं दशसाहस्रमश्वानां भरतर्षभ ।
आसीद्गांधारराजस्य विशालप्रासयोधिनाम् ॥ १३२
बलेन तेन विक्रम्य वर्तमाने जनक्षये ।
पृष्ठतः पांडवानीकमभ्यघ्नन्निशितैः शरैः ॥ १३३
ततो युधिष्ठिरः प्रेक्ष्य भग्नं स्वबलमतिकात् ।
अभ्यनोदयदव्यग्रः सहदेवं महाबलम् ॥ १३४

असौ सुबलपुत्रो नो जघनं पीड्य संस्थितः ।
गच्छ त्वं द्रौपदेयैश्च शकुनिं सौबलिं जहि ॥ १३५
ततो गजाः सप्तशताश्चापपाणिभिरावृताः ।
पंच चाश्वसहस्राणि सहदेवश्च वीर्यवान् ॥ १३६
पादाताश्च त्रिसाहस्रा द्रौपदेयाश्च सर्वशः ।
रणे त्वभ्यद्रवंस्ते तु शकुनिं युद्धदुर्मदम् ॥ १३७
अश्वारोहास्तु सरब्धा पाडवानां तरस्विनाम् ।
प्राविशन् सौबलानीकमभ्यतिक्रम्य तान् रथान् ॥ १३८
रुधिरोक्षितसर्वांगा विप्रविद्धाश्च पत्रिभिः ।
हयाः परिपतंति स्म शतशोऽथ सहस्रशः ॥ १३९
केशाकेशिसमालग्ना न शेकुश्चेष्टितुं नराः ।
दूरं न शक्यं तत्रासीद्गंतुमश्वेन केनचित् ॥ १४०
साश्वारोहैर्हतैरश्वैरावृते वसुधातले ॥ १४१
स मुहूर्तं ततो युद्ध्वा सौबलोथ विशांपते ।
षट्साहस्रैर्हयैः शिष्टैरुपायाच्छकुनिस्ततः ॥ १४२

४

ततः प्रायाद्रथेनाजौ सव्यसाची परंतप ।
किरञ्शरशतांस्तीक्ष्णान् वारिधारा इवांबुदाः ॥ १४३
सर्वमासीज्जगत्पूर्णं पार्थनामांकितैः शरैः ।
रुक्मपुंखैस्तैलधौतैः कर्मारपरिमार्जितैः ॥ १४४
ततो दुर्योधनो राजा पृष्ठमारुह्य वाजिनः ।
अपक्रामद्धतरथो नातिदूरमरिंदमः ॥ १४५
दृष्ट्वा च हतविक्रांतं स्वमनीकं महाबलः ।
तव पुत्रो महाराज प्रययौ यत्र सौबलः ॥ १४६
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
अपश्यमाना राजानं वर्तमाने जनक्षये ॥ १४७
मन्वाना निहतं तत्र तव पुत्रं महारथम् ।
विवर्णवदना भूत्वा पर्यपृच्छंत ते सुतम् ॥ १४८
आहुः केचिद्धते सूते प्रयातो यत्र सौबलः ।
अपरे त्वब्रुवंस्तत्र क्षत्रिया भृशविक्षताः ।
युध्यध्वं सहिताः सर्वे किं वो राजा करिष्यति ॥ १४९

समत्ये समरे राजन् हतशेषाः सुतास्तव ॥ १५०
अदृश्यमाने कौरव्ये पुत्रे दुर्योधने तव ।
सोदर्याः सहिता भूत्वा भीमसेनमभिद्रवन् ॥ १५१
ते हता न्यपतन् भूमौ स्यंदनेभ्यो महारथाः ।
वसंते पुष्पशबला निकृत्ता इव किंशुकाः ॥ १५२
भीमसेनस्तु कौंतेयो हत्वा युद्धे सुतास्तव ।
मेने कृतार्थमात्मानं सफलं जन्म च प्रभो ॥ १५३
ततो दुर्योधनं दृष्ट्वा वाजिमध्ये व्यवस्थितम् ।
उवाच देवकीपुत्रः कुंतीपुत्रं धनंजयम् ॥ १५४
असौ दुर्योधनः पार्थ वाजिमध्ये व्यवस्थितः ।
छत्रेण ध्रियमाणेन प्रेक्ष्यमाणो मुहुर्मुहुः ॥ १५५
तदनीकं तदा पार्थो व्यधमन्निशितैः शरैः ।
पातयित्वा हयान् सर्वांस्त्रिगर्तांना रथान् ययौ ॥ १५६
तस्मिन् प्रवृत्ते संग्रामे नरवाजिगजक्षये ।
शकुनिः सौबलो राजन् सहदेवं समभ्ययात् ॥ १५७
उलूकश्च रणे भीमं विव्याध दशभिः शरैः ॥ १५८
ततोऽस्यापतत. शूरः सहदेवः प्रतापवान् ।
उलूकस्य महाराज भल्लेनापाहरच्छिरः ॥ १५९
पुत्रं तु निहतं दृष्ट्वा शकुनिस्तत्र भारत ।
साश्रुकंठो विनिश्वस्य क्षत्तुर्वाक्यमनुस्मरन् ।
सहदेवं समासाद्य त्रिभिर्विव्याध सायकैः ॥ १६०
स सौबलमभिद्रुत्य गार्द्धपत्रैः शिलाशितैः ।
भृशमभ्यहनत्क्रुद्धस्तोत्रैरिव महाद्विपम् ॥ १६१
उवाच चैनं मेधावी निगृह्य स्मारयन्निव ।
यत्तदा हृष्यसे मूढ ग्लहन्नक्षैः सभातले ।
फलमद्य प्रपश्यस्व कर्मणस्तस्य दुर्मते ॥ १६२
निहतास्ते दुरात्मानो येऽस्मानवहसन् पुरा ।
दुर्योधनः कुलांगारः शिष्टस्त्वं चास्य मातुलः ॥ १६३
अद्य ते निर्हरिष्यामि क्षुरेणोन्मथितं शिरः ।
वृक्षात्फलमिवाविद्धं लगुडेन प्रमाथिना ॥ १६४

तस्याशुकारी सुसमाहितेन सुवर्णपुंखेन दृढायसेन ।
भल्लेन सर्वावर्णातिगेन शिरः शरीरात्प्रममाथ भूयः ॥ १६५
हृतोत्तमांगं शकुनि समीक्ष्य भूमौ शयानं रुधिरार्द्रगात्रम् ।
योधास्त्वदीया भयनष्टसत्वा दिशः प्रजग्मुः प्रगृहीतशस्त्राः ॥ १६६
विप्रद्रुताः शुष्कमुखा विसंज्ञा गांडीवघोषेण समाहताश्च ।
भयार्दिता भग्नरथाश्वनागाः पदातयश्चैव सधार्तराष्ट्राः ॥ १६७
ततो निःशेषमभवत्तत्सैन्यं तव भारत ।
एको दुर्योधनो राजन्नदृश्यत भृशं क्षतः ॥ १६८
ततो वीक्ष्य दिशः सर्वा दृष्ट्वा शून्यां च मेदिनीम् ।
दुर्योधनो महाराज कश्मलेनाभिसंवृतः ॥ १६९
अपयाने मनश्चक्रे विहीनबलवाहनः ।
हतं स्वहयमुत्सृज्य प्राङ्मुखः प्राद्रवद्रणात् ॥ १७०
एकादशचमूभर्ता पुत्रो दुर्योधनस्तव ।
नातिदूरं ततो गत्वा पद्भ्यामेव नराधिप ।
सस्मार वचनं क्षत्तुर्धर्मशीलस्य धीमतः ॥ १७१
इदं नूनं महाप्राज्ञो विदुरो दृष्टवान् पुरा ।
महद्वैशसमस्माकं क्षत्रियाणां च संयुगे ॥ १७२
क्रोशमात्रमपक्रान्तं गदापाणिमवस्थितम् ।
एवं दुर्योधनं राजन्नपश्यं भृशविक्षतम् ॥ १७३
स तु मामश्रुपूर्णाक्षो नाशक्नोदभिवीक्षितुम् ॥ १७४
तं चाहमपि शोचंतं दृष्ट्वैकाकिनमाहवे ।
मुहूर्तं नाशकद्वक्तुमतिदुःखपरिप्लुतः ॥ १७५
स दीर्घमिव निश्वस्य प्रत्यवेक्ष्य पुनः पुनः ।
असौ मां पाणिना स्पृष्ट्वा पुत्रस्ते पर्यभाषत ॥ १७६
त्वदन्यो नेह संग्रामे कश्चिज्जीवति संजय ।
द्वितीयं नेह पश्यामि ससहायाश्च पांडवाः ॥ १७७
ब्रूयाः संजय राजानं प्रज्ञाचक्षुषमीश्वरम् ।
दुर्योधनस्तव सुतः प्रविष्टो हृदमित्युत ॥ १७८
सुहृद्भिस्तादृशैर्हीनः पुत्रैर्भ्रातृभिरेव च ।
पांडवैश्च हृते राज्ये को नु जीवेत मादृशः ॥ १७९
आचक्षीथाः सर्वमिदं मां च मुक्तं महाहवात् ।
अस्मिंस्तोयहृदे गुप्तं जीवंतं भृशविक्षतम् ॥ १८०

एवमुक्त्वा महाराज प्राविशत्तं महाह्रदम् ।
अस्तंभयत तोयं च मायया मनुजाधिपः ॥ १८१
तस्मिन् ह्रदं प्रविष्टे तु त्रीन् रथान् श्रांतवाहनान् ।
अपश्यं सहितानेकस्तं देशं समुपेयुषः ॥ १८२
अपृच्छंत च मां सर्वे पुत्रं तव जनाधिपम् ।
कच्चिद्दुर्योधनो राजा स नो जीवति संजय ॥ १८३
आख्यातवानहं तेभ्यस्तदा कुशलिनं नृपम् ॥ १८४
अश्वत्थामा तु तद्राजन् निशम्य वचनं मम ।
तं ह्रदं विपुलं प्रेक्ष्य करुणं पर्यदेवयत् ॥ १८५
अहो धिङ् न स जानाति जीवतोऽस्मान्नराधिपः ।
पर्याप्ता हि वयं तेन सह योधयितुं परान् ॥ १८६
ते तु तत्र चिरं कालं विलप्य च महारथाः ।
प्राद्रवन् रथिनां श्रेष्ठा दृष्ट्वा पांडुसुतान् रणे ॥ १८७
ते तु मां रथमारोप्य कृपस्य सुपरिष्कृतम् ।
सेनानिवेशमाजग्मुर्हतशेषास्त्रयो रथाः ॥ १८८
तत्र गुल्माः परित्रस्ताः सूर्ये चास्तमिते सति ।
सर्वे विचुक्रुशुः श्रुत्वा पुत्राणां तव संक्षयम् ॥ १८९
ततस्तु योषितो राजन् क्रंदंत्यो वै मुहुर्मुहुः ।
कुरर्य इव शब्देन नादयंत्यो महीतलम् ॥ १९०
आजघ्नुः करजैश्चापि पाणिभिश्च शिरांस्युत ।
लुलुंचुश्च तदा केशान् क्रोशत्यस्तत्र तत्र ह ।
हाहाकारविनादिन्यो विनिघ्नंत्य उरस्तथा ॥ १९१
ततो दुर्योधनामात्याः साश्रुकंठा भृशातुराः ।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥ १९२
आस्थायाश्वतरीयुक्तान् स्यंदनानपरे जनाः ।
स्वान् स्वान् दारानुपादाय प्रययुर्नगरं प्रति ॥ १९३
अदृष्टपूर्वा या नार्यो भास्करेणापि वेश्मसु ।
ददृशुस्ता महाराज जनयाता पुरं प्रति ॥ १९४
आगोपालाविपालेभ्यो द्रवतो नगरं प्रति ।
ययुर्मनुष्याः संभ्रांता भीमसेनभयार्दिताः ॥ १९५

इति श्रीसंक्षिप्तमहाभारते शल्यपर्व समाप्तम् । श्लो° सं° १९५

---

## ९ शल्यपर्वांतर्गतगदापर्व.

विद्रुते शिबिरे शून्ये भृशोद्विग्नास्त्रयो रथाः ।
स्थानं नारोचयंस्तत्र ततस्ते ह्रदमभ्ययुः ॥ १

युधिष्ठिरोपि धर्मात्मा भ्रातृभिः सहितो रणे ।
हृष्टः पर्यचरद्राजन् दुर्योधनवधेप्सया ॥ २

मार्गमाणास्तु संक्रुद्धास्तव पुत्रजयैषिणः ।
यत्नतोऽन्वेषमाणास्तु नैवापश्यञ् जनाधिपम् ॥ ३

यदा तु पाडवाः सर्वे सुपरिश्रांतवाहनाः ।
ततः स्वशिबिरं प्राप्य व्यतिष्ठंत ससैनिकाः ॥ ४

ततः कृपश्च द्रौणिश्च कृतवर्मा च सात्वतः ।
सन्निविष्टेषु पार्थेषु प्रयातास्तं ह्रदं शनैः ॥ ५

ते तं ह्रदं समासाद्य यत्र शेते जनाधिपः ।
अभ्यभाषंत दुर्धर्षं राजानं सुप्तमंभसि ॥ ६

राजन्नुत्तिष्ठ युध्यस्व सहास्माभिर्युधिष्ठिरम् ।
जित्वा वा पृथिवीं भुंक्ष्व हतो वा स्वर्गमाप्नुहि ॥ ७

तेषामपि बलं सर्वं हतं दुर्योधन त्वया ॥ ८

द० उ०—दिष्ट्या पश्यामि वो मुक्तानीदृशात्पुरुषक्षयात् ।
पांडुकौरवसंमर्दाज्जीवमानान्नरर्षभान् ॥ ९

भवंतश्च परिश्राता वयं च भृशविक्षताः ।
उदीर्णं च बलं तेषां तेन युद्धं न रोचये ॥ १०

न त्वेतदद्भुत वीरा यद्वो महदिदं मनः ।
अस्मासु च परा भक्तिर्न तु कालः पराक्रमे ॥ ११

विश्रम्यैकां निशामद्य भवद्भिः सहितो रणे ।
प्रतियात्स्याम्यहं शत्रूञ् श्वो न मेस्त्यत्र संशयः ॥ १२

तेषु संभाषमाणेषु व्याधास्तं देशमाययुः ।
मासभारपरिश्रान्ताः पानीयार्थं यदृच्छया ॥ १३

ते हि नित्यं महाराज भीमसेनस्य लुब्धकाः ।
मांसभारानुपाजह्रुर्भक्त्या परमया विभो ॥ १४

ते तत्राधिष्ठितास्तेषां सर्वं तद्वचनं रहः ।
दुर्योधनवचश्चैव शुश्रुवुः संगता मिथः ॥ १५

ते तु पांडवमासाद्य भीमसेनं महाबलम् ।
तस्मै तत्सर्वमाचख्युर्यद्वृत्तं यच्च वै श्रुतम् ॥ १६

ततो वृकोदरो राजन् दत्वा तेषां धनं बहु ।
धर्मराजाय तत्सर्वमाचचक्षे परंतपः ॥ १७

सिंहनादांस्ततश्चक्रुः क्ष्वेडाश्च भरतर्षभ ।
त्वरिताः क्षत्रिया राजञ्जग्मुर्द्वैपायनं ह्रदम् ॥ १८

यौधिष्ठिरस्य सैन्यस्य श्रुत्वा शब्दं महारथाः ।
कृतवर्मा कृपो द्रौणी राजानमिदमब्रुवन् ॥ १९

इमे ह्यायांति संहृष्टाः पांडवा जितकाशिनः ।
अपयास्यामहे तावदनुजानातु नो भवान् ॥ २०

ते त्वनुज्ञाप्य राजानं भृशं शोकपरायणाः ।
जग्मुर्दूरे महाराज कृपप्रभृतयो रथाः ॥ २१

ते गत्वा दूरमध्वानं न्यग्रोधं प्रेक्ष्य मारिष ।
न्यविशंत भृशं श्रांताश्चिंतयंतो नृपं प्रति ॥ २२

जलस्थं तं महाराज तव पुत्रं महाबलम् ।
अभ्यभाषत कौंतेयः प्रसहन्निव भारत ॥ २३

सुयोधन किमर्थोऽयमारंभोऽप्सु कृतस्त्वया ।
सर्वं क्षत्रं घातयित्वा स्वकुलं च विशांपते ॥ २४

स ते दर्पो नरश्रेष्ठ स च मानः क्व ते गतः ।
यस्त्वं संस्तभ्य सलिलं भीतो राजन् व्यवस्थितः ॥ २५

उत्तिष्ठ राजन् युध्यस्व क्षत्रियोऽसि कुलोद्भवः ।
कौरवेयो विशेषेण कुलं जन्म च संस्मर ॥ २६

कथं पारमगत्वा हि युद्धे त्वं वै जिजीविषुः । २७
यत्तु कर्णमुपाश्रित्य शकुनिं चापि सौबलम् ।
अमर्त्य इव संमोहात्त्वमात्मानं न बुद्धवान् ।
तत्पापं सुमहत्कृत्वा प्रतियुध्यस्व भारत ॥ २८

दु० उ०—नैतच्चित्रं महाबाहो यद्भीः प्राणिनमाविशेत् ।
न च प्राणभयाद्भीतो व्यपयातोऽस्मि भारत ॥ २९

अरथश्चानिषंगी च निहतः पार्ष्णिसारथिः ।
एकश्चाप्यगणः संख्ये प्रत्याश्वासमरोचयम् ॥ ३०

त्वं चाश्वसिहि कौंतेय ये चाप्यनुगतास्तव ।
अहमुत्थाय वः सर्वान् प्रतियोत्स्यामि संयुगे ॥ ३१

यु० उ०—आश्वस्ता एव सर्वे स्म चिरं त्वां मृगयामहे ।
तदिदानीं समुत्तिष्ठ युध्यस्वेह सुयोधन ॥ ३२

हत्वा वा समरे पार्थान् स्फीतं राज्यमवाप्नुहि ।
निहतो वा रणेऽस्माभिर्वीरलोकमवाप्स्यसि ॥ ३३

दु० उ०—यदर्थं राज्यमिच्छामि कुरूणां कुरुनंदन ।
त इमे निहताः सर्वे भ्रातरो मे जनेश्वर ॥ ३४

क्षीणरत्नां च पृथिवीं हतक्षत्रियपुंगवाम् ।
नाभ्युत्सहाम्यहं भोक्तुं विधवामिव योषितम् ॥ ३५

अद्यापि त्वहमाशंसे त्वां विजेतुं युधिष्ठिर ।
भङ्क्त्वा पांचालपांडूनामुत्साहं भरतर्षभ ॥ ३६

न त्विदानीमहं मन्ये कार्यं युद्धेन कर्हिचित् ।
द्रोणे कर्णे च संशांते निहते च पितामहे ॥ ३७

हतबांधवभूयिष्ठा हताश्वा हतकुंजरा ।
एषा ते पृथिवी राजन् भुंक्ष्वैनां विगतज्वरः ॥ ३८

वनमेव गमिष्यामि वसानो मृगचर्मणी ।
न हि मे दुर्जनस्यास्ति जीवितेऽद्य स्पृहा विभो ॥ ३९

यु० उ०—आर्तप्रलापान् मा तात सलिलस्थः प्रभाषिथाः ।
यदि वापि समर्थः स्यास्त्वं दानाय सुयोधन ॥ ४०

नाहमिच्छेयमवनीं त्वया दत्तां प्रशासितुम् ।
त्वां तु युद्धे विनिर्जित्य भोक्तास्मि वसुधामिमाम् ॥ ४१

अनीश्वरश्च पृथिवीं कथं त्वं दातुमिच्छसि ।
त्वयेयं पृथिवी राजन् किं न दत्ता तदैव हि ।
धर्मतो याचमानानां शमार्थं च कुलस्य नः ॥ ४२

वार्ष्णेयं प्रथमं राजन् प्रत्याख्याय महाबलम् ।
किमिदानीं ददासि त्वं को हि ते चित्तविभ्रमः ॥ ४३

सूच्यग्रं नात्यजः पूर्वं स कथं त्यजसि क्षितिम् ।
को हि मूढो व्यवस्येत शत्रोर्दातुं वसुंधराम् ॥ ४४

# २

पृथिवीं दातुकामोऽपि जीविते न विमोक्ष्यसे ।
अस्मान् वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथवा निहतोऽस्माभिर्व्रज लोकाननुत्तमान् ॥ ४५
आवयोर्जीवतो राजन् मयि च त्वयिच ध्रुवम् ।
संशयः सर्वभूतानां विजये नो भविष्यति ॥ ४६
उत्तिष्ठोत्तिष्ठ युध्यस्व ततः श्रेयो भविष्यति ।
एवं तु विविधा वाचो जययुक्ताः पुनः पुनः ।
कीर्तयंति स्म ते वीरास्तत्र तत्र जनाधिप ॥ ४७
श्रुत्वा स कटुका वाचो विषमस्थो जनाधिपः ।
सलिलान्निर्गतो राजा धुन्वन् हस्तौ पुनः पुनः ॥ ४८
मनश्चकार युद्धाय राजानं चाभ्यभाषत ।
यूयं ससुहृदः पार्थाः सर्वे सरथवाहनाः ।
अहमेकः परिद्यूनो विरथो हतवाहनः ॥ ४९
आत्तशस्त्रै रथगतैर्बहुभिः परिवारितः ।
कथमेकः पदातिः सन्नशस्त्रो योद्धुमुत्सहे ॥ ५०
एकैकेन तु मां यूयं योधयध्वं युधिष्ठिर ।
नह्येको बहुभिर्वीरैर्न्याय्यो योधयितुं युधि ॥ ५१
यु० उ०—दिष्ट्या त्वमपि जानीषे क्षत्रधर्मं सुयोधन ।
दिष्ट्या ते वर्तते बुद्धिर्युद्धायैव महाभुज ॥ ५२
एक एकेन संगम्य यत्ते संमतमायुधम् ।
तत्त्वमादाय युध्यस्व प्रेक्षकास्ते वयं स्थिताः ॥ ५३
अयमिष्टं च ते कामं वीर भूयो ददाम्यहम् ।
हत्वैकं भवतो राज्यं हतो वा स्वर्गमाप्नुहि ॥ ५४
दु० उ०—हंतैकं भवतामेकः शक्यं मा योऽभिमन्यते ।
पदातिर्गदया संख्ये स युध्यतु मया सह ॥ ५५
वृत्तानि रथयुद्धानि विचित्राणि पदे पदे ।
इदमेकं गदायुद्धं भवत्वद्याद्भुतं महत् ॥ ५६
एवं दुर्योधने राजन् गर्जमाने मुहुर्मुहुः ।
युधिष्ठिरस्य संक्रुद्धो वासुदेवोऽब्रवीदिदम् ॥ ५७

यदि नाम ह्ययं युद्धे वरयेत्त्वां युधिष्ठिर ।
अर्जुनं नकुलं चैव सहदेवमथापि वा ॥ ५८
किमिदं साहसं राजंस्त्वया व्याहृतमीदृशम् ।
एकमेव निहत्याजौ भव राजा कुरुष्विति ॥ ५९
न समर्थानहं मन्ये गदाहस्तस्य संयुगे ॥ ६०
एतेन हि कृता योग्या वर्षाणीह त्रयोदश ।
आयसे पुरुषे राजन् भीमसेनजिघांसया ॥ ६१
नान्यमस्यानुपश्यामि प्रतियोद्धारमाहवे ।
ऋते वृकोदरात्पार्थात्स च नातिकृतश्रमः ॥ ६२
तदिदं द्यूतमारब्धं पुनरेव यथा पुरा ।
न्यस्तश्चात्मा सुविषमे कृच्छ्रमापादिता वयम् ॥ ६३
नूनं न राज्यभागेषा पांडोः कुंत्याश्च संततिः ।
अत्यंतवनवासाय सृष्टा भैक्ष्याय वा पुनः ॥ ६४
भी० उ०—मधुसूदन मा कार्षीर्विषादं यदुनंदन ।
अद्य पारं गमिष्यामि वैरस्य भृशदुर्गमम् ॥ ६५
अहं दुर्योधनं संख्ये हनिष्यामि न संशयः ।
विजयो वै ध्रुवः कृष्ण धर्मराजस्य दृश्यते ॥ ६६
अध्यर्धेन गुणेनेयं गदा गुरुतरा मम ।
न तथा धार्तराष्ट्रस्य मा कार्षीर्माधव व्यथाम् ॥ ६७
अहमेतं हि गदया संयुगे योद्धुमुत्सहे ।
भवंतः प्रेक्षकाः सर्वे मम संतु जनार्दन ॥ ६८
ततश्च सात्यकी राजन् पूजयामास पांडवम् ।
पांचालाः पांडवेयाश्च धर्मराजपुरोगमाः ॥ ६९

---

## ३

ततस्तालध्वजो रामस्तयोर्युद्ध उपस्थिते ।
श्रुत्वा तच्छिष्ययो राजन्नाजगाम हलायुधः ॥ ७०
तं दृष्ट्वा परमप्रीताः पांडवाः सहकेशवाः ।
उपगम्योपसंगृह्य विधिवत्प्रत्यपूजयन् ॥ ७१
पूजयित्वा ततः पश्चादिदं वचनमब्रुवन् ।
शिष्ययोः कौशलं युद्धे पश्य रामेति पार्थिव ॥ ७२

अब्रवीच्च तदा रामो दृष्ट्वा कृष्णं सपांडवम् ।
दुर्योधनं च कौरव्यं गदापाणिमवस्थितम् ॥ ७३
चत्वारिंशदहान्यद्य द्वे च मे निःसृतस्य वै ।
पुष्येण संप्रयातोऽस्मि श्रवणे पुनरागतः ॥ ७४
भीमसेनोऽथ बलवान् पुत्रस्तव जनाधिप ।
तथैव चोद्यतगदौ पूजयामासतुर्बलम् ॥ ७५
परिष्वज्य तदा रामः पांडवान् सृंजयानपि ।
अपृच्छत्कुशलं सर्वान् पार्थिवाश्चामितौजसः ॥ ७६
ततस्तयोः संनिपातस्तुमुलो लोमहर्षणः ।
आसीदंतकरो राजन् वैरस्य तव पुत्रयोः ॥ ७७
समापेततुरन्योन्यं शृंगिणौ वृषभाविव ।
महानिर्घातघोषश्च प्रहाराणामजायत ॥ ७८
तथा तस्मिन् महायुद्धे वर्तमाने सुदारुणे ।
खद्योतसंघैरिव खं दर्शनीयं व्यरोचत ॥ ७९
तौ मुहूर्तं समाश्वस्य पुनरेव परंतपौ ।
अभ्यहारयतान्योन्यं संप्रगृह्य गदे शुभे ॥ ८०
चरंश्च विविधान् मार्गान् मंडलानि च भारत ।
अशोभत तदा वीरो भूय एव वृकोदरः ॥ ८१
तौ परस्परमासाद्य मत्तावन्योन्यरक्षणे ।
मार्जाराविव भक्षार्थे ततक्षाते मुहुर्मुहुः ॥ ८२
स सव्यं मंडलं राजा उद्भ्राम्य कृतनिश्चयः ।
आजघ्ने मूर्ध्नि कौंतेयं गदया भीमवेगया ॥ ८३
तया त्वभिहतो भीमः पुत्रेण तव पांडवः ।
नाकंपत महाराज तदद्भुतमिवाभवत् ॥ ८४
ततो गुरुतरां दीप्तां गदां हेमपरिष्कृताम् ।
दुर्योधनाय व्यसृजद्भीमो भीमपराक्रमः ॥ ८५
तं प्रहारमसंभ्रांतो लाघवेन महाबलः ।
मोघं दुर्योधनश्चक्रे तत्राभूद्विस्मयो महान् ॥ ८६
वंचयित्वा तथा भीमं गदया कुरुसत्तमः ।
ताडयामास संक्रुद्धो वक्षोदेशे महाबलः ॥ ८७

गदया निहतो भीमो मुह्यमानो महारणे ।
नाभ्यमन्यत कर्तव्यं पुत्रेणाभ्याहतस्तव ॥ ८८
ततस्तु तरसा भीमो गदया तनयं तव ।
अभिदुद्राव वेगेन सिंहो वनगजं यथा ॥ ८९
उपसृत्य तु राजानं गदामोक्षविशारदः ।
अताडयद्भीमसेनः पार्श्वे दुर्योधनं तदा ॥ ९०
स विह्वलः प्रहारेण जानुभ्यामगमन्महीम् ।
उदतिष्ठत्ततो नादः सृंजयानां जगत्पते ॥ ९१
उत्थाय तु महाबाहुर्महानाग इव श्वसन् ।
दिधक्षन्निव नेत्राभ्यां भीमसेनमवैक्षत ॥ ९२
स महात्मा महात्मानं भीमं भीमपराक्रमः ।
अताडयच्छंखदेशे न चचालाचलोपमः ॥ ९३
स भूयः शुशुभे पार्थस्ताडितो गदया रणे ।
उद्भिन्नरुधिरो राजन् प्रभिन्न इव कुंजरः ॥ ९४

अ० उ०—अनयोर्वीरयोर्युद्धे को ज्यायान् भवतो मतः ।
कस्य वा को गुणो भूयानेतद्वद जनार्दन ॥ ९५

कृ० उ०—उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः ।
कृती यत्नपरस्त्वेष धार्तराष्ट्रो वृकोदरात् ॥ ९६
भीमसेनस्तु धर्मेण युध्यमानो न जेष्यति ।
अन्यायेन तु युध्यन् वै हन्यादेव सुयोधनम् ॥ ९७
मायया निर्जिता देवैरसुरा इति नः श्रुतम् ।
तस्मान्मायामयं भीम आतिष्ठतु पराक्रमम् ॥ ९८
प्रतिज्ञातं तु भीमेन द्यूतकाले धनंजय ।
ऊरू भेत्स्यामि ते संख्ये गदयेति सुयोधनम् ॥ ९९
सोऽयं प्रतिज्ञां तां चापि पालयत्वरिकर्षणः ।
मायाविनं तु राजानं माययैव निकृंततु ॥ १००
यद्येष बलमास्थाय न्यायेन प्रहरिष्यति ।
विषमस्थस्ततो राजा भविष्यति युधिष्ठिरः ॥ १०१
धर्मराजापराधेन भयं नः पुनरागतम् ।
अबुद्धिरेषा महती धर्मराजस्य पांडव ।
यदेकं विजये युद्धं पणितं घोरमीदृशम् ॥ १०२

सुयोधनः कृती वीर एकायनगतस्तथा ॥ १०३
अपि चोशनसा गीतः श्रूयतेऽयं पुरातनः ।
श्लोकस्तत्त्वार्थसहितस्तन्मे निगदतः शृणु ॥ १०४
पुनरावर्तमानानां भग्नानां जीवितैषिणाम् ।
भेतव्यमविशेषाणामेकायनगता हि ते ॥ १०५
सहसोत्पतितानां च निराशानां च जीविते ।
न शक्यमग्रतः स्थातुं शक्रेणापि धनंजय ॥ १०६
सुयोधनमिमं भग्नं हतसैन्यं ह्रदं गतम् ।
पराजितं वनप्रेप्सुं निराशं राज्यलंभने ॥ १०७
को न्वेष संयुगे प्राज्ञः पुनर्द्वंद्वं समाह्वयेत् ।
अपि नो निर्जितं राज्यं न हरेत सुयोधनः ॥ १०८
यस्त्रयोदश वर्षाणि गदया कृतनिश्चयः ।
चरत्यूर्ध्वं च तिर्यक्च भीमसेनजिघांसया ॥ १०९
धनंजयस्तु श्रुत्वैतत्केशवस्य महात्मनः ।
प्रेक्षतो भीमसेनस्य सव्यमूरुमताडयत् ॥ ११०
गृह्य संज्ञां ततो भीमो गदया व्यचरद्रणे ।
मंडलानि विचित्राणि यमकानीतराणि च ॥ १११
ततो मुहूर्तमाश्वस्य दुर्योधनमुपस्थितम् ।
वेगेनाभ्यपतद्राजन् भीमसेनः प्रतापवान् ॥ ११२
तमापतंतं संप्रेक्ष्य संरब्धममितौजसम् ।
मोघमस्य प्रहारं तं चिकीर्षुर्भरतर्षभ ॥ ११३
अवस्थाने मतिं कृत्वा पुत्रस्तव महामनाः ।
इयेषोत्पतितुं राजंश्छलयिष्यन् वृकोदरम् ॥ ११४
अबुध्यद्भीमसेनस्तद्राजंस्तस्य चिकीर्षितम् ॥ ११५
अथास्य समभिद्रुत्य समुत्क्रुश्य च सिंहवत् ।
ऊरुभ्यां प्राहिणोद्राजन् गदां वेगेन पांडवः ॥ ११६
सा वज्रनिष्पेषसमा प्रहिता भीमकर्मणा ।
ऊरू दुर्योधनस्याथ बभंज प्रियदर्शनौ ॥ ११७
स पपात नरव्याघ्रो वसुधामनुनादयन् ।
चचाल पृथिवी चापि सवृक्षवनपर्वता ॥ ११८

पपात चोल्का महती पतिते पृथिवीपतौ ।
जज्ञे घोरतरः शब्दो बहूनां सर्वतोदिशम् ॥ ११९
ये तत्र वाजिनः शेषा गजाश्च मनुजैः सह ।
मुमुचुस्ते महानादं तव पुत्रे निपातिते ॥ १२०
दृष्ट्वा तानद्भुतोत्पातान् पांचालाः पांडवैः सह ।
आविग्नमनसः सर्वे बभूवुर्भरतर्षभ ॥ १२१

---

## ४

ततो दुर्योधनं हत्वा भीमसेनः प्रतापवान् ।
पातितं कौरवेंद्रं तमुपगम्येदमब्रवीत् ॥ १२२
गौर्गौरिति पुरा मंद द्रौपदीमेकवाससम् ।
यत्सभायां हसन्नस्मांस्तदा वदसि दुर्मते ।
तस्यावहासस्य फलमद्य त्वं समवाप्नुहि ॥ १२३
एवमुक्त्वा स वामेन पदा मौलिमुपास्पृशत् ।
शिरश्च राजसिंहस्य पादेन समलोडयत् ॥ १२४
तव पुत्रं तथा हत्वा कत्थमानं वृकोदरम् ।
नृत्यमानं च बहुशो धर्मराजोऽब्रवीदिदम् ॥ १२५
गतोऽसि वैरस्यानृण्यं प्रतिज्ञा पूरिता त्वया ।
शुभेनैवाशुभेनाथ कर्मणा वीरमाधुना ॥ १२६
मा शिरोऽस्य पदा मर्दीर्मा धर्मस्तेऽतिगो भवेत् ।
मा स्प्राक्षीर्भीम पादेन राजानं ज्ञातिमेव च ॥ १२७
हतबंधुर्हतामात्यो भ्रष्टसैन्यो हतो मृधे ।
सर्वाकारेण शोच्योऽयं नावहास्योऽयमीश्वरः ॥ १२८
इत्युक्त्वा भीमसेनं तु साश्रुकंठो युधिष्ठिरः ।
उपसृत्याब्रवीद्दीनो दुर्योधनमरिंदमम् ॥ १२९
तात मन्युर्न ते कार्यो नात्मा शोच्यस्त्वया तथा ।
नूनं पूर्वकृतं कर्म सुघोरमनुभूयते ॥ १३०
धात्रोपदिष्टं विषमं नूनं फलमसंस्कृतम् ।
यद्वयं त्वां जिघांसामस्त्वं चास्मान् कुरुसत्तम ॥ १३१
तवापराधादस्माभिर्भ्रातरस्ते निपातिताः ।
निहता ज्ञातयश्चापि दिष्टं मन्ये दुरत्ययम् ॥ १३२

आत्मा न शोचनीयस्ते श्लाघ्यो मृत्युस्तवानघ ।
वयमेवाधुना शोच्याः सर्वावस्थासु कौरव ॥ १३३
कथं द्रक्ष्यामि विधवा वधूः शोकपरिप्लुताः ।
त्वमेकः प्रस्थितो राजन् स्वर्गे ते निलयो ध्रुवः ॥ १३४
वयं नरकसंज्ञा वै दुःखं प्राप्स्याम दारुणम् ॥ १३५
ततो मध्ये नरेन्द्राणामूर्ध्वबाहुर्हलायुधः ।
कुर्वन्नार्तस्वरं घोरं धिग्धिग्भीमेत्युवाच ह ॥ १३६
अहो धिग्यदधो नाभेः प्रहृतं धर्मविग्रहे ।
नैतद्दृष्टं गदायुद्धे कृतवान् यद्वृकोदरः ॥ १३७
तस्य तत्तद्ब्रुवाणस्य रोषः समभवन्महान् ।
ततो लांगलमुद्यम्य भीममभ्यद्रवद्बली ॥ १३८
तमुत्पतंतं जग्राह केशवो विनयान्वितः ।
बाहुभ्यां पीनवृत्ताभ्यां प्रयत्नाद्बलवद्बली ॥ १३९
सिताऽसितौ यदुवरौ शुशुभातेऽधिकं तदा ।
नभोगतौ यथा राजंश्चंद्रसूर्यौ दिनक्षये ॥ १४०
उवाच चैनं संरब्धं शमयन्निव केशवः ।
आत्मवृद्धिर्मित्रवृद्धिर्मित्रमित्रोदयस्तथा ।
विपरीतं द्विषत्स्वेतत् षड्विधा वृद्धिरात्मनः ॥ १४१
अस्माकं सहजं मित्रं पांडवाः शुद्धपौरुषाः ।
स्वकाः पितृष्वसुः पुत्रास्ते परैर्निकृता भृशम् ॥ १४२
प्रतिज्ञापालनं धर्मः क्षत्रियस्येह विद्महे ।
सुयोधनस्य गदया भंक्तास्म्यूरू महाहवे ॥ १४३
इति पूर्वं प्रतिज्ञातं भीमेन हि सभातले ।
अतो दोषं न पश्यामि मा क्रुधास्त्वं प्रलंबहन् ॥ १४४
योनैः स्वैस्त्वथ सौहार्दैः संबंधः सह पांडवैः ॥ १४५
प्राप्तं कलियुगं विद्धि प्रतिज्ञा पांडवस्य च ।
आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पांडवः ॥ १४६
धर्मच्छलमपि श्रुत्वा केशवात्स विशांपते ।
नैव प्रीतमना रामो वचनं प्राह संसदि ॥ १४७
हत्वाऽधर्मेण राजानं धर्मात्मानं सुयोधनम् ।
जिह्मयोधीति लोकेऽस्मिन् ख्यातिं यास्यति पांडवः ॥ १४८

दुर्योधनोऽपि धर्मात्मा गतिं यास्यति शाश्वतीम् ।
ऋजुयोधी हतो राजा धार्तराष्ट्रो जनाधिपः ॥ १४९
युद्धदीक्षां प्रविश्याजौ रणयज्ञं वितत्य च ।
हुत्वात्मानममित्राग्नौ प्राप चावभृथं यशः ॥ १५०
इत्युक्त्वा रथमास्थाय रौहिणेयः प्रतापवान् ।
श्वेताभ्रशिखराकारः प्रययौ द्वारकां प्रति ॥ १५१
ततो युधिष्ठिरं दीनं चिंतापरमधोमुखम् ।
शोकोपहतसकल्पं वासुदेवोऽब्रवीदिदम् ॥ १५२
धर्मराज किमर्थं त्वमधर्ममनुमन्यसे ।
दुर्योधनस्य भीमेन मृद्यमानं शिरः पदा ।
उपप्रेक्षसि कस्मात्त्वं धर्मज्ञः सन्नराधिप ॥ १५३
य० उ०—न ममैतात्प्रियं कृष्ण यद्राजान वृकोदरः ।
पदा मूर्ध्न्यस्पृशत् क्रोधान्न च हृष्ये कुलक्षये ॥ १५४
निकृत्या निकृता नित्यं धृतराष्ट्रसुतैर्वयम् ।
बहूनि परुषाण्युक्त्वा वनं प्रस्थापिताः स्म ह ॥ १५५
भीमसेनस्य तद्दुःखमतीव हृदि वर्तते ।
इति संचित्य वार्ष्णेय मयैतत्समुपेक्षितम् ॥ १५६
गतो वैरस्य निधन हतो राजा सुयोधनः ।
कृष्णस्य मतमास्थाय विजितेयं वसुंधरा ॥ १५७
ततस्ते प्रययुः सर्वे निवासाय महीक्षितः ।
शंखान् प्राध्मापयंतो वै हृष्टाः परिघबाहवः ॥ १५८
ततस्ते प्राविशन् पार्था हतत्विट्कं हतेश्वरम् ।
दुर्योधनस्य शिबिरं रंगवद्विसृते जने ॥ १५९
गतोत्सवं पुरमिव हतनागमिव ह्रदम् ।
स्त्रीवर्षवरभूयिष्ठं वृद्धामात्यैरधिष्ठितम् ॥ १६०
प्रविश्य प्रत्यपद्यंत कोशरत्नर्द्धिसंचयान् ।
रजतं जातरूपं च मणीनथ च मौक्तिकान् ॥ १६१
अथाब्रवीन्महाराज वासुदेवो महायशाः ।
अस्माभिर्मंगलार्थाय वस्तव्यं शिबिराद्बहिः ॥ १६२
तथेत्युक्त्वा हि सर्वे ते पांडवाः सात्यकिस्तथा ।
वासुदेवेन सहिता मंगलार्थं बहिर्ययुः ॥ १६३

# ५

संज० उ०—भग्नसक्थो नृपो राजन् पांसुना सोऽवगुंठित ।
यमयन्मूर्धजांस्तत्र विक्ष्य चैव दिशो दश ॥ १६४
संरंभाश्रुपरीताभ्यां नेत्राभ्याममिवीक्ष्य माम् ।
गर्हयन पांडवश्रेष्ठं निश्वस्येदमथाब्रवीत् ॥ १६५
भीष्मे शांतनवे नाथे कर्णे शस्त्रभृतां वरे ।
गौतमे शकुनौ चापि द्रोणे चास्त्रभृता वरे ॥ १६६
इमामवस्थां प्राप्तोऽस्मि कालो हि दुरतिक्रमः ।
एकादशचमूभर्ता सोहमेतां दशां गतः ॥ १६७
आख्यातव्यं मदीयानां यऽस्मिञ् जीवंति सयुगे ।
यथाऽहं भीमसेनेन व्युत्क्रम्य समयं हतः ॥ १६८
इदं चाकीर्तिजं कर्म नृशंसैः पांडवैः कृतम् ।
येन ते सत्सु निर्वेदं गमिष्यंति हि मे मतिः ॥ १६९
तौ हि संजय दुःखार्तौ विज्ञाप्यौ वचनाद्धि मे ॥ १७०
इष्टं भृत्या भृताः सम्यग् भूः प्रशास्ता ससागरा ।
मूर्ध्नि स्थितममित्राणां जीवतामेव संजय ॥ १७१
दत्ता दाया यथाशक्ति मित्राणां च प्रियं कृतम् ।
अमित्रा बाधिताः सर्वे को नु स्वततरो मया ॥ १७२
अधीतं विधिवद्दत्तं प्राप्तमायुर्निरामयम् ।
स्वधर्मेणार्जिता लोकाः को नु स्वंततरो मया ॥ १७३
दिष्ट्या नाहं जितः संख्ये परान् प्रेष्यवदाश्रितः ।
दिष्ट्या मे विपुला लक्ष्मीर्मृते त्वन्यगता प्रभो ॥ १७४
यदिष्टं क्षत्रबंधूनां स्वधर्ममनुतिष्ठताम् ।
निधनं तन्मया प्राप्तं को नु स्वंततरो मया ॥ १७५
अश्वत्थामा महाभागः कृतवर्मा च सात्वतः ।
कृपः शारद्वतश्चैव वक्तव्या वचनान्मम ॥ १७६
अधर्मेण प्रवृत्तानां पांडवानामनेकशः ।
विश्वासं समयघ्नानां न यूयं गंतुमर्हथ ॥ १७७
अधर्माद्भीमसेनेन निहतोऽहं यथा रणे ।
सोऽहं द्रोणं स्वर्गगतं कर्णशल्यावुभौ तथा ॥ १७८

वृषसेनं महात्मानं शकुनिं चापि सौबलम् ।
सोमदत्तं महेष्वासं सैंधवं च जयद्रथम् ॥ १७९
दुःशासनपुरोगांश्च भ्रातॄनात्मसमांस्तथा ।
पृष्ठतोऽनुगमिष्यामि सार्थहीनो यथाध्वगः ॥ १८०
कथं भ्रातॄन् हताञ्श्रुत्वा भर्तारं च स्वसा मम ।
रोरूयमाणा दुःखार्ता दुःशला सा भविष्यति ॥ १८१
स्नुषाभिः प्रस्नुषाभिश्च वृद्धो राजा पिता मम ।
गांधारीसहितश्चैव कां गतिं प्रतिपत्स्याति ॥ १८२
नूनं लक्ष्मणमातापि हतपुत्रा हतेश्वरा ।
विनाशं यास्यति क्षिप्रं कल्याणी पृथुलोचना ॥ १८३
ततो जनसहस्राणि बाष्पपूर्णानि मारिष ।
प्रलापं नृपतेः श्रुत्वा व्यद्रवंत दिशो दश ॥ १८४
वार्तिकानां सकाशात्तु श्रुत्वा दुर्योधनं हतम् ।
हतशिष्टास्त्रयो राजन् कौरवाणां महारथाः ।
त्वरिता जवनैरश्वैरायोधनमुपागमन् ॥ १८५
तत्रापश्यन्महात्मानं धार्तराष्ट्रं निपातितम् ।
प्रभग्नं वायुवेगेन महाशालं यथा वने ॥ १८६
भूमौ विचेष्टमानं तं रुधिरेण समुक्षितम् ।
महागजमिवारण्ये व्याधेन विनिपातितम् ॥ १८७
भ्रुकुटीकृतवक्त्रांतं क्रोधादुद्वृत्तचक्षुषम् ।
सामर्षं तं नरव्याघ्र व्याघ्रं निपतितं यथा ॥ १८८
ते तं दृष्ट्वा महेष्वासं भूतले पतितं नृपम् ।
मोहमभ्यागमन् सर्वे कृपप्रभृतयो रथाः ॥ १८९
अवतीर्य रथेभ्यश्च प्राद्रवन् राजसन्निधौ ।
दुर्योधनं च संप्रेक्ष्य सर्वे भूमावुपाविशन् ॥ १९०
ततो द्रौणिर्महाराज बाष्पपूर्णेक्षणः श्वसन् ।
उवाच भरतश्रेष्ठं सर्वलोकेश्वरेश्वरम् ॥ १९१
न नूनं विद्यते सत्यं मानुषे किंचिदेव हि ।
यत्र त्वं पुरुषव्याघ्र शेषे पांसुषु रूषितः ॥ १९२
क्व ते तदमलं छत्रं व्यजनं क्व च पार्थिव ।
सा च ते महती सेना क्व गता पार्थिवोत्तम ॥ १९३

अध्रुवा सर्वमर्त्येषु ध्रुवं श्रीरुपलक्ष्यते ।
भवतो व्यसनं दृष्ट्वा शक्रविस्पर्धिनो भृशम् ॥ १९४
तस्य तद्वचनं श्रुत्वा दुःखितस्य विशेषतः ।
उवाच राजन् पुत्रस्ते प्राप्तकालमिदं वचः ।
विमृज्य नेत्रे पाणिभ्यां शोकजं बाष्पमुत्सृजन् ॥ १९५
ईदृशो लोकधर्मोऽयं धात्रा निर्दिष्टमुच्यते ।
विनाशः सर्वभूताना कालपर्यायमागतः ॥ १९६
सोऽयं मां समनुप्राप्तः प्रत्यक्षं भवतां हि यः ।
पृथिवीं पालयित्वाहमेतां निष्ठामुपागतः ॥ १९७
दिष्ट्या नाहं परावृत्तो युद्धे कस्यांचिदापदि ।
दिष्ट्याहं निहतः पापैश्छलेनैव विशेषतः ॥ १९८
मा भवंतोऽत्र तप्यतां सौहृदान्निधनेन मे ।
यदि वेदाः प्रमाणं वो जिता लोका मयाक्षयाः ॥ १९९
मन्यमानः प्रभावं च कृष्णस्यामिततेजसः ।
तेन न च्यावितश्चाहं क्षत्रधर्मात्स्वनुष्ठितात् ॥ २००
कृतं भवद्भिः सदृशमनुरूपमिवात्मनः ।
यतितं विजये नित्यं दैवं तु दुरतिक्रमम् ॥ २०१
एतावदुक्त्वा वचनं बाष्पव्याकुललोचनः ।
तूष्णीं बभूव राजेन्द्र राजासौ विह्वलो भृशम् ॥ २०२
तथा तु दृष्ट्वा राजानं बाष्पशोकसमान्वितम् ।
द्रौणिः क्रोधेन जज्वाल यथा वह्निर्जगत्क्षये ॥ २०३
स तु क्रोधसमाविष्टः पाणौ पाणि निपीड्य ह ।
बाष्पविह्वलया वाचा राजानमिदमब्रवीत् ॥ २०४
पिता मे निहतः क्षुद्रैः सुनृशंसेन कर्मणा ।
न तथा तेन तप्यामि यथा राजंस्त्वयाद्य वै ॥ २०५
शृणु चेदं वचो मह्यं सत्येन वदतः प्रभो ।
इष्टापूर्तेन दानेन धर्मेण सुकृतेन च ॥ २०६
अद्याहं सर्वपांचालान् वासुदेवस्य पश्यतः ।
सर्वोपायैर्हि नेष्यामि प्रेतराजनिवेशनम् ॥ २०७
अनुज्ञां तु महाराज भवान् मे दातुमर्हति ॥ २०८

इति श्रुत्वा तु वचनं द्रोणपुत्रस्य कौरवः ।
मनसः प्रीतिजननं कृपं वचनमब्रवीत् ।
आचार्य शीघ्रं कलशं जलपूर्णं समानय ॥ २०९
स तद्वचनमाज्ञाय राज्ञो ब्राह्मणसत्तमः ।
कलशं पूर्णमादाय राजांतिकमुपागमत् ॥ २१०
दु० उ०—ममाज्ञया द्विजश्रेष्ठ द्रोणपुत्रोऽभिषिच्यताम् ।
सैनापत्येन भद्रं ते मम चेदिच्छसि प्रियम् ॥ २११
राज्ञो नियोगाद्योद्धव्यं ब्राह्मणेन विशेषतः ।
वर्तता क्षत्रधर्मेण ह्येवं धर्मविदो विदुः ॥ २१२
राज्ञस्तु वचनं श्रुत्वा कृपः शारद्वतस्ततः ।
द्रौणिं राज्ञो नियोगेन सैनापत्येऽभ्यषेचयत् ॥ २१३
सोऽभिषिक्तो महाराज परिष्वज्य नृपोत्तमम् ।
प्रययौ सिंहनादेन दिशः सर्वा विनादयन् ॥ २१४
दुर्योधनोऽपि राजेन्द्र शोणितौघपरिप्लुतः ।
तां निशां प्रतिपेदेऽथ सर्वभूतभयावहाम् ॥ २१५

इति श्रीसंक्षिप्तमहाभारते शल्यपर्वान्तर्गत गदापर्व समाप्तम् ॥ श्लो. सं. २१५.



# १० सौप्तिकपर्व.

१

ततस्ते सहिता वीराः प्रयाता दक्षिणामुखाः ।
सूर्यास्तमनवेलायां समासेदुर्महद्वनम् ॥ १
प्रविश्य तद्वनं घोरं वीक्ष्यमाणाः समंततः ।
शाखासहस्रसंछन्नं न्यग्रोधं ददृशुस्ततः ॥ २
तेऽवतीर्य रथेभ्यश्च विप्रमुच्य च वाजिनः ।
उपस्पृश्य यथान्यायं संध्यामन्वासत प्रभो ॥ ३
ततोऽस्तं पर्वतश्रेष्ठमनुप्राप्ते दिवाकरे ।
सर्वस्य जगतो धात्री शर्वरी समपद्यत ॥ ४
ग्रहनक्षत्रताराभिः संपूर्णाभिरलंकृतम् ।
नभोंऽशुकमिवाभाति प्रेक्षणीयं समततः ॥ ५
तत्रोपविष्टाः शोचंतो न्यग्रोधस्य समीपतः ।
तमेवार्थमतिक्रांतं कुरुपांडवयोः क्षयम् ॥ ६
निद्रया च परीतांगा निषेदुर्धरणीतले ।
श्रमेण सुदृढ युक्ता विक्षता विविधैः शरैः ॥ ७
ततो निद्रावशं प्राप्तौ कृपभोजौ महारथौ ।
महार्हशयनोपेतौ भूमावेव ह्यनाथवत् ॥ ८
क्रोधामर्षवशं प्राप्तो द्रोणपुत्रस्तु भारत ।
न वै स्म संजगामाथ निद्रां सर्प इव श्वसन् ॥ ९
अपश्यत महाबाहुर्न्यग्रोधं वायसैर्युतम् ॥ १०
तत्र काकसहस्राणि ता निशा पर्यणामयन् ॥
सुखं स्वपंति कौरव्य पृथक् पृथगुपाश्रयाः ॥ ११
सोऽपश्यत्सहसायातमुलूकं घोरदर्शनम् ।
महास्वनं महाकायं हर्यक्षं बभ्रुपिंगलम् ॥ १२
सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाडजः ।
न्यग्रोधस्य ततः शाखां प्रार्थयामास भारत ॥ १३
सन्निपत्य तु शाखायां न्यग्रोधस्य विहंगमः ।
प्राप्तान् जघान सुबहून् वायसान् वायसांतकः ॥ १४
केषांचिदच्छिनत् पक्षाञ्छिरांसि च चकर्त ह ।
चरणांश्चैव केषांचिद्बभंज चरणायुधः ॥ १५

तद्दृष्ट्वा सोपधं कर्म कौशिकेन कृतं निशि ।
तद्भावे कृतसंकल्पो द्रौणिरेकोऽन्वचिंतयत् ॥ १६
उपदेशः कृतोऽनेन पक्षिणा मम संयुगे ।
शत्रूणां क्षपणे युक्तः प्राप्तः कालश्च मे मतः ॥ १७
नाद्य शक्या मया हंतुं पांडवा जितकाशिनः ।
बलवंतः कृतोत्साहाः प्राप्तलक्ष्याः प्रहारिणः ॥ १८
राज्ञः सकाशात्तेषां तु प्रतिज्ञातो वधो मया ।
पतंगाग्निसमांवृत्तिमास्थायात्मविनाशिनीम् ॥ १९
निंदितानि च सर्वाणि कुत्सितानि पदे पदे ।
सोपधानि कृतान्येव पांडवैरकृतात्मभिः ॥ २०
अस्मिन्नर्थे पुरा गीताः श्रूयते धर्मचिंतकैः ।
श्लोका न्यायमवेक्षद्भिस्तत्त्वार्थास्तत्त्वदर्शिभिः ॥ २१
परिश्रांते विदीर्णे वा भुंजाने वापि शत्रुभिः ।
प्रस्थाने वा प्रवेशे वा प्रहर्तव्यं रिपोर्बलम् ॥ २२
निद्रार्तमर्धरात्रे च तथा नष्टप्रणायकम् ।
भिन्नयोध बलं यच्च द्विधा युक्तं च यद्भवेत् ॥ २३
इत्येवं निश्चयं चक्रे सुप्तानां निशि मारणे ।
पांडूनां सह पाचालैर्द्रोणपुत्रः प्रतापवान् ॥ २४
स क्रूरां मतिमास्थाय विनिश्चित्य मुहुर्मुहुः ।
सुप्तौ प्रबोधयत्तौ तु मातुलं भोजमेव च ॥ २५
तौ प्रबुद्धौ महात्मानौ कृपभोजौ महाबलौ ।
नोत्तरं प्रतिपद्येतां तत्र युक्तं ह्रिया वृतौ ॥ २६
कृप० उ०—श्रुतं ते वचनं सर्वं यद्यदुक्तं त्वया विभो ।
ममापि वचनं किंचिच्छृणुष्वाद्य महाभुज ॥ २७
आबद्धा मानुषाः सर्वे निबद्धाः कर्मणोर्द्वयोः ।
दैवे पुरुषकारे च परं ताभ्यां न विद्यते ॥ २८
न हि दैवेन सिद्ध्यंति कार्याण्येकेन सत्तम ।
न चापि कर्मणैकेन द्वाभ्यां सिद्धिस्तु योगतः ॥ २९
पर्जन्यः पर्वते वर्षन् किं नु साधयते फलम् ।
कृष्टे क्षेत्रे तथावर्षन् किं न साधयते फलम् ॥ ३०

तयोर्दैवं विनिश्चित्य स्वयं चैव प्रवर्तते ।
प्राज्ञाः पुरुषकारे तु वर्तंते दाक्ष्यमाश्रिताः ॥ ३१
तत्रालसा मनुष्याणां ये भवन्त्यमनस्विनः ।
उत्थानं ते विगर्हंति प्राज्ञानां तन्न रोचते ॥ ३२
प्रायशो हि कृतं कर्म नाफलं दृश्यते भुवि ।
अकृत्वा च पुनर्दुःखं कर्म पश्येन्महाफलम् ॥ ३३
चेष्टामकुर्वँल्लभते यदि किंचिद्यदृच्छया ।
यो वा न लभते कृत्वा दुर्दर्शौ तावुभावपि ॥ ३४
शक्नोति जीवितुं दक्षो नालसः सुखमेधते ।
दृश्यंते जीवलोकेऽस्मिन् दक्षा प्रायो हितैषिणः ॥ ३५
यदि दक्षः समारंभात्कर्मणो नाश्नुते फलम् ।
नास्य वाच्यं भवेत्किंचिल्लब्धव्यं नाधिगच्छति ॥ ३६
अकृत्वा कर्म यो लोके फलं विन्दति धिष्ठितः ।
स तु वक्तव्यतां याति द्वेष्यो भवति भूयशः ॥ ३७
सम्यगीहा पुनरियं यो वृद्धानुपसेवते ।
आपृच्छति च यच्छ्रेयः करोति च हितं वचः ॥ ३८
उत्थायोत्थाय हि सदा प्रष्टव्या वृद्धसंमताः ।
ते स्म योगे परं मूलं तन्मूला सिद्धिरुच्यते ॥ ३९
रागात्क्रोधाद्भयाल्लोभाद्योऽर्थानीहति मानवः ।
अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रियः ॥ ४०
सोऽयं दुर्योधनेनार्थो लुब्धेनादीर्घदर्शिना ।
असमर्थः समारब्धो मूढत्वादविचिंतितः ॥ ४१
हितबुद्धीननादृत्य सन्मंत्र्यासाधुभिः सह ।
वार्यमाणोऽकरोद्वैरं पांडवैर्गुणवत्तरैः ॥ ४२
अनुवर्तामहे यत्तं ते वयं पापपूरुषम् ।
अस्मानप्यनयस्तस्मात्प्राप्तोऽयं दारुणो महान् ॥ ४३
अनेन तु ममाद्यापि व्यसनेनोपतापिता ।
बुद्धिश्चिंतयतः किंचित्स्वं श्रेयो नावबुध्यते ॥ ४४
मुह्यता तु मनुष्येण प्रष्टव्या सुहृदो जनाः ।
तत्रास्य बुद्धिर्विनयं तत्र श्रेयश्च पश्यति ॥ ४५

ते वयं धृतराष्ट्रं च गांधारीं च समेत्य ह ।
उपपृच्छामहे गत्वा विदुरं च महामतिम् ॥ ४६

अश्वत्थामा महाराज दुःखशोकसमन्वितः ।
क्रूरं मनस्ततः कृत्वा तावुभौ प्रत्यभाषत ॥ ४७

पुरुषे पुरुषे बुद्धिर्या या भवति शोभना ।
तुष्यंति च पृथक् सर्वे प्रज्ञया ते स्वया स्वया ॥ ४८

सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरम् ।
सर्वस्यात्मा बहुमतः सर्व आत्मानं प्रशंसति ॥ ४९

विचित्रत्वात्तु चित्तानां मनुष्याणां विशेषतः ।
चित्तवैक्लव्यमासाद्य सा सा बुद्धिः प्रजायते ॥ ५०

अन्यया यौवने मर्त्यो बुद्ध्या भवति मोहितः ।
मध्येऽन्यया जरायां तु सोऽन्यां रोचयते मतिम् ॥ ५१

एकस्मिन्नेव पुरुषे सा सा बुद्धिस्तदा तदा ।
भवत्यकृतकर्मत्वात्सा तस्यैव न रोचते ॥ ५२

उपजाता व्यसनजा येयमद्य मतिर्मम ।
युवयोस्तां प्रवक्ष्यामि मम शोकविनाशिनीम् ॥ ५३

धारयंश्च धनुर्दिव्यं दिव्यान्यस्त्राणि चाहवे ।
पितरं निहतं दृष्ट्वा किं नु वक्ष्यामि संसदि ॥ ५४

सोऽहमद्य यथाकामं क्षत्रधर्ममुपास्य तम् ।
गंतास्मि पदवीं राज्ञः पितुश्चैव महात्मनः ॥ ५५

अद्य स्वप्स्यंति पांचाला विश्वस्ता जितकाशिनः ।
जयं मत्वात्मनश्चैव श्रांता व्यायामकर्शिताः ॥ ५६

तेषां निशि प्रसुप्तानां स्वस्थानां शिबिरे स्वके ।
अवस्कंदं करिष्यामि शिबिरस्याद्य दुष्करम् ॥ ५७

अद्य तान् सहितान् सर्वान् धृष्टद्युम्नपुरोगमान् ।
सूदयिष्यामि विक्रम्य कक्षं दीप्त इवानलः ॥ ५८

अद्याहं सर्वपांचालैः कृत्वा भूमिं शरीरिणीम् ।
प्रहृत्यैकैकशस्तेषु भविष्याम्यनृणः पितुः ॥ ५९

कृ० उ०—दिष्ट्या ते प्रतिकर्तव्ये मतिर्जातेयमच्युता ।
न त्वां वारयितुं शक्तो वज्रपाणिरपि स्वयम् ॥ ६०

अनुयास्यावहे त्वा तु प्रभाते सहितावुभौ ।
अद्य रात्रौ विश्रमस्व विमुक्तकवचध्वजः ॥ ६१
विश्रांतश्च विनिद्रश्च स्वस्थचित्तश्च मानद ।
समेत्य समरे शत्रून् वधिष्यसि न संशयः ॥ ६२
कृपेण सहितं यांतं गुप्तं च कृतवर्मणा ।
को द्रौणिं युधि संरब्धं योधयेदपि देवराट् ॥ ६३
न वधः पूज्यते लोके सुप्तानामिह धर्मतः ।
तथैवापास्तशस्त्राणां विमुक्तरथवाजिनाम् ॥ ६४
यस्तेषां तदवस्थानां द्रुह्येत पुरुषोऽनृजुः ।
व्यक्तं स नरके मज्जेदगाधे विपुलेऽप्लवे ॥ ६५
सर्वास्त्रविदुषां लोके श्रेष्ठस्त्वमसि विश्रुतः ।
नच ते जातु लोकेऽस्मिन् सुसूक्ष्ममपि किल्बिषम् ॥ ६६
त्वं पुनः सूर्यसंकाशः श्वोभूत उदिते रवौ ।
प्रकाशे सर्वभूतानां विजेता युधि शात्रवान् ॥ ६७
अश्व ०उ०—एवमेव यथात्थ त्वं मातुलेह न संशयः ।
तैस्तु पूर्वमय सेतुः शतधा विदलीकृतः ॥ ६८
प्रत्यक्षं भूमिपालानां भवतां चापि सन्निधौ ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ६९
तथा शांतनवो भीष्मो न्यस्तशस्त्रो निरायुधः ।
शिखंडिनं पुरस्कृत्य हतो गांडिवधन्वना ॥ ७०
दुर्योधनश्च भीमेन समेत्य गदया रणे ।
पश्यतां भूमिपालानामधर्मेण निपातितः ॥ ७१
एवं चाधार्मिकाः पापाः पांचाला भिन्नसेतवः ।
तानेवं भिन्नमर्यादान् किं भवान्न विगर्हति ॥ ७२
पितृहंतॄनहं हत्वा पांचालान्निशि सौप्तिके ।
कामं कीटः पतंगो वा जन्म प्राप्य भवामि वै ॥ ७३
एवमुक्त्वा महाराज द्रोणपुत्रः प्रतापवान् ।
एकांते योजयित्वाश्वान् प्रायादभिमुखः परान् ॥ ७४
तमब्रूतां महात्मानौ भोजशारद्वतावुभौ ।
किमर्थं स्यंदनो युक्तः किं च कार्यं चिकीर्षितम् ॥ ७५

एकसार्थं प्रयातौ स्वस्त्वया सह नरर्षभ ।
समदुःखसुखौ चापि नावां शंकितुमर्हसि ॥ ७६

---

## २

ते प्रयाता व्यरोचंत परानभिमुखास्त्रयः ।
हूयमाना यथा यज्ञे समिद्धा हव्यवाहनाः ॥ ७७
तस्मिन्प्रयाते शिबिरं द्रोणपुत्रे महात्मनि ।
कृपश्च कृतवर्मा च शिबिरद्वार्यतिष्ठताम् ॥ ७८
अश्वत्थामा तु तौ दृष्ट्वा यत्नवंतौ महारथौ ।
प्रहृष्टः शनकै राजन्निदं वचनमब्रवीत् ॥ ७९
अह प्रवेक्ष्ये शिबिरं चरिष्यामि च कालवत् ॥ ८०
यथा न कश्चिदपि वां जीवन्मुच्येत मानवः ।
तथा भवद्भ्यां कार्यं स्यादिति मे निश्चिता मतिः ॥ ८१
इत्युक्त्वा प्राविशद्द्रौणि· पार्थानां शिबिरं महत् ।
अद्वारेणाभ्यवस्कंद्य विहाय भयमात्मनः ॥ ८२
ततः पर्यचरन् सर्वं प्रसुप्तजनत निशि ।
धृष्टद्युम्नस्य निलयं शनकैरभ्युपागमत् ॥ ८३
अथ प्रविश्य तद्वेश्म धृष्टद्युम्नस्य भारत ।
पांचाल्यं शयने द्रौणिरपश्यत्सुप्तमंतिकात् ॥ ८४
क्षौमावदाते महति स्पर्ध्यास्तरणसंवृते ।
माल्यप्रवरसयुक्ते धूपैश्चूर्णैश्च वासिते ॥ ८५
तं शयानं महात्मान विश्रब्धमकुतोभयम् ।
प्राबोधयत पादेन शयनस्थं महीपते ॥ ८६
संबुध्य चरणस्पर्शादुत्थाय रणदुर्मदः ।
अभ्यजानदमेयात्मा द्रोणपुत्रं महारथम् ॥ ८७
तमुत्पतंतं शयनादश्वत्थामा महाबलः ।
केशेष्वालभ्य पाणिभ्यां निष्पिपेष महीतले ॥ ८८
सबलं तेन निष्पिष्टः साध्वसेन च भारत ।
निद्रया चैव पांचाल्यो नाशकच्चेष्टितुं तदा ॥ ८९
तमाक्रम्य पदा राजन् कंठे चोरसि चोभयोः ।
नदंतं विस्फुरंतं च पशुमारममारयत् ॥ ९०

तुदन्नखैस्तु स द्रौणिं नातिव्यक्तमुदाहरत् ।
आचार्यपुत्र शस्त्रेण जहि मां मा चिरं कृथाः ।
त्वत्कृते सुकृतांल्लोकान् गच्छेयं द्विपदां वर ॥ ९१
तस्याव्यक्तां तु तां वाचं श्रुत्वा द्रौणिरथाब्रवीत् ।
आचार्यघातिनां लोका न सति कुलपांसन ॥ ९२
मर्मस्वभ्यवधीत्क्रुद्धः पादाष्ठीलैः सुदारुणैः ॥ ९३
तस्य वीरस्य शब्देन मार्यमाणस्य वेश्मनि ।
प्राबुध्यंत महाराज स्त्रियो ये चास्य रक्षिणः ॥ ९४
ते दृष्ट्वा धर्षयंतं तमतिमानुषविक्रमम् ।
भूतमेवाध्यवस्यंतो न स्म प्रव्याहरन् भयात् ॥ ९५
तं तु तेनाभ्युपायेन गमयित्वा यमक्षयम् ।
अध्यतिष्ठत तेजस्वी रथं प्राप्य सुदर्शनम् ॥ ९६
अपक्रांते ततस्तस्मिन् द्रोणपुत्रे महारथे ।
सहितै रक्षिभिः सर्वैः प्रणेदुर्योषितस्तदा ॥ ९७
तासां तु तेन शब्देन समीपे क्षत्रियर्षभाः ।
क्षिप्रं च समनह्यत किमेतदिति चाब्रुवन् ॥ ९८
ततस्ते योधमुख्याश्च सहसा पर्यवारयन् ।
स तानापततः सर्वान् रुद्रास्त्रेण व्यपोथयत् ॥ ९९
धृष्टद्युम्नं च हत्वा स तांश्चैवास्य पदानुगान् ।
अपश्यच्छयने सुप्तमुत्तमौजसमंतिके ॥ १००
तमप्याक्रम्य पादेन कंठे चोरसि तेजसा ।
तथैव मारयामास विनर्दंतमरिंदमम् ॥ १०१
युधामन्युश्च संप्राप्तो मत्वा तं रक्षसा हतम् ।
गदामुद्यम्य वेगेन हृदि द्रौणिमताडयत् ॥ १०२
तमाभिद्रुत्य जग्राह क्षितौ चैनमपातयत् ।
विस्फुरंतं च पशुवत्तथैवैनममारयत् ॥ १०३
तथा स वीरो हत्वा तं ततोऽन्यान् समुपाद्रवत् ।
संसुप्तानेव राजेन्द्र तत्र तत्र महारथान् ॥ १०४
ततो निस्त्रिंशमादाय जघानान्यान् पृथक् पृथक् ॥ १०५
भागशो विचरन् मार्गानसियुद्धविशारदः ।
योधानश्वान् द्विपांश्चैव प्राच्छिनत् स वरासिना ॥ १०६

रुधिरोक्षितसर्वांगः कालसृष्ट इवांतकः ।
विस्फुरद्भिश्च तैर्द्रौणिर्निस्त्रिंशस्योद्यमेन च ।
आकंपनेन चैवासेस्त्रिधा रक्तोक्षितोऽभवत् ॥ १०७
तद्रूपं तस्य ते दृष्ट्वा क्षत्रियाः शत्रुकर्षिणः ।
राक्षसं मन्यमानास्तं नयनानि न्यमीलयन् ॥ १०८
स घोररूपो विचरन् कालवच्छिबिरे ततः ।
अपश्यद्द्रौपदीपुत्रानवशिष्टांश्च सोमकान् ॥ १०९
तेन शब्देन वित्रस्ता धनुर्हस्ता महारथाः ।
धृष्टद्युम्नं हते श्रुत्वा द्रौपदेया विशांपते ।
अवाकिरञ्छरव्रातैर्भारद्वाजमभीतवत् ॥ ११०
ततस्तेन निनादेन संप्रबुद्धाः प्रभद्रकाः ।
शिलीमुखैः शिखंडी च द्रोणपुत्रं समार्दयन् ॥ १११
भारद्वाजः स तान् दृष्ट्वा शरवर्षाणि वर्षतः ।
द्रौपदेयानभिद्रुत्य खड्गेन व्यधमद्बली ॥ ११२
ततो भीष्मनिहंतारं सह सर्वैः प्रभद्रकैः ।
आहनत्सर्वतो वीरं नाना प्रहरणैर्बली ॥ ११३
द्रुपदस्य च पुत्राणां पौत्राणां सुहृदामपि ।
चकार कदनं घोरं दृष्ट्वा दृष्ट्वा महाबलः ॥ ११४
क्रोशतां किमिदं कोऽयं कः शब्दः किं नु किं कृतम् ।
एवं तेषां तदा द्रौणिरंतकः समपद्यत ॥ ११५
त्यक्त्वा द्वाराणि च द्वास्थास्तथा गुल्मानि गौल्मिकाः ।
प्राद्रवंत यथाशक्ति कांदिशीका विचेतसः ॥ ११६
तत्रापरे वध्यमाना मुहुर्मुहुरचेतसः ।
शिबिरान्निष्पतंति स्म क्षत्रिया भयपीडिताः ॥ ११७
तांस्तु निष्पतितांस्त्रस्ताञ् शिबिराज्जीवितैषिणः ।
कृतवर्मा कृपश्चैव द्वारदेशे निजघ्नतुः ॥ ११८
तस्या रजन्यास्त्वर्धेन पांडवानां महद्बलम् ।
गमयामास राजेन्द्र द्रौणिर्यमनिवेशनम् ॥ ११९
प्रत्यूषकाले शिबिरात्प्रतिगन्तुमियेष सः ॥ १२०
नृशोणितावसिक्तस्य द्रौणेरासीदसित्सरुः ।
पाणिना सह संश्लिष्टः एकीभूत इव प्रभो ॥ १२१

यथाप्रतिज्ञं तत्कर्म कृत्वा द्रौणायनिः प्रभो ।
दुर्गमां पदवीं गच्छन् पितुरासीद्गतज्वरः ॥ १२२
यथैव संसुप्तजने शिबिरे प्राविशन्निति ।
तथैव हत्वा निःशब्दे निःश्चक्राम नरर्षभः ॥ १२३
निष्क्रम्य शिबिरात्तस्मात्ताभ्यां संगम्य वीर्यवान् ।
आचख्यौ कर्म तत्सर्वं हृष्टः संहर्षयन् विभो ॥ १२४
असशयं हि कालस्य पर्यायो दुरतिक्रमः ।
तादृशा निहता यत्र कृत्वास्माकं जनक्षयम् ॥ १२५
असन्निध्याद्धि पार्थानां केशवस्य च धीमतः ।
सात्यकेश्चापि कर्मेदं द्रोणपुत्रेण साधितम् ॥ १२६
एवमेष क्षयो वृत्तः कुरुपांडवसेनयोः ।
घोरो विसशनो रौद्रो राजन् दुर्मंत्रिते तव ॥ १२७
तव पुत्रे गते स्वर्ग शोकार्तस्य ममानघ ।
ऋषिदत्तं प्रनष्टं तद्दिव्यदर्शित्वमद्य वै ॥ १२८

---

## ३

तस्यां राज्यां व्यतीतायां धृष्टद्युम्नस्य सारथिः ।
शशंस धर्मराजाय सौप्तिके कदनं कृतम् ॥ १२९
सा० उ०—द्रौपदेया हता राजन् द्रुपदस्यात्मजैः सह ।
प्रमत्ता निशि विश्वस्ताः स्वपंतः शिबिरे स्वके ॥ १३०
कृतवर्मणा नृशंसेन गौतमेन कृपेण च ।
अश्वत्थाम्ना च पापेन हत वः शिबिरं निशि ॥ १३१
छिद्यमानस्य महतो वनस्येव परश्वधैः ।
शुश्रुवे सुमहान् शब्दो बलस्य तव भारत ॥ १३२
अहमेकोऽवशिष्टस्तु तस्मात्सैन्यान्महामते ।
मुक्तः कथंचिद्धर्मात्मन् व्यग्रस्य कृतवर्मणः ॥ १३३
तच्छ्रुत्वा वाक्यमशिवं कुंतीपुत्रो युधिष्ठिरः ।
पपात मह्यां दुर्धर्षः पुत्रशोकसमान्वितः ॥ १३४
पतंतं तमतिक्रम्य परिजग्राह सात्यकिः ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पांडवौ ॥ १३५

लब्धचेतास्तु कौंतेयः शोकविह्वलया गिरा ।
जित्वा शत्रून् जितः पश्चात्पर्यदेवयदार्तवत् ॥ १३६

यु० उ०—दुर्विदा गतिरर्थानामपि ये दिव्यचक्षुषः ।
जीयमाना जयंत्यन्ये जयमाना वयं जिताः ॥ १३७

हत्वा भ्रातॄन् वयस्यांश्च पितॄन् पौत्रान् सुहृद्गणान् ।
बन्धूनमात्यान् पौत्रांश्च जित्वा सर्वाञ्जिता वयम् ॥ १३८

क्रुद्धस्य नरसिंहस्य संग्रामेष्वपलायिनः ।
ये व्यमुच्यंत कर्णस्य प्रमादात्त इमे हताः ॥ १३९

न हि प्रमादात्परमोऽस्ति कश्चिद्वधो नराणामिह जीवलोके ।
प्रमत्तमर्था हि नरं समंतात्त्यजंत्यनर्थाश्च समाविशंति ॥ १४०

न हि प्रमत्तेन नरेण शक्यं विद्या तपः श्रीर्विपुलं यशो वा ।
तीर्त्वा समुद्रं वणिजः समृद्धा मग्नाः कुनद्यामिव हेलमानाः ॥ १४१

कृष्णां तु शोचामि कथं नु साध्वी शोकार्णवं साद्य विशत्यभीता ।
ध्रुवं विसंज्ञा पतिता पृथिव्यां सा शोष्यते शोककृशांगयष्टिः ॥ १४२

तच्छोकजं दुःखमपारयंती कथं भविष्यत्युचिता सुखानाम् ।
पुत्रक्षयभ्रातृवधप्रणुन्ना प्रदह्यमानेव हुताशनेन ॥ १४३

इत्येवमार्तः परिदेवयन् स राजा कुरूणां नकुलं बभाषे ।
गच्छानयैनामिह मंदभाग्यां समातृपक्षामिति राजपुत्रीम् ॥ १४४

प्रस्थाप्य माद्रीसुतमाजमीढः शोकार्दितस्तैः सहितः सुहृद्भिः ।
रोरूयमाणः प्रययौ सुतानामायोधनं भूतगणानुकीर्णम् ॥ १४५

स दृष्ट्वा निहतान् संख्ये पुत्रान् पौत्रान् सखीस्तथा ।
महादुःखपरीतात्मा बभूव जनमेजय ॥ १४६

ततस्तस्मिन् क्षणे कल्पो रथेनादित्यवर्चसा ।
नकुलः कृष्णया सार्धमुपायात्परमार्तया ॥ १४७

कंपमानेव कदली वातेनाभिसमीरिता ।
कृष्णा राजानमासाद्य शोकार्ता न्यपतद्भुवि ॥ १४८

बभूव वदनं तस्याः सहसा शोककर्षितम् ।
फुल्लपद्मपलाशाक्ष्यास्तमोग्रस्त इवांशुमान् ॥ १४९

ततस्तां पतितां दृष्ट्वा संरंभी सत्यविक्रमः ।
बाहुभ्यां परिजग्राह समुत्पत्य वृकोदरः ॥ १५०

सा समाश्वसिता तेन भीमसेनेन भामिनी ।
रुदती पांडवं कृष्णा सहभ्रातरमब्रवीत् ॥ १५१
दिष्ट्या राजन्नवाप्येमामखिलां भोक्ष्यसे महीम् ।
आत्मजान् क्षत्रधर्मेण संप्रदाय यमाय वै ॥ १५२
दिष्ट्या त्वं कुशली पार्थ मत्तमातंगगामिनम् ।
अवाप्य पृथ्वीं कृत्स्नां सौभद्रं न स्मरिष्यसि ॥ १५३
प्रसुप्तानां वधं श्रुत्वा द्रौणिना पापकर्मणा ।
शोकस्तपति मां पार्थ हुताशन इवाश्रयम् ॥ १५४
तस्य पापकृतो द्रौणेर्न चेदद्य त्वया रणे ।
ह्रियते सानुबधस्य युधि विक्रम्य जीवितम् ॥ १५५
इहैव प्रायमासिष्ये तन्निबोधत पाडवाः ।
न चेत्फलमवाप्नोति द्रौणिः पापस्य कर्मणः ॥ १५६
द्रोणपुत्रस्य सहजो मणिः शिरसि मे श्रुतः ।
निहत्य संख्ये तं पापं पश्येयं मणिमाहृतम् ॥ १५७
राजञ् शिरसि ते कृत्वा जीवेय इति मे मतिः ॥ १५८
इत्युक्त्वा पाडवं कृष्णा राजानं चारुदर्शना ।
भीमसेनमथागत्य परमं वाक्यमब्रवीत् ॥ १५९
त्रातुमर्हसि मां भीम क्षत्रधर्ममनुस्मरन् ।
जहि तं पापकर्माणं शंबरं मघवानिव ।
न हि ते विक्रमे तुल्यः पुमानस्तीह कश्चन ॥ १६०
तस्या बहुविधं दुःखं निशम्य परिदेवितम् ।
न चामर्षत कौंतेयो भीमसेनो महाबलः ॥ १६१
स कांचनविचित्रांगमारुरोह महारथम् ।
नकुलं सारथिं कृत्वा द्रोणपुत्रवधे धृतः ॥ १६२
विस्फार्य सशरं चापं तूर्णमश्वानचोदयत् ॥ १६३
ते हयाः पुरुषव्याघ्र चोदिता वातरंहसः ।
वेगेन त्वरिता जग्मुर्हरयः शीघ्रगामिनः ॥ १६४
अथारोहन्हृषीकेशः केतुः सर्वधनुष्मताम् ।
अर्जुनः सत्यकर्मा च कुरुराजो युधिष्ठिरः ॥ १६५
तावुपारोप्य दाशार्हः स्यंदनं लोकपूजितम् ।
प्रतोदेन जवोपेतान् परमाश्वानचोदयत् ।
भीमसेनं महेष्वासं समनुद्रुत्य वेगिताः १६६

स तेषां प्रेक्षतामेव श्रीमतां दृढधन्विनाम् ।
ययौ भागीरथीतीरं हरिभिर्भृशवेगितैः ॥ १६७
स ददर्श महात्मानमुदकांते यशस्विनम् ।
कृष्णद्वैपायनं व्यासमासीनमृषिभिः सह ॥ १६८
तं चैव क्रूरकर्माणं घृताक्तं कुशचीरिणम् ।
रजसा ध्वस्तमासीनं ददर्श द्रौणिमंतिके ॥ १६९
तमभ्यधावत्कौंतेयः प्रगृह्य सशरं धनुः ।
भीमसेनो महाबाहुस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ १७०
स दृष्ट्वा भीमधन्वानं प्रगृहीतशरासनम् ।
भ्रातरौ पृष्ठतश्चास्य जनार्दनरथे स्थितौ ॥ १७१
व्यथितात्माऽभवद्द्रौणिः प्राप्तं चेदममन्यत ।
स तद्दिव्यमदीनात्मा परमास्त्रमचिंतयत् ॥ १७२
जग्राह च स चैषीकां द्रौणिः सव्येन पाणिना ।
अपांडवायेति रुषा व्यसृजद्दारुणं वचः ॥ १७३
ततस्तस्यामिषीकायां पावकः समजायत ।
प्रधक्ष्यन्निव लोकांस्त्रीन् कालांतकयमोपमः ॥ १७४
इंगितेनैव दाशार्हस्तमभिप्रायमादितः ।
द्रौणेर्बुद्ध्वा महाबाहुरर्जुनं प्रत्यभाषत ॥ १७५
अर्जुनार्जुन यद्दिव्यमस्त्रं ते यदि वर्तते ।
द्रोणोपदिष्टं तस्यायं कालः प्राप्तश्च पांडव ॥ १७६
केशवेनैवमुक्तोऽथ पांडवः परवीरहा ।
अवातरद्रथात्तूर्णं प्रगृह्य सशरं धनुः ॥ १७७
पूर्वमाचार्यपुत्राय ततोऽनंतरमात्मने ।
भ्रातृभ्यश्चैव सर्वेभ्यः स्वस्तीत्युक्त्वा परंतपः ॥ १७८
देवताभ्यो नमस्कृत्य गुरुभ्यश्चैव सर्वशः ।
उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम् ॥ १७९
व्या० उ०—अस्त्रं ब्रह्मशिरस्तात विद्वान् पार्थो धनंजयः ।
उत्सृष्टवान्न रोषेण न नाशाय तवाहवे ॥ १८०
अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण बध्यते ।
समा द्वादश पर्जन्यस्तद्राष्ट्रे नाभिवर्षति ॥ १८१

पांडवास्त्वं च राष्ट्रं च सदा संरक्ष्यमेव हि ।
तस्मात्संहर दिव्यं त्वमस्त्रमेतन्महाभुज ॥ १८२
मणिं चैव प्रयच्छाद्य यस्ते शिरसि तिष्ठति ।
एतदादाय ते प्राणान् प्रतिदास्यंति पांडवाः ॥ १८३
अ० उ०—पांडवैर्यानि रत्नानि यच्चान्यत्कौरवैर्धनम् ।
अवाप्तमिह तेभ्योऽयं मणिर्मम विशिष्यते ॥ १८४
यत्तु मे भगवानाह तन्मे कार्यमनन्तरम् ।
अयं मणिरयं चाहमिषीका तु पतिष्यति ॥ १८५
गर्भेषु पांडवेयानाममोघं चैतदुत्तमम् ।
न च शक्तोऽस्मि भगवन् संहर्तुं पुनरुद्यतम् ॥ १८६
तदाज्ञाय हृषीकेशो विसृष्टं पापकर्मणा ।
हृष्यमाण इदं वाक्य द्रौणिं प्रत्यब्रवीत्तदा ॥ १८७
विराटस्य सुता पूर्वं स्नुषां गांडीवधन्वनः ।
उपप्लव्यगता दृष्ट्वा व्रतवान् ब्राह्मणोऽब्रवीत् ॥ १८८
परिक्षीणेषु कुरुषु पुत्रस्तव भविष्यति ।
अमोघः परमास्त्रस्य पातस्तस्य भविष्यति ॥ १८९
स तु गर्भो मृतो जातो दीर्घमायुरवाप्स्यति ।
त्वां तु कापुरुष पापं विदुः सर्वे मनीषिणः ॥ १९०
असकृत्पापकर्माणं बालजीवितघातकम् ।
तस्मात्त्वमस्य पापस्य कर्मणः फलमाप्नुहि ॥ १९१
त्रीणि वर्षसहस्राणि चरिष्यसि महीमिमाम् ।
अनाप्नुवन् क्वचित्कांचित् संविदं जातु केनचित् ॥ १९२
पूयशोणितगंधी च दुर्गकांतारसंश्रयः ।
विचरिष्यासि पापात्मा सर्वव्याधिसमन्वितः ॥ १९३
अ० उ०—सहैव भवता ब्रह्मन् स्थास्यामि पुरुषेष्विह ।
सत्यवागस्तु भगवानयं च पुरुषोत्तमः ॥ १९४
प्रदायाथ मणिं द्रौणिः पांडवानां महात्मनाम् ।
जगाम विमनास्तेषां सर्वेषां पश्यतां वनम् ॥ १९५
पांडवाश्चापि गोविंदं पुरस्कृत्य हतद्विषः ।
द्रौपदीमभ्यधावंत प्रायोपेतां मनास्विनीम् ॥ १९६

अवतीर्य रथाभ्यां तु त्वरमाणा महारथाः ।
ददृशुर्द्रौपदीं दृष्टामार्तामार्ततराः स्वयम् ॥ १९७
ततो राज्ञाभ्यनुज्ञातो भीमसेनो महाबलः ।
प्रददौ तं मणिं दिव्यं वचनं चेदमब्रवीत् ॥ १९८
अयं भद्रे तव मणिः पुत्रहंता जितः स ते ।
उत्तिष्ठ शोकमुत्सृज्य क्षत्रधर्ममनुस्मर ॥ १९९
हतो दुर्योधनः पापो राज्यस्य परिपंथिकः ।
दुःशासनस्य रुधिरं पीतं विस्फुरतो मया ॥ २००
जित्वा मुक्तो द्रोणपुत्रो ब्राह्मण्याद्गौरवेण च ।
यशोऽस्य पातितं देवि शरीरं त्ववशेषितम् ॥ २०१
द्रौ० उ०—केवलानृण्यमाप्तास्मि गुरुपुत्रो गुरुर्मम ।
शिरस्येतं मणिं राजा प्रतिबध्नातु भारत ॥ २०२
तं गृहीत्वा ततो राजा शिरस्येवाकरोत्तदा ।
गुरोरुच्छिष्टमित्येव द्रौपद्या वचनादपि ॥ २०३
ततो दिव्यं मणिवरं शिरसा धारयन्प्रभुः ।
शुशुभे स तदा राजा सचंद्र इव पर्वतः ॥ २०४

इति श्रीसंक्षिप्तमहाभारते सौप्तिकपर्व समाप्तम् । श्लो सं. २०४



# ११ स्त्रीपर्व.

१

हते दुर्योधने चैवं हते सैन्ये च सर्वशः ।
संजयो विगतप्रज्ञो धृतराष्ट्रमुपस्थितः ॥ १
सं० उ०—आगम्य नाना देशेभ्यो नाना जनपदेश्वराः ।
पितृलोकं गता राजन् सर्वे तव सुतैः सह ॥ २
याच्यमानेन सततं तव पुत्रेण भारत ।
घातिता पृथिवी सर्वा वैरस्यांतं विधित्सता ॥ ३
पुत्राणामथ पौत्राणां पितॄणां च महीपते ।
आनुपूर्व्येण सर्वेषां प्रेतकार्याणि कारय ॥ ४
तच्छ्रुत्वा वचनं घोरं संजयस्य महीपतिः ।
गतासुरिव निश्चेष्टो न्यपतत्पृथिवीतले ॥ ५
त शयानमुपागम्य पृथिव्यां पृथिवीपतिम् ।
विदुरः सर्वधर्मज्ञ इद वचनमब्रवीत् ॥ ६
उत्तिष्ठ राजन् किं शेषे मा शुचो भरतर्षभ ।
एषा वै सर्वभूतानां लोकेश्वर परा गतिः ॥ ७
अभावादीनि भूतानि भावमध्यानि भारत ।
अभावनिधनान्येव तत्र का परिदेवना ॥ ८
न शोचन् मृतमन्वेति न शोचन् म्रियते नरः ।
एवं सांसिद्धिके लोके किमर्थमनुशोचसि ॥ ९
कालः कर्षति भूतानि भावमध्यानि भारत ।
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ॥ १०
यांश्चापि निहतान् युद्धे राजस्त्वमनुशोचसि ।
न शोच्या हि महात्मानः सर्वे ते त्रिदिवं गताः ॥ ११
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः ।
सर्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना ॥ १२
एवं राजंस्तवाचक्षे स्वर्गपंथानमुत्तमम् ।
न युद्धादधिकं किंचित्क्षत्रियस्येह विद्यते ॥ १३
आत्मनात्मानमाश्वास्य मा शुचः पुरुषर्षभ ।
नाद्य शोकाभिभूतस्त्वं कार्यमुत्स्रष्टुमर्हसि ॥ १४

विदुरस्य तु तद्वाक्यं श्रुत्वा तु पुरुषर्षभः ।
युज्यतां यानमित्युक्त्वा पुनर्वचनमब्रवीत् ॥ १५
शीघ्रमानय गांधारीं सर्वाश्च भरतस्त्रियः ।
वधूं कुंतीमुपादाय याश्चान्यास्तत्र योषितः ॥ १६
एवमुक्त्वा स धर्मात्मा विदुरं धर्मवित्तमम् ।
शोकविप्रहतज्ञानो यानमेवान्वपद्यत ॥ १७
गांधारी चैव शोकार्ता भर्तुर्वचननोदिता ।
कुंत्या सह यतो राजा सह स्त्रीभिरुपाद्रवत् ॥ १८
ताः समासाद्य राजानं भृशं शोकसमन्विताः ।
आमंत्र्यान्योन्यमीयुः स्म भृशमुच्चुक्रुशुस्ततः ॥ १९
ताः समाश्वासयत् क्षत्ता ताभ्यश्चार्ततरः स्वयम् ।
अश्रुकण्ठीः समारोप्य शिबिकासु बहिर्ययौ ॥ २०
ततः प्रणादः संजज्ञे सर्वेषु कुरुवेश्मसु ।
आकुमारं पुरं सर्वमभवच्छोककर्षितम् ॥ २१
अदृष्टपूर्वा या नार्यः पुरा देवगणैरपि ।
पृथग्जनेन दृश्यंते तास्तदा निहतेश्वराः ॥ २२
प्रकीर्य केशान् सुशुभान् भूषणान्यवमुच्य च ।
एकवस्त्रधरा नार्यः परिपेतुरनाथवत् ॥ २३
प्रगृह्य बाहून् क्रोशन्त्यः पुत्रान् भ्रातॄन् पितॄनपि ।
दर्शयंतीव ता ह स्म युगांते लोकसंक्षयम् ॥ २४
परस्परं सुसूक्ष्मेषु शोकेष्वाश्वासयंस्तदा ।
ताः शोकविह्वला राजन्नवैक्षंत परस्परम् ॥ २५
ताभिः परिवृतो राजा रुदतीभिः सहस्रशः ।
निर्ययौ नगराद्दीनस्तूर्णमायोधनं प्रति ॥ २६
हतेषु सर्वसैन्येषु धर्मराजो युधिष्ठिरः ।
शुश्रुवे पितरं वृद्धं निर्यातं गजसाह्वयात् ॥ २७
सोऽभ्ययात्पुत्रशोकार्तः पुत्रशोकपरिप्लुतम् ।
शोचमानं महाराज भ्रातृभिः सहितस्तदा ॥ २८
तमन्वगात् सुदुःखार्ता द्रौपदी शोककर्षिता ।
सह पांचालयोषिद्भिर्यास्तत्रासन् समागताः ॥ २९

स गंगामनु वृद्धानि स्त्रीणां भरतसत्तम ।
कुररीणामिवार्तानां क्रोशंतीनां ददर्श ह ॥ ३०
क्व नु धर्मज्ञता राज्ञः क्व नु साद्यानृशंसता ।
यच्चावधीत्पितॄन् भ्रातॄन् गुरुपुत्रान् सखीनपि ॥ ३१
किं नु राज्येन ते कार्यं पितॄन् भ्रातॄनपश्यतः ।
अभिमन्युं च दुर्धर्षं द्रौपदेयांश्च भारत ॥ ३२
अतीत्य ता महाबाहुः क्रोशंतीः कुररीरिव ।
ववंदे पितरं ज्येष्ठं धर्मराजो युधिष्ठिरः ॥ ३३
ततोऽभिवाद्य पितरं धर्मेणामित्रकर्षणाः ।
न्यवेदयंत नामानि पांडवास्तेऽपि सर्वशः ॥ ३४
तमात्मजांतकरणं पिता पुत्रवधार्दितः ।
अप्रीयमाणः शोकार्तः पाडवं परिषस्वजे ॥ ३५
धर्मराजं परिष्वज्य सांत्वयित्वा च भारत ।
दुष्टात्मा भीममन्वैच्छद्दिधक्षुरिव पावकः ॥ ३६
स कोपपावकस्तस्य शोकवायुसमीरितः ।
भीमसेनमयं दावं दिधक्षुरिव दृश्यते ॥ ३७
तस्य संकल्पमाज्ञाय भीमं प्रत्यशुभं हरिः ।
भीममाक्षिप्य पाणिभ्यां प्रददौ भीममायसम् ॥ ३८
दुर्योधनेन या पूर्वं कारिता प्रतिमायसी ।
योग्यभूमौ श्रमार्ताय भीममुद्दिश्य चेतसा ॥ ३९
संविधानं महाप्राज्ञस्तत्र चक्रे जनार्दनः ॥ ४०
तं गृहीत्वैव पाणिभ्या भीमसेनमयस्मयम् ।
बभंज बलवान् राजा मन्यमानो वृकोदरम् ॥ ४१
नागायुतबलप्राणः स राजा भीममायसम् ।
भंक्त्वा विमाथेतोरस्कः सुस्राव रुधिरं मुखात् ॥ ४२
ततः पपात मेदिन्यां तथैव रुधिरोक्षितः ।
प्रपुष्पिताग्रशिखरः पारिजात इव द्रुमः ॥ ४३
स तु कोपं समुत्सृज्य गतमन्युर्महामनाः ।
हा हा भीमेति चुक्रोश नृपः शोकसमन्वितः ॥ ४४
तं विदित्वा गतक्रोधं भीमसेनवधार्दितम् ।
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ ४५

मा शुचो धृतराष्ट्र त्वं नैष भीमस्त्वया हतः ।
आयसी प्रतिमा ह्येषा त्वया निष्पातिता विभो ॥ ४६
त्वां क्रोधवशमापन्नं विदित्वा भरतर्षभ ।
मयापकृष्टः कौंतेयो मृत्योर्दंष्ट्रांतरं गतः ॥ ४७
न हि ते राजशार्दूल बले तुल्योऽस्ति कश्चन ।
कः सहेत महाबाहो बाह्वोर्विग्रहणं नरः ॥ ४८
पुत्रशोकाभिसंतप्तं धर्मादपकृतं मनः ।
तव राजेन्द्र तेन त्वं भीमसेनं जिघांससि ॥ ४९
न त्वेतत्ते क्षमं राजन् हन्यास्त्वं यद्वृकोदरम् ।
न हि पुत्रा महाराज जीवेयुस्ते कथंचन ॥ ५०
तस्माद्यत्कृतमस्माभिर्मन्यमानैः शमं प्रति ।
अनुमन्यस्व तत्सर्वं मा च शोके मनः कृथाः ॥ ५१
तत एनमुपातिष्ठन् शौचार्थं परिचारकाः ।
कृतशौचं पुनश्चैनं प्रोवाच मधुसूदनः ॥ ५२
राजन्नधीता वेदास्ते शास्त्राणि विविधानि च ।
श्रुतानि च पुराणानि राजधर्माश्च केवलाः ॥ ५३
एवं विद्वान् महाप्राज्ञः समर्थः सन् बलाबले ।
आत्मापराधात् कस्मात्त्वं कुरुषे कोपमीदृशम् ॥ ५४
उक्तवांस्त्वां तदैवाहं भीष्मद्रोणौ च भारत ।
विदुरः संजयश्चैव वाक्यं राजन्न तत्कृथाः ॥ ५५
स वार्यमाणो नास्माकमकार्षीर्वचनं तदा ।
आत्मापराधादापन्नस्तत्किं भीमं जिघांससि ॥ ५६
एवमुक्तः स कृष्णेन सर्वं सत्यं जनाधिप ।
उवाच देवकीपुत्रं धृतराष्ट्रो महीपतिः ॥ ५७
एवमेतन्महाबाहो यथा वदसि माधव ।
पुत्रस्नेहस्तु बलवान् धैर्यान्मां समचालयत् । ५८
दिष्ट्या तु पुरुषव्याघ्रो बलवान् सत्यविक्रमः ।
त्वद्गुप्तो नागमत्कृष्ण भीमो बाह्वंतरं मम ॥ ५९
इदानीं त्वहमव्यग्रो गतमन्युर्गतज्वरः ।
मध्यमं पांडवं वीरं द्रष्टुमिच्छामि माधव ॥ ६०

ततः स भीमं च धनंजयं च माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
पस्पर्श गात्रैः प्ररुदन् सुगात्रानाश्वास्य कल्याणमुवाच चैतान् ॥ ६१

---

# २

धृतराष्ट्राभ्यनुज्ञातास्ततस्ते कुरुपांडवाः ।
अभ्ययुर्भ्रातरः सर्वे गांधारीं सहकेशवाः ॥ ६२
ततो ज्ञात्वा हतामित्रं युधिष्ठिरमुपागतम् ।
गांधारी पुत्रशोकार्ता शप्तुमैच्छदनिंदिता ॥ ६३
तामभ्यगच्छद्राजेन्द्रो वेपमानः कृतांजलिः ।
युधिष्ठिरस्त्विदं तत्र मधुरं वाक्यमब्रवीत् ॥ ६४
पुत्रहंता नृशंसोऽहं तव देवि युधिष्ठिरः ।
शापार्हः पृथिवीनाशे हेतुभूतः शपस्व माम् ॥ ६५
न हि मे जीवितेनार्थो न राज्येन धनेन वा ।
तादृशान् सुहृदो हत्वा मूढस्यास्य सुहृद्द्रुहः ॥ ६६
तमेवं वादिनं भीतं सन्निकर्षगतं तदा ।
नोवाच किंचिद्गांधारी निःश्वासपरमा भृशम् ॥ ६७
तस्यावनतदेहस्य पादयोर्निपतिष्यतः ।
युधिष्ठिरस्य नृपतेर्धर्मज्ञा दीर्घदर्शिनी ॥ ६८
अंगुल्यग्राणि ददृशे देवी यथ्रंतरेण सा ।
ततः स कुनखीभूतो दर्शनीयनखो नृपः ॥ ६९
तं दृष्ट्वा चार्जुनोऽगच्छद्वासुदेवस्य पृष्ठतः ॥ ७०
एवं संचेष्टमानांस्तानितश्चेतश्च भारत ।
गाधारी विगतक्रोधा सांत्वयामास मातृवत् ॥ ७१
तया ते समनुज्ञाता मातरं वीरमातरम् ।
अभ्यगच्छंत सहिताः पृथा पृथुलवक्षसः ॥ ७२
चिरस्य दृष्ट्वा पुत्रान् सा पुत्राधिभिराभिप्लुता ।
बाष्पमाहारयद्देवी वस्त्रेणावृत्य वै मुखम् ॥ ७३
सा तानेकैकशः पुत्रान् संस्पृशंती पुनः पुनः ।
अन्वशोचत दुःखार्ता द्रौपदीं च हतात्मजाम् ।
रुदंतीमथ पांचाली ददर्श पतितां भुवि ॥ ७४
द्रौ० उ०—आर्ये पुत्राः क्व ते सर्वे सौभद्रसहिता गताः ।
न त्वां तेऽद्याभिगच्छंति चिरं दृष्ट्वा तपस्विनीम् ॥ ७५
किं नु राज्येन वै कार्यं विहीनायाः सुतैर्मम ।
तां समाश्वासयामास पृथा पृथुललोचना ॥ ७६

उत्थाप्य याज्ञसेनीं तु रुदतीं शोककर्षिताम् ।
अभ्यगच्छत गांधारीमार्तामार्ततरा स्वयम् ॥ ७७

गा० उ०—मैवं पुत्रीति शोकार्ता पश्य मामपि दुःखिताम् ।
मन्ये लोकविनाशोऽयं कालपर्यायनोदितः ॥ ७८

इदं तत्समनुप्राप्तं विदुरस्य वचो महत् ।
असिद्धानुनये कृष्णे यदुवाच महामतिः ॥ ७९

मा शुचो न हि शोच्यास्ते संग्रामे निधनं गताः ।
यथैवाहं तथैव त्वं को वा माश्वसयिष्यति ॥ ८०

ततो व्यासाभ्यनुज्ञातो धृतराष्ट्रो महीपतिः ।
पाण्डुपुत्राश्च ते सर्वे युधिष्ठिरपुरोगमाः ॥ ८१

वासुदेवं पुरस्कृत्य हतबंधुं च पार्थिवम् ।
कुरुस्त्रियः समासाद्य जग्मुरायोधनं प्रति ॥ ८२

समासाद्य कुरुक्षेत्रं ता स्त्रियो निहतेश्वराः ।
अपश्यत हतांस्तत्र पुत्रान् भ्रातॄन् पितॄन् पतीन् ।
क्रव्यादैर्भक्ष्यमाणान् वै गोमायुबलवायसैः ॥ ८३

महार्हेभ्योऽथ यानेभ्यो विक्रोशंत्योभिपेदिरे ।
अदृष्टपूर्वं पश्यंत्यो दुःखार्ता भरतस्त्रियः ॥ ८४

श्रांतानां चाप्यनाथानां नासीत्काचन चेतना ।
पांचालकुरुयोषाणां कृपणं तदभून्महत् ॥ ८५

दुर्योधनं हतं दृष्ट्वा गांधारी शोककर्षिता ।
सहसा न्यपतद्भूमौ छिन्नेव कदली वने ॥ ८६

सा तु लब्ध्वा पुनः संज्ञां विक्रुश्य च विलप्य च ।
पर्यष्वजत गांधारी कृपणं पर्यदेवयत् ॥ ८७

सगूढजत्रुविपुलं हारनिष्कविभूषितम् ।
वारिणा नेत्रजेनोरः सिंचंती शोकतापिता ॥ ८८

समीपस्थं हृषीकेशमिदं वचनमब्रवीत् ॥ ८९

मामयं प्राह वार्ष्णेय प्रांजलिर्नृपसत्तमः ।
अस्मिञ्ज्ञातिसमुद्धर्षे जयमंबा ब्रवीतु मे ॥ ९०

इत्युक्ते जानती सर्वमहं स्वव्यसनागमम् ।
अब्रुवं पुरुषव्याघ्र यतो धर्मस्ततो जयः ॥ ९१

यथा च युध्यमानस्त्वं न वै मुह्यसि पुत्रक ।
ध्रुवं शस्त्रजितांल्लोकान् प्राप्स्यस्यमरवत्प्रभो ॥ ९२
इत्येवमब्रुवं पूर्वं नैनं शोचामि वै प्रभो ।
धृतराष्ट्रं तु शोचामि कृपणं हतबांधवम् ॥ ९३
कृ० उ०—उत्तिष्ठोत्तिष्ठ गांधारि मा च शोके मनः कृथाः ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ९४
तपोर्थीयं ब्राह्मणी धत्त गर्भं गौर्वोढारं धावितारं तुरंगी ।
शूद्रा दासं पशुपालं च वैश्या युद्धार्थीयं क्षत्रिया राजपुत्रि ९५
धृतराष्ट्रस्तु राजर्षिर्निगृह्याबुद्धिजं तमः ।
पर्यपृच्छत धर्मज्ञो धर्मराजं युधिष्ठिरम् ॥ ९६
जीवतां परिमाणज्ञः सैन्यानामासि पांडव ।
हतानां यदि जानीषे परिमाणं वदस्व मे ॥ ९७
यु० उ०—दशायुतानामयुतं सहस्राणि च विंशतिः ।
कोट्यः षष्टिश्च षट् चैव ह्यस्मिन् राजन् मृधे हताः ॥ ९८
अलक्षितानां वीराणां सहस्राणि चतुर्दश ।
दश चान्यानि राजेन्द्र शतं षष्टिश्च पंच च ॥ ९९
धृ० उ०—अनाथानां जनानां च सनाथानां च भारत ।
कच्चित्तेषा शरीराणि धक्ष्यसे विधिपूर्वकम् ॥ १००
न येषामस्ति संस्कर्ता न च येऽत्राहिताग्नयः ।
वयं च कस्य कुर्यामो बहुत्वात्तात कर्मणाम् ॥ १०१
यान् सुपर्णाश्च गृध्राश्च विकर्षंति यतस्ततः ।
तेषां तु कर्मणा लोका भविष्यंति युधिष्ठिर ॥ १०२
एवमुक्तो महाराज कुंतीपुत्रो युधिष्ठिरः ।
आदिदेश सुधर्माणं धौम्य सूतं च संजयम् ॥ १०३
विदुरं च महाबुद्धिं युयुत्सुं चैव कौरवम् ।
इन्द्रसेनमुखांश्चैव भृत्यान् सूतांश्च सर्वशः ॥ १०४
भवंतः कारयंत्वेषां प्रेतकार्याण्यशेषतः ।
यथा चानाथवत् किंचित् शरीरं न विनश्यति ॥ १०५
शासनाद्धर्मराजस्य क्षत्ता सूतश्च संजयः ।
सुधर्मा धाम्यसैहित इन्द्रसेनो जयस्तथा ॥ १०६

चंदनागरुकाष्ठानि तथा कालीयकान्युत ।
घृतं तैलं च गंधांश्च क्षौमाणि वसनानि च ॥ १०७
समाहृत्य महार्हाणि दारूणां चैव संचयान् ।
रथांश्च मृदितांस्तत्र नाना प्रहरणानि च ॥ १०८
चिताः कृत्वा प्रयत्नेन यथामुख्यान्नराधिपान् ।
दाहयामासुरव्यग्रा शास्त्रदृष्टेन कर्मणा ॥ १०९
पितृमेधाश्च केषाचित्प्रावर्तत महात्मनाम् ।
सामभिश्चाप्यगायंत ते व्यशोचंत चापरैः ॥ ११०
साम्नामृचां च नादेन स्त्रीणां च रुदितस्वनैः ।
कश्मलं सर्वभूतानां निशायां समपद्यत ॥ १११
कारयित्वा क्रियास्तेषां कुरुराजो युधिष्ठिरः ।
धृतराष्ट्रं पुरस्कृत्य गंगामभिमुखोऽगमत् ॥ ११२
ते समासाद्य गंगां तु शिवां पुण्यजलोचिताम् ।
ह्लादिनी च प्रसन्नां च महारूपां महाबलाम् ॥ ११३
भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च
ततः पितॄणां पौत्राणा भ्रातॄणां स्वजनस्य च ॥ ११४
पुत्राणामार्यकाणा च पतीनां च कुरुस्त्रियः ।
उदकं चक्रिरे सर्वा रुदन्त्यो भृशदुःखिताः ॥ ११५
उदके क्रियमाणे तु वीराणां वीरपत्निभिः ।
सूपतीर्थाऽभवद्गंगा भूयो विप्रससार च ॥ ११६
तन्महोदधिसंकाश निरानंदमनुत्सवम् ।
वीरपत्नीभिराकीर्णं गंगातीरमशोभत ॥ ११७
ततः कुंती महाराज सहसा शोककर्षिता ।
रुदती मंदया वाचा पुत्रान् वचनमब्रवीत् ॥ ११८
यः स वीरो महेष्वासो रथयूथपयूथपः ।
अर्जुनेन जितः संख्ये वीरलक्षणलक्षितः ॥ ११९
यं सूतपुत्रं मन्यध्वं राधेयमिति पांडवाः ।
यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः ॥ १२०
योऽवृणीत यशः शूरः प्राणैरपि सदा भुवि ।
कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः ॥ १२१

स हि वः पूर्वजो भ्राता भास्करान्मय्यजायत ।
कुंडली कवची शूरो दिवाकरसमप्रभः ॥ १२२
श्रुत्वा तु पांडवाः सर्वे मातुर्वचनमप्रियम् ।
कर्णमेवानुशोचंतो भूयः क्लांततरा भवन् ॥ १२३
ततः स पुरुषव्याघ्रः कुंतीपुत्रो युधिष्ठिरः ।
उवाच मातरं वीरो निश्वसन्निव पन्नगः ॥ १२४
अहो भवत्या मंत्रस्य गूहनेन वयं हताः ॥ १२५
अभिमन्योर्विनाशेन द्रौपदेयवधेन च ।
पांचालानां विनाशेन कुरूणां पतनेन च ॥ १२६
ततः शतगुणं दुःखमिदं मामस्पृशद्भृशम् ।
कर्णमेवानुशोचामि दह्याम्यग्नाविवाहितः ॥ १२७
न हि मे किंचिदप्राप्यं भवेदपि दिवि स्थितम् ।
न चेद् वैशसं घोरं कौरवांतकरं भवेत् ॥ १२८
एव विलप्य बहुलं धर्मराजो युधिष्ठिरः ।
व्यरुदच्छनकै राजंश्चकारास्योदकं प्रभुः ॥ १२९
तत आनाययामास कर्णस्य सपरिच्छदाः ।
स्त्रियः कुरुपतिर्धीमान् भ्रातुः प्रेम्णा युधिष्ठिरः ॥ १३०
स ताभिः सह धर्मात्मा प्रेतकृत्यमनन्तरम् ।
चकार विधिवद्धीमान् धर्मराजो युधिष्ठिरः ॥ १३१
पापेनासौ मया श्रेष्ठो भ्राता ज्ञातिर्निपातितः ।
अतो मनसि यद्गुह्यं स्त्रीणां तन्न भविष्यति ॥ १३२
इत्युक्त्वा स तु गंगाया उत्तताराकुलेंद्रियः ।
भ्रातृभिः सहितः सर्वैर्गंगातीरमुपेयिवान् ॥ १३३

इति श्रीसंक्षिप्तमहाभारते स्त्रीपर्व समाप्तम् । श्लो सं. १३३

---

# १२ शान्तिपर्व.

१

कृतोदकास्ते सुहृदां न्यवसन्‌ पांडुनंदनाः ।
शौचं निर्वर्तयिष्यन्तो मासमात्रं बहिः पुरात्‌ ॥ १

युधिष्ठिरस्तु धर्मात्मा शोकव्याकुलचेतनः ।
दृष्ट्वार्जुनमुवाचेदं निश्वसंश्च पुनः पुनः ॥ २

धिगस्तु क्षात्रमाचार धिगस्तु बलपौरुषम्‌ ।
धिगस्त्वमर्षं येनेमामापदं गमिता वयम्‌ ॥ ३

साधु क्षमा दमः शौचं वैराग्यं चाप्यमत्सरः ।
अहिंसा सत्यवचनं नित्यानि वनचारिणाम्‌ ॥ ४

वयं तु लोभान्मोहाच्च दंभं मानं च संश्रिताः ।
इमामवस्थां संप्राप्ता राज्यलाभबुभुत्सया ॥ ५

धनंजय कृतं पापं कल्याणेनोपहन्यते ।
ख्यापनेनानुतापेन दानेन तपसाऽपि वा ॥ ६

त्यागवांश्च पुनः पापं नालं कर्तुमिति श्रुतिः ।
त्यागवाञ्जन्ममरणे नाप्नोतीति श्रुतिर्यदा ।
प्राप्तवर्त्मा कृतमतिर्ब्रह्म संपद्यते तदा ॥ ७

स धनंजय निर्द्वंद्वो मुनिर्ज्ञानसमन्वितः ।
वनमामंत्र्य वः सर्वान्‌ गमिष्यामि परंतप ॥ ८

प्रशाधि त्वमिमामुर्वीं क्षेमां निहतकंटकाम्‌ ।
न ममार्थोऽस्ति राज्येन भोगैर्वा कुरुनन्दन ॥ ९

अ० उ०—अहो दुःखमहो कृच्छ्रमहो वैक्लव्यमुत्तमम्‌ ।
यत्कृत्वाऽमानुषं कर्म त्यजेथाः श्रियमुत्तमाम्‌ ॥ १०

क्लीबस्य हि कुतो राज्यं दीर्घसूत्रस्य वा पुनः ।
किमर्थं च महीपालानवधीः क्रोधमूर्च्छितः ॥ ११

आकिंचन्यं मुनीनां च इति वै नहुषोऽब्रवीत्‌ ।
अश्वस्तनमृषीणां हि विद्यते वेद तद्भवान्‌ ॥ १२

यं त्विमं धर्ममित्याहुर्धनादेष प्रवर्तते ।
सर्वथा धनमाहार्यं यष्टव्यं चापि यत्नतः ॥ १३

येषां राजाऽश्वमेधेन यजते दक्षिणावता ।
उपेत्य तस्यावभृथे पूताः सर्वे भवन्ति ते ॥ १४
शाश्वतोऽयं भूतिपथो नास्यांतमनुशुश्रुम ।
महान् दाशरथः पंथा मा राजन् कुपथं गमः ॥ १५
भी० उ०—यदीमां भवतो बुद्धिं विद्याम वयमीदृशीम् ।
शस्त्रं नैवाग्रहीष्याम नावधिष्याम कंचन ॥ १६
यथा हि पुरुषः खात्वा कूपमप्राप्य चोदकम् ।
पंकादिग्धो निवर्तेत कर्मेदं नस्तथोपमम् ॥ १७
वयमेवात्र गर्ह्या हि यद्वयं मंदचेतसम् ।
त्वां राजन्ननुगच्छामो ज्येष्ठोऽयमिति भारत ॥ १८
आपत्काले हि सन्यासः कर्तव्य इति शिष्यते ।
जरयाऽभिपरीतेन शत्रुभिर्व्यासितेन वा ॥ १९
श्रिया विहीनैरधनैर्नास्तिकैः संप्रवर्तितम् ।
वेदवादस्य विज्ञानं सत्याभासमिवानृतम् ॥ २०
यदि सन्यासतः सिद्धिं राजा कश्चिदवाप्नुयात् ।
पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः ॥ २१
अथ चेदात्मभाग्येषु नान्येषां सिद्धिमश्नुते ।
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥ २२
अनवेक्ष्य सुखादानं तथैवोर्ध्वं प्रतिष्ठितः ।
आत्मत्यागी महाराज स त्यागी तामसो मतः ॥ २३
अनिकेतः परिपतन् वृक्षमूलाश्रयो मुनिः ।
अपाचकः सदा योगी स त्यागी पार्थ भिक्षुकः ॥ २४
क्रोधहर्षावनादृत्य पैशुन्यं च विशेषतः ।
विप्रो वेदानधीते यः स त्यागी पार्थ उच्यते ॥ २५
अव्याहरति कौंतेये धर्मराजे युधिष्ठिरे ।
अभ्यभाषत राजेंद्र द्रौपदी योषितां वरा ॥ २६
अभिमानवती नित्यं विशेषेण युधिष्ठिरे ।
लालिता सततं राज्ञा धर्मज्ञा धर्मदर्शिनी ॥ २७
कथं द्वैतवने राजन् पूर्वमुक्त्वा तथा वचः ॥ २८
वयं दुर्योधनं हत्वा मृधे भोक्ष्याम मेदिनीम् ।
संपूर्णा सर्वकामानामाहवे विजयैषिणः ॥ २९

यजतां विविधैर्यज्ञैः समृद्धैराप्तदक्षिणैः ।
वनवासकृतं दुःखं भविष्यति सुखाय वः ॥ ३०
इत्येतानेवमुक्त्वा त्वं स्वयं धर्मभृतां वर ।
कथमद्य पुनर्वीर विनिहंसि मनांसि नः ॥ ३१
मित्रता सर्वभूतेषु दानमध्ययनं तपः ।
ब्राह्मणस्यैव धर्मः स्यान्न राज्ञो राजसत्तम ॥ ३२
असतां प्रतिषेधश्च सतां च परिपालनम् ।
एष राज्ञां परो धर्मः समरे चापलायनम् ॥ ३३
अनृतं नाब्रवीच्छ्वश्रूः सर्वज्ञा सर्वदर्शिनी ।
युधिष्ठिरस्त्वां पांचालि सुखे धास्यत्यनुत्तमे ॥ ३४
साहं सर्वाधमा लोके स्त्रीणां भरतसत्तम ।
तथा विनिकृता पुत्रैर्याऽहमिच्छामि जीवितुम् ॥ ३५
अ० उ०—दंडः शास्ति प्रजाः सर्वा दंड एवाभिरक्षति ।
दंडः सुप्तेषु जागर्ति दंडं धर्मं विदुर्बुधाः ॥ ३६
यत्र श्यामो लोहिताक्षो दंडश्चरति सूद्यतः ।
प्रजास्तत्र न मुह्यंते नेता चेत्साधु पश्यति ॥ ३७
नाभीतो यजते राजन्नाभीतो दातुमिच्छति ।
नाभीतः पुरुषः कश्चित्समये स्थातुमिच्छति ॥ ३८
नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दुष्करम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥ ३९
उदके बहवः प्राणाः पृथिव्यां च फलेषु च ।
न च कश्चिन्न तान् हंति किमन्यत्प्राणयापनात् ॥ ४०
अंधं तम इवेदं स्यान्न प्राज्ञायत किंचन ।
दंडश्चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥ ४१
न ब्रह्मचार्यधीयीत कल्याणी न दुहेत गाम् ।
न कन्योद्वहनं गच्छेद्यदि दंडो न पालयेत् ॥ ४२
लोकयात्रार्थमेवेह धर्मप्रवचनं कृतम् ।
अहिंसा साधुहिंसेति श्रेयान् धर्मपरिग्रहः ॥ ४३
नात्यन्तं गुणवत्किंचिन्न चाप्यत्यन्तनिर्गुणम् ।
उभयं सर्वकार्येषु दृश्यते साध्वसाधु वा ॥ ४४

एवं पर्याकुले लोके वितथैर्जर्जरीकृते ।
तैस्तैर्न्यायैर्महाराज पुराणं धर्ममाचर ॥ ४५
मा च ते निघ्नतः शत्रून् मन्युर्भवति पार्थिव ।
न तत्र किल्बिषं किंचित्कर्तुर्भवाति भारत ॥ ४६
ध० उ०—असंतोषः प्रमादश्च मदो रागोऽप्रशान्तता ।
बलं मोहोऽभिमानश्चाप्युद्वेगश्चैव सर्वशः ॥ ४७
एभिः पाप्मभिराविष्टो राज्यं त्वमभिकांक्षसे ।
निरामिषो विनिर्मुक्तः प्रशान्तः सुसुखी भव ॥ ४८
य इमामखिलां भूमिं शिष्यादेको महीपतिः ।
तस्याप्युदरमेकं वै किमिदं त्व प्रशंससि ॥ ४९
यथेद्धः प्रज्वलत्यग्निरसमिद्धः प्रशाम्यति ।
अल्पाहारतया त्वग्निं शमयौदर्यमुत्थितम् ॥ ५०
अपि गाथां पुरा गीतां जनकेन वदंत्युत ।
निर्द्वंद्वेन विमुक्तेन मोक्षं समनुपश्यता ॥ ५१
अनंतं बत मे वित्तं यस्य मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे दह्याति किंचन ॥ ५२
शास्त्रार्थसूक्ष्मदर्शी यो धर्मनिश्चयकोविदः ।
तेनाप्येवं न वाच्योऽहं यदि धर्मं प्रपश्यसि ॥ ५३
तपस्त्यागोऽविधिरिति निश्चयस्त्वेष धीमताम् ।
परं पर ज्याय एषां येषा नैःश्रेयसी मतिः ॥ ५४
तपःस्वाध्यायशीला हि दृश्यन्ते धार्मिका जनाः ।
ऋषयस्तपसा युक्ता येषा लोकाः सनातनाः ॥ ५५
उत्तरेण तु पन्थानमार्या विषयनिग्रहात् ।
अबुद्धिजं यमस्त्यक्त्वा लोकास्त्यागवतां गताः ॥ ५६
दक्षिणेन तु पन्थानं यं भास्वंतं प्रचक्षते ।
एते क्रियावतां लोका ये श्मशानानि भेजिरे ॥ ५७
अनिर्देश्या गतिः सा तु यां प्रपश्यंति मोक्षिणः ।
तस्माद्योगः प्रधानेष्टः स तु दुःखं प्रवेदितुम् ॥ ५८
वेदवादानतिक्रम्य शास्त्राण्यारण्यकानि च ।
विपाट्य कदलीस्तंभं सारं ददृशिरे न ते ॥ ५९

कल्याणगोचरं कृत्वा मनस्तृष्णां निगृह्य च ।
कर्मसंततिमुत्सृज्य स्यान्निरालंबनः सुखी ॥ ६०

---

## २

वासु० उ०—मा कृथाः पुरुषव्याघ्र शोकं त्वं गात्रशोषणम् ।
क्षत्रधर्मरताः शूरा वेदवेदाङ्गपारगाः ।
प्राप्ता वीरगतिं पुण्या तान्न शोचितुमर्हसि ॥ ६१
अत्रैवोदाहरंतीममितिहासं पुरातनम् ।
सृंजयं पुत्रशोकार्तं यथायं नारदोऽब्रवीत् ॥ ६२
महाभाग्यं पुरा राज्ञां कीर्त्यमानं मया शृणु ।
गच्छावधानं नृपते ततो दुःखं प्रहास्यसि ॥ ६३
आविक्षितं मरुत्तं वै मृतं सृञ्जय शुश्रुम ।
यः स्पर्धयाऽजयच्छक्रं देवराजं पुरंदरम् ॥ ६४
शक्रप्रियैषी यं विद्वान् प्रत्याचष्ट बृहस्पतिः ।
संवर्तो याजयामास यवीयान् स बृहस्पतेः ॥ ६५
आविक्षितस्य वै सत्रे विश्वे देवाः सभासदः ।
मरुतः परिवेष्टारः साध्याश्चासन् महात्मनः ॥ ६६
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथा ॥ ६७
सुहोत्रं चैवातिथिनं मृतं सृञ्जय शुश्रुम ।
यस्मिन् हिरण्यं ववृषे मघवा परिवत्सरम् ॥ ६८
तद्धिरण्यमपर्यन्तमावृतं कुरुजाङ्गले ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यः समार्पयत् ॥ ६९
अङ्गं बृहद्रथं चैव मृतं सृञ्जय शुश्रुम ।
यः सहस्रं सहस्राणां श्वेतानश्वानवासृजत् ॥ ७०
सहस्रं च सहस्राणां कन्या हेमपरिष्कृताः ।
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ॥ ७१
शिबिमौशीनरं चैव मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं सर्वां चर्मवत्समवेष्टयत् ॥ ७२
महता रथघोषेण पृथिवीमनुनादयन् ।
एकच्छत्रां महीं चक्रे जैत्रेणैकरथेन यः ॥ ७३

यावदस्य गवाश्वं स्यादारण्यैः पशुभिः सह ।
तावतीः प्रददौ गाः स शिबिरौशीनरोऽध्वरे ॥ ७४
भरतं चैव दौष्यन्तिं मृतं शुश्रुम सृञ्जय ।
शाकुन्तलं महात्मानं भूरिद्रविणसंचयम् ॥ ७५
अश्वमेधसहस्रेण राजसूयशतेन च ।
इष्टवान् स महातेजा दौष्यन्तिर्भरतः पुरा ॥ ७६
भरतस्य महत्कर्म सर्वराजसु पार्थिवाः ।
खं मर्त्या इव बाहुभ्यां नानुगन्तुमशक्नुवन् ॥ ७७
परं सहस्राद्यो बद्ध्वा हयान् वेदीर्वितत्य च ।
सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ ॥ ७८
रामं दाशरथिं चैव मृतं शुश्रुम सृञ्जय ।
योऽन्वकम्पत वै नित्यं प्रजाः पुत्रानिवौरसान् ॥ ७९
विधवा यस्य विषये नानाथाः काश्चनाभवन् ।
कालवर्षी च पर्जन्यः शस्यानि समपादयत् ॥ ८०
स चतुर्दशवर्षाणि वने प्रोष्य महातपाः ।
दशाश्वमेधाञ् जारुत्थ्यानाजहार निरर्गलान् ॥ ८१
दशवर्षसहस्राणि दशवर्षशतानि च ।
अयोध्याधिपतिर्भूत्वा रामो राज्यमकारयत् ॥ ८२
भगीरथं च राजानं मृतं सृञ्जय शुश्रुम ।
यस्येन्द्रो वितते यज्ञे सोमं पीत्वा मदोत्कटः ॥ ८३
असुराणां सहस्राणि बहूनि सुरसत्तमः ।
अजयद्बाहुवीर्येण भगवान् पाकशासनः ॥ ८४
भूरिदक्षिणमैक्ष्वाकुं यजमानं भगीरथम् ।
त्रिलोकपथगा गंगा दुहितृत्वमुपेयुषी ॥ ८५
दिलीपं च महात्मानं मृतं सृंजय शुश्रुम ।
यस्य कर्माणि भूरीणि कथयन्ति द्विजातयः ।
यस्य यज्ञे महानासीद्यूपः श्रीमान् हिरण्मयः ॥ ८६
अवादयत्तत्र वीणां मध्ये विश्वावसुः स्वयम् ।
सर्वभूतान्यमन्यन्त मम वादयतीत्ययम् ॥ ८७
त्रयः शब्दा न जीर्यन्ते दिलीपस्य निवेशने ।
स्वाध्यायघोषो ज्याघोषो दीयतामिति वै त्रयः ॥ ८८

मान्धातारं यौवनाश्वं मृतं शुश्रुम सृञ्जय ।
यं देवा मरुतो गर्भं पितुः पार्श्वादपाहरन् ॥ ८९
यं दृष्ट्वा पितुरुत्सङ्गे शयानं देवरूपिणम् ।
अन्योन्यमब्रुवन् देवाः कमयं धास्यतीति वै ॥ ९०
मामेव धास्यतीत्येवमिन्द्रोऽथाभ्युपपद्यत ।
मान्धातेति ततस्तस्य नाम चक्रे शतक्रतुः ॥ ९१
ततस्तु पयसो धारां पुष्टिहेतोर्महात्मनः ।
तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ॥ ९२
स आसीद् द्वादशसमो द्वादशाहेन पार्थिवः ।
तमिम पृथिवी सर्वा एकाह्ना समपद्यत ॥ ९३
यौवनाश्वो यदाङ्गारं समरे प्रत्ययुध्यत ।
विस्फारैर्धनुषो देवा द्यौरभेदिति मेनिरे ॥ ९४
अश्वमेधशतेनेष्ट्वा राजसूयशतेन च ।
अददद्रोहितान्मत्स्यान् ब्राह्मणेभ्यो विशाम्पते ॥ ९५
ययातिं नाहुषं चैव मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं कृत्स्नां विजित्य सहसागराम् ।
शम्यापातेनाभ्यतीयाद्वेदीभिश्चित्रयन् महीम् ॥ ९६
व्यूढेनासुरयुद्धेन हत्वा दैतेयदानवान् ।
व्यभजत्पृथिवीं कृत्स्नां ययातिर्नहुषात्मजः ॥ ९७
अम्बरीष च नाभागिं मृतं शुश्रुम सृञ्जय ।
यं प्रजा वव्रिरे पुण्यं गोप्तारं नृपसत्तमम् ॥ ९८
नैतत्पूर्वं जनाश्चक्रुर्न करिष्यन्ति चापरे ।
इत्यम्बरीषं नाभागिमन्वमोदन्त दक्षिणाः ॥ ९९
शशबिंदुं चैत्ररथं मृतं शुश्रुम सृञ्जय ।
यस्य भार्यासहस्राणां शतमासीन्महात्मनः ॥ १००
रथे रथे शतं चाश्वा देशजा हेममालिनः ।
अश्वे अश्वे शतं गावो गवां तद्वदजाविकम् ॥ १०१
एतद्धनमपर्यंतमश्वमेधे महामखे ।
शशबिंदुर्महाराज ब्राह्मणेभ्यः समार्पयत् ॥ १०२
गयं चामूर्तरयसं मृतं शुश्रुम सृञ्जय ।
यः स वर्षशतं राजा हुतशिष्टाशनोऽभवत् ॥ १०

यस्मै वह्निर्वरं प्रादात्ततो वव्रे वरान् गयः ।
ददतो मेऽक्षयं वित्तं धर्मे श्रद्धा च वर्तताम् ॥ १०४
मनो मे रमतां सत्ये त्वत्प्रसादाद्धुताशन ।
लेभे च कामांस्तान्सर्वान्पावकादिति नः श्रुतम् ॥ १०५
सौवर्णां पृथिवीं कृत्वा दशव्यामां द्विरायताम् ।
दक्षिणामददद्राजा वाजिमेधे महाक्रतौ ॥ १०६
रन्तिदेवं च सांकृत्यं मृतं शुश्रुम सृंजय ।
सम्यगाराध्य यः शक्राद्वरं लेभे महातपाः ॥ १०७
उपातिष्ठंश्च पशवः स्वयं तं संशितव्रतम् ।
ग्राम्याऽऽरण्या महात्मानं रन्तिदेवं यशस्विनम् ॥ १०८
महानदी चर्मराशेरुत्क्लेदात्सुस्रुवे यतः ।
ततश्चर्मण्वतीत्येव विख्याता सा महानदी ॥ १०९
ब्राह्मणेभ्यो ददौ निष्कान् सदसि प्रतते नृप ।
तुभ्यं निष्कं तुभ्यं निष्कमिति क्रोशन्ति वै द्विजाः ॥ ११०
तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः ।
सूपभूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा ॥ १११
सगरं च महात्मानं मृतं शुश्रुम सृञ्जय ।
ऐक्ष्वाकुं पुरुषव्याघ्रमतिमानुषविक्रमम् ॥ ११२
षष्टिः पुत्रसहस्राणि यं यान्तमनुजग्मिरे ।
नक्षत्रराजं वर्षान्ते व्यभ्रे ज्योतिर्गणा इव ॥ ११३
एकच्छत्रा मही यस्य प्रतापादभवत्पुरा ।
योऽश्वमेधसहस्रेण तर्पयामास देवताः ॥ ११४
खानयामास यः कोपात्पृथिवीं सागरांकिताम् ।
यस्य नाम्ना समुद्रश्च सागरत्वमुपागतः ॥ ११५
राजानं च पृथुं वैन्यं मृत शुश्रुम सृञ्जय ।
यमभ्यषिञ्चन् संभूय महारण्ये महर्षयः ।
क्षताद्यो वै त्रायतीति स तस्मात्क्षात्रियः स्मृतः ॥ ११६
अकृष्टपच्या पृथिवी पुटके पुटके मधु ।
सर्वा द्रोणदुघा गावो वैन्यस्यासन् प्रशासतः ॥ ११७
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः ।
सरितश्चान्वदीर्यन्त ध्वजभङ्गश्च नाभवत् ॥ ११८

हैरण्यास्त्रिनलोत्सेधान् पर्वतानेकविंशतिम् ।
ब्राह्मणेभ्यो ददौ राजा योऽश्वमेधे महामखे ॥ ११९
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२०
सृ० उ०—शृणोमि ते नारद वाचमेनां विचित्रार्थां स्रजमिव पुण्यगन्धाम् ।
राजर्षीणां पुण्यकृता महात्मनां कीर्त्यायुक्तानां शोकनिर्नाशनार्थम्॥ १२१

---

## ३

देवस्थान उ०—चतुष्पदी हि निःश्रेणी ब्रह्मण्येव प्रतिष्ठिता ।
तां क्रमेण महाबाहो यथावज्जय पार्थिव ॥ १२२
अद्रोहः सत्यवचनं संविभागो दया दमः ।
प्रजनं स्वेषु दारेषु मार्दवं ह्रीरचापलम् ॥ १२३
एवं धर्म प्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत् ।
तस्मादेतत्प्रयत्नेन कौंतेय प्रतिपालय ॥ १२४
अ० उ०—ब्राह्मणस्यापि चेद्राजन् क्षत्रधर्मेण वर्ततः ।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंभवम् ॥ १२५
न त्यागो न पुनर्यज्ञो न तपो मनुजेश्वर ।
क्षत्रियस्य विधीयन्ते न परस्वोपजीवनम् ॥ १२६
व्या० उ०—न हि गार्हस्थ्यमुत्सृज्य तवारण्यं विधीयते ।
यज्ञो विद्या समुत्थानमसंतोषः श्रियं प्रति ॥ १२७
दंडधारणमुग्रत्वं प्रजाना परिपालनम् ।
एतानि राज्ञां कर्माणि सुकृतानि विशाम्पते ॥ १२८
एषां ज्यायस्तु कौंतेय दंडधारणमुच्यते ।
भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ १२९
धर्ममर्थं च कामं च भ्रातृभिः सह भारत ।
अनुभूय ततः पश्चात्प्रस्थाताऽसि विशापते ॥ १३०
सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ॥ १३१
ये च मूढतमा लोके ये च बुद्धेः परं गताः ।
त एव सुखमेधन्ते मध्यमः क्लिश्यते जनः ॥ १३२

योहि पापसमारंभे कार्ये तद्भावभावितः ।
कुर्वन्नपि तथैव स्यात्कृत्वा च निरपत्रपः ।
तस्मिंस्तत्कलुषं सर्वं समाप्तमिति शब्दितम् ॥ १३३
त्वं तु शुक्लाभिजातीयः परदोषेण कारितः ।
अनिच्छमानः कर्मेदं कृत्वा च परितप्यसे ॥ १३४
सेयं त्वामनुसंप्राप्ता विक्रमेण वसुंधरा ।
निर्जिताश्च महीपाला विक्रमेण त्वयाऽनघ ॥ १३५
तेषां पुराणि राष्ट्राणि गत्वा राजन् सुहृद्वृतः ।
भ्रातॄन् पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय ॥ १३६
कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय ॥
कामाशयो हि स्त्रीवर्गः शोकमेवं प्रहास्यसि ॥ १३७
एवमाश्वासनं कृत्वा सर्वराष्ट्रेषु भारत ।
यजस्व वाजिमेधेन यथेंद्रो विजयी पुरा ॥ १३८
यु० उ०—श्रोतुमिच्छामि भगवन् विस्तरेण महामुने ।
राजधर्मान् द्विजश्रेष्ठ चातुर्वर्ण्यस्य चाखिलान् ॥ १३९
धर्मचर्या च राज्यं च नित्यमेव विरुध्यते ।
एवं मुह्यति मे चेतः चिंतयानस्य नित्यशः ॥ १४०
व्या० उ०—श्रोतुमिच्छसि चेद्धर्मं निखिलेन नराधिप ।
प्रैहि भीष्मं महाबाहो वृद्धं कुरुपितामहम् ॥ १४१
स ते धर्मरहस्येषु संशयान् मनसि स्थितान् ।
छेत्ता भागीरथीपुत्रः सर्वज्ञः सर्वधर्मवित् ॥ १४२
साक्षाद्ददर्श यो देवान् सर्वानिन्द्रपुरोगमान् ।
स ते वक्ष्यति धर्मज्ञः सूक्ष्मधर्मार्थतत्त्ववित् ॥ १४३
तमभ्येहि पुरा प्राणान् स विमुञ्चति धर्मवित् ॥ १४४
यु० उ०—घातयित्वा तमेवाजौ छलेनाजिह्मयोधिनम् ।
उपसंप्रष्टुमर्हामि तमहं केन हेतुना ॥ १४५
कृ० उ०—नेदानीमतिनिर्बन्धं शोके त्वं कर्तुमर्हसि ।
यदाह भगवान् व्यासस्तत्कुरुष्व नृपोत्तम ॥ १४६
सुहृदामस्मदादीनां द्रौपद्याश्च परंतप ।
कुरु प्रियममित्रघ्न लोकस्य च हितं कुरु ॥ १४७

एवमुक्तः स कृष्णेन राजा राजीवलोचनः ।
हितार्थं सर्वलोकस्य समुत्तस्थौ महामनाः ॥ १४८
स तैः परिवृतो राजा नक्षत्रैरिव चंद्रमाः ।
धृतराष्ट्रं पुरस्कृत्य स्वपुर प्रविवेश ह ॥ १४९
ततो नवं रथ शुभ्रं कंबलाजिनसंवृतम् ।
युक्तं षोडशभिर्गोभिः पांडुरैः शुभलक्षणैः ॥ १५०
मंत्रैरभ्यर्चितं पुण्यैः स्तूयमानश्च बंदिभिः ।
आरुरोह यथा देवः सोमोऽमृतमयं रथम् ॥ १५१
जग्राह रश्मीन् कौंतेयो भीमो भीमपराक्रमः ।
अर्जुनः पाडुरं छत्रं धारयामास भानुमत् ॥ १५२
चामरव्यजने त्वस्य वीरौ जगृहतुस्तदा ।
चंद्ररश्मिप्रभे शुभ्रे माद्रीपुत्रावलंकृतौ ॥ १५३
रथं हेममयं शुभ्रं शैब्यसुग्रीवयोजितम् ।
सह सात्यकिना कृष्ण. समास्थायान्वयात्कुरून् ॥ १५४
नरयानेन तु ज्येष्ठः पिता पार्थस्य भारत ।
अग्रतो धर्मराजस्य गान्धारीसहितो ययौ ॥ १५५
कुरुस्त्रियश्च ताः सर्वाः कुंती कृष्णा तथैव च ।
यानैरुच्चावचैर्जग्मुर्विदुरेण पुरस्कृताः ॥ १५६
ततो रथाश्च बहुला नागाश्च समलंकृताः ।
पादाताश्च हयाश्चैव पृष्ठतः समनुव्रजम् ॥ १५७
अभियाने तु पार्थस्य नरैर्नगरवासिभिः ।
नगरं राजमार्गाश्च यथावत्समलंकृताः ॥ १५८
पाडुरेण च माल्येन पताकाभिश्च मेदिनी ।
संस्कृतो राजमार्गोऽभूद्धूपितश्च प्रधूपितः ॥ १५९
कुंभाश्च नगरद्वारि वारिपूर्णा नवा दृढाः ।
सिताः सुमनसो गौराः स्थापितास्तत्र तत्र ह ॥ १६०
ततो दुंदुभिनिर्घोषः शंखानां च मनोरमः ।
जयं प्रवदतां तत्र स्वनः प्रादुरभून्नृप ॥ १६१
निःशब्दे च स्थिते तत्र ततो विप्रजने पुनः ।
राजान ब्राह्मणछद्मा चार्वाको राक्षसोब्रवीत् ॥ १६२

तत्र दुर्योधनसखा भिक्षुरूपेण संवृतः ।
साक्षः शिखी त्रिदंडी च हृष्टो विगतसाध्वसः ॥ १६३
वृतः सर्वैस्तथा विप्रैराशीर्वादविवक्षुभिः ।
परं सहस्रै राजेंद्र तपोनियमसंवृतैः ॥ १६४
स दुष्टः पापमाशंसुः पांडवानां महात्मनाम् ।
अनामंत्र्यैव तान् विप्रांस्तमुवाच महीपतिम् ॥ १६५
इमे प्राहुर्द्विजाः सर्वे समारोप्य वचो मयि ।
धिग् भवन्तं कुनृपतिं ज्ञातिघातिनमस्तु वै ॥ १६६
किं ते न स्याद्धि कौंतेय कृत्वेमं ज्ञातिसंक्षयम् ।
घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितम् ॥ १६७
यु० उ०—प्रसीदन्तु भवन्तो मे प्रणतस्याभियाचतः ।
प्रत्यासन्नव्यसनिनं न मां धिक् कर्तुमर्हथ ॥ १६८
ततो राजन् ब्राह्मणास्ते सर्व एव विशाम्पते ।
ऊचुर्नैतद्वचोऽस्माकं श्रीरस्तु तव पार्थिव ॥ १६९
एष दुर्योधनसखा चार्वाको नाम राक्षसः ।
परिव्राजकरूपेण हितं तस्य चिकीर्षति ॥ १७०
न वयं ब्रूम धर्मात्मन् व्येतु ते भयमीदृशम् ।
उपतिष्ठतु कल्याणं भवन्तं भ्रातृभिस्सह ॥ १७१
ततस्ते ब्राह्मणाः सर्वे हुंकारैः क्रोधमूर्च्छिताः ।
निर्भर्त्सयन्तः शुचयो विजघ्नुः पापराक्षसम् ॥ १७२
स पपात विनिर्दग्धस्तेजसा ब्रह्मवादिनाम् ।
महेंद्राशनिनिर्दग्धः पादपोऽङ्कुरवानिव ॥ १७३
पूजिताश्च ययुर्विप्रा राजानमभिनन्द्य तम् ।
राजा च हर्षमापेदे पांडवाः ससुहृज्जनाः ॥ १७४

---

## ४

दाशार्हेणाभ्यनुज्ञातस्तत्र धौम्यः पुरोहितः ।
प्रागुदक्प्रवणे वेदीं लक्षणेनोपलिख्य च ॥ १७५
व्याघ्रचर्मोत्तरे शुक्ले सर्वतोभद्र आसने ।
दृढपादप्रतिष्ठाने हुताशनसमत्विषि ॥ १७६

उपवेश्य महात्मानं कृष्णां च द्रुपदात्मजाम् ।
जुहाव पावकं धीमान् विधिमन्त्रपुरस्कृतम् ॥ १७७
तत उत्थाय दाशार्हः शंखमादाय पूजितम् ।
अभ्यषिंचत्पतिं पृथ्व्याः कुंतीपुत्रं युधिष्ठिरम् ॥ १७८
ततो निष्कसहस्रेण ब्राह्मणान् स्वस्ति वाचयन् ।
वेदाध्ययनसंपन्नान् धृतिशीलसमन्वितान् ॥ १७९
ते प्रीता ब्राह्मणा राजन् स्वस्त्यूचुर्जयमेव च ।
हंसा इव च नर्दंत. प्रशशंसुर्युधिष्ठिरम् ॥ १८०
युo उo—धन्याः पांडुसुता नूनं येषा ब्राह्मणपुंगवाः ।
तथ्यान् वाप्यथवाऽतथ्यान् गुणानाहुः समागताः ॥ १८१
धृतराष्ट्रो महाराज पिता मे दैवतं परम् ।
शासनेऽस्य प्रिये चैव स्थेयं मत्प्रियकांक्षिभिः ॥ १८२
यदि चाहमनुग्राह्यो भवता सुहृदा तथा ।
धृतराष्ट्रे यथापूर्वं वृत्तिं वर्तितुमर्हथ ॥ १८३
पौरजानपदान् सर्वान् विसृज्य कुरुनन्दनः ।
यौव्यराज्येन कौंतेयं भीमसेनमयोजयत् ॥ १८४
मंत्रे च निश्चये चैव षड्गुणस्य च चिंतने ।
विदुरं बुद्धिसंपन्नं प्रीतिमान् स समादिशत् ॥ १८५
कृताकृतपरिज्ञाने तथाऽऽयव्ययचिंतने ।
संजयं योजयामास वृद्धं सर्वगुणैर्युतम् ॥ १८६
बलस्य परिमाणे च भक्तवेतनयोस्तथा ।
नकुलं व्यादिशद्राजा कर्मणां चान्ववेक्षणे ॥ १८७
परचक्रोपरोधे च दुष्टानां चावमर्दने ।
युधिष्ठिरो महाराजः फाल्गुनं व्यादिदेश ह ॥ १८८
द्विजानां देवकार्येषु कार्येष्वन्येषु चैव ह ।
धौम्यं पुरोधसां श्रेष्ठं नित्यमेव समादिशत् । १८९
सहदेवं समीपस्थं नित्यमेव समादिशत् ।
तेन गोप्यो हि नृपतिः सर्वावस्थो विशाम्पते ॥ १९०
ततो युधिष्ठिरो राजा ज्ञातीनां ये हता युधि ।
श्राद्धानि कारयामास तेषां पृथगुदारधीः ॥ १९१

धृतराष्ट्रो ददौ राजा पुत्राणामौर्ध्वदेहिकम् ।
सर्वकामगुणोपेतमन्नं गाश्च धनानि च ॥ १९२
उद्दिश्योद्दिश्य तेषां च चक्रे राजौर्ध्वदेहिकम् ।
सभाः प्रपाश्च विविधास्तटाकानि च पांडवः ॥ १९३
स तेषामनृणो भूत्वा गत्वा लोकेष्ववाच्यताम् ।
कृतकृत्योऽभवद्राजा प्रजा धर्मेण पालयन् ॥ १९४
ततो दुर्योधनगृहं प्रासादैरुपशोभितम् ।
बहुरत्नसमाकीर्णं दासीदाससमाकुलम् ॥ १९५
धृतराष्ट्राभ्यनुज्ञातं भ्रात्रा दत्तं वृकोदरः ।
प्रतिपेदे महाबाहुर्मंदिरं मघवानिव ॥ १९६
यथा दुर्योधनगृहं तथा दुःशासनस्य तु ।
प्रतिपेदे महाबाहुरर्जुनो राजशासनात् ॥ १९७
दुर्मर्षणस्य भवनं दुःशासनगृहाद्वरम् ।
नकुलाय वरार्हाय कर्शिताय महावने ॥ १९८
दुर्मुखस्य च वेश्माग्र्यं श्रीमत्कनकभूषणम् ।
प्रददौ सहदेवाय संततं प्रियकारिणे ॥ १९९
पुरोहिताय धौम्याय प्रादादयुतशः स गाः ।
धनं सुवर्णं रजतं वासांसि विविधान्यपि ॥ २००
ततः स च हृषीकेशः स च राजा युधिष्ठिरः ।
कृपादयश्च ते सर्वे चत्वारः पांडवाश्च ते ॥ २०१
रथैस्तैर्नगरप्रख्यैः पताकाध्वजशोभितैः ।
ययुराशु कुरुक्षेत्रं वाजिभिः शीघ्रगामिभिः ॥ २०२
अवतीर्य कुरुक्षेत्रं केशमज्जास्थिसंकुलम् ।
देहन्यासः कृतो यत्र क्षत्रियैस्तैर्महात्मभिः ॥ २०३
ततस्ते ददृशुर्भीष्मं शरप्रस्तरशायिनम् ।
स्वरश्मिजालसंवीतं सायं सूर्यसमप्रभम् ॥ २०४
उपास्यमानं मुनिभिर्देवैरिव शतक्रतुम् ।
देशे परमधर्मिष्ठे नदीमोघवतीमनु ॥ २०५
अवस्कंद्याथ वाहेभ्यः संयम्य प्रचलं मनः ।
एकीकृत्येंद्रियग्राममुपतस्थुर्महामुनीन् ॥ २०६

परिवार्य ततः सर्वे निषेदुः पुरुषर्षभाः ।
किंचिद्दीनमना भीष्ममिति होवाच केशवः ॥ २०७
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि यथा पुरा ।
शराभिघातदुःखार्त्ते कच्चिद्गात्रं न दूयते ॥ २०८
मनुष्येषु मनुष्येंद्र न दृष्टो न च मे श्रुतः ।
भवतो वा गुणैर्युक्तः पृथिव्यां पुरुषः क्वचित् ॥ २०९
तदस्य तप्यमानस्य ज्ञातीनां संक्षयेण वै ।
ज्येष्ठस्य पांडुपुत्रस्य शोकं भीष्म व्यपानुद ॥ २१०
ये हि धर्माः समाख्याताश्चातुर्वर्ण्यस्य भारत ।
चातुराश्रम्यसंयुक्ताः सर्वे ते विदितास्तव ॥ २११
तज्ज्ञातिशोकोपहतश्रुताय सत्याभिसंधाय युधिष्ठिराय ।
प्रब्रूहि धर्मार्थसमाधियुक्तं सत्यं वचोऽस्यापनुदाशु शोकम् ॥ २१२

---

५

भी० उ०—हंत धर्मान्प्रवक्ष्यामि दृढे वाङ्मनसी मम ।
युधिष्ठिरस्तु धर्मात्मा मां धर्माननुपृच्छतु ॥ २१३
प्रणिपत्य हृषीकेशमभिवाद्य पितामहम् ।
अनुमान्य गुरून् सर्वान् पर्यपृच्छद्युधिष्ठिरः ॥ २१४
राज्ञां वै परमो धर्म इति धर्मविदो विदुः ।
महांतमेतं भारं च मन्ये तद्ब्रूहि पार्थिव ॥ २१५
यथा हि रश्मयोऽश्वस्य द्विरदस्यांकुशो यथा ।
नरेंद्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतम् ॥ २१६
तत्र चेत्संप्रमुह्येत धर्मे राजर्षिसेविते ।
लोकस्य संस्था न भवेत्सर्वं च व्याकुलीभवेत् ॥ २१७
भी० उ०—नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राम्हणेभ्यो नमस्कृत्य धर्मान् वक्ष्यामि शाश्वतान् ॥ २१८
आदावेव कुरुश्रेष्ठ राज्ञा रञ्जनकाम्यया ।
देवतानां द्विजानां च वर्तितव्यं यथाविधि ॥ २१९
देवतान्यर्चयित्वा हि ब्राम्हणांश्च कुरूद्वह ।
उत्थानेन सदा पुत्र प्रयतेथा युधिष्ठिर ॥ २२०

न ह्युत्थानमृते दैवं राज्ञामर्थं प्रसाधयेत् ।
साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च ॥ २२१
पौरुषं हि परं मन्ये दैवं निश्चित्य मुच्यते ।
विपन्ने च समारंभे संतापं मा स्म वै कृथाः ॥ २२२
न हि सत्यादृते किंचिद्राज्ञां वै सिद्धिकारकम् ।
सत्ये हि राजा निरतः प्रेत्य चेह च नन्दति ॥ २२३
गुणवाञ् शीलवान् दांतो मृदुधर्मो जितेंद्रियः ।
सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः ॥ २२४
मृदुर्हि राजा सततं लंघ्यो भवति सर्वशः ।
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाश्रय ॥ २२५
अदंड्याश्चैव ते पुत्र विप्राश्च ददतां वर ।
भूतमेतत्परं लोके ब्राम्हणो नाम पांडव ॥ २२६
अद्भ्योऽग्निर्ब्रम्हतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ २२७
उद्यम्य शस्त्रमायान्तमपि वेदान्तग रणे ।
निगृह्णीयात्स्वधर्मेण धर्मापेक्षी नराधिपः ॥ २२८
राजद्विष्टे च विप्रस्य विषयान्ते विसर्जनम् ।
विधीयते न शारीरं दंडमेषां कदाचन ॥ २२९
दयिताश्च नरास्ते स्युर्भक्तिमन्तो द्विजेषु ये ॥ २३०
न कोशः परमोऽन्योऽस्ति राज्ञां पुरुषसंचयात् ।
सर्वदुर्गेषु मन्यते नरदुर्गं सुदुस्तरम् ॥ २३१
व्यसनानि च सर्वाणि त्यजेथा भूरिदक्षिण ।
भवितव्यं सदा राज्ञा गर्भिणीसहधर्मिणा ॥ २३२
यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम् ।
गर्भस्य हितमाधत्ते तथा राज्ञाप्यसंशयम् ॥ २३३
न संत्याज्यं च ते धैर्यं कदाचिदपि पांडव ।
धीरस्य स्पष्टदंडस्य न भयं विद्यते क्वचित् ॥ २३४
परिहासश्च भृत्यैस्ते नात्यर्थं वदतां वर ।
कर्तव्यो राजशार्दूल दोषमत्र हि मे शृणु ॥ २३५
अवमन्यंति भर्तारं संघर्षादुपजीविनः ।
स्वे स्थाने न च तिष्ठंति लंघयंति च तद्वचः ॥ २३६

जर्जरं चास्य विषयं कुर्वंति प्रतिरूपकैः ।
स्त्रीरक्षिभिश्च सज्जंते तुल्यवेषा भवंति च ॥ २३७
हयं वा दंतिनं वापि रथं वा नृपसत्तम ।
अभिरोहंत्यनादृत्य हर्षुले पार्थिवे मृदौ ॥ २३८
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य दंडो भवति शाश्वतः ॥ २३९
न हिंस्यात्परवित्तानि देयं काले च दापयेत् ।
अभृतानां भवेद्भर्ता भृतानामन्ववेक्षकः ॥ २४०
नृपतिः सुमुखश्च स्यात्स्मितपूर्वाभिभाषिता ।
असद्भ्यश्च समादद्यात्सद्भ्यस्तु प्रतिपादयेत् ॥ २४१
शूरान् भक्तानसंहार्यान् कुले जातानरोगिणः ।
विद्याविदो लोकविदः परलोकान्ववेक्षकान् ॥ २४२
सहायान् सततं कुर्याद्राजा भूतिपरिष्कृतः ।
तैश्च तुल्यो भवेद्भोगैश्छत्रमात्राज्ञयाधिकः ॥ २४३
सर्वाभिशंकी नृपतिर्यश्च सर्वहरो भवेत् ।
स क्षिप्रमनृजुर्लुब्धः स्वजनेनैव बध्यते ॥ २४४
अगूढविभवा यस्य पौरा राष्ट्रनिवासिनः ।
नयापनयवेत्तारः स राजा राजसत्तमः ॥ २४५
वश्या नेया विधेयाश्च न च संघर्षशीलिनः ।
विषये दानरुचयो नरा यस्य स पार्थिवः ॥ २४६
राज्ञां राजीवताम्राक्ष साधनं चात्र मे शृणु ।
चारश्च प्रणिधिश्चैव काले दानममत्सरात् ।
युक्त्या दानं न चादानमयोगेन युधिष्ठिर ॥ २४७
सतां संग्रहणं शौर्यं दाक्ष्यं सत्यं प्रजाहितम् ।
अनार्जवैरार्जवैश्च शत्रुपक्षस्य भेदनम् ॥ २४८
केतनानां च जीर्णानामवेक्षा चैव सीदताम् ।
द्विविधस्य च दंडस्य प्रयोगः कालचोदितः ॥ २४९
बलानां हर्षणं नित्यं प्रजानामन्ववेक्षणम् ।
कार्येष्वखेदः कोशस्य तथैव च विवर्धनम् ।
नीतिधर्मानुसरणं नित्यमुत्थानमेव च ॥ २५०

उत्थानहीनो राजा हि बुद्धिमानपि नित्यशः ।
प्रधर्षणीयः शत्रूणां भुजंग इव निर्विषः ॥ २५१

न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा ।
अल्पोऽपि हि दहत्यग्निर्विषमल्पं हिनस्ति च ॥ २५२

यु० उ०—के धर्माः सर्ववर्णानां चातुर्वर्ण्यस्य के पृथक् ।
चातुर्वर्ण्याश्रमाणां च राजधर्माश्च के मताः ॥ २५३

भी० उ०—अक्रोधः सत्यवचनं संविभागः क्षमा तथा ।
प्रजनः स्वेषु दारेषु शौचमद्रोह एव च ।
आर्जवं भृत्यभरणं नवैते सार्ववर्णिकाः ॥ २५४

ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम् ।
दममेव महाराज धर्ममाहुः पुरातनम् ।
स्वाध्यायाभ्यसनं चैव तत्र कर्म समाप्यते ॥ २५५

क्षत्रियस्यापि यो धर्मस्तं ते वक्ष्यामि भारत ।
दद्याद्राजन्न याचेत यजेत न च याजयेत् ॥ २५६

नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् ।
नित्योद्युक्तो दस्युवधे रणे कुर्यात्पराक्रमम् ॥ २५७

दानमध्ययनं यज्ञः शौचेन धनसंचयः ।
पितृवत्पालयेद्वैश्यो युक्तः सर्वान् पशूनिह ॥ २५८

षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत् ।
लब्धाच्च सप्तमं भागं तथा शृङ्गे कला खुरे ॥ २५९

सस्यानां सर्वबीजानामेषा सांवत्सरी भृतिः ॥ २६०

शूद्र एतान् परिचरेत्त्रीन् वर्णाननुपूर्वशः ।
संचयांश्च न कुर्वीत जातु शूद्रः कथंचन ॥ २६१

अवश्यं भरणीयो हि वर्णानां शूद्र उच्यते ॥ २६२

छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च ।
यातयामानि देयानि शूद्राय परिचारिणे ।
देयः पिंडोऽनपत्याय भर्तव्यौ वृद्धदुर्बलौ ॥ २६३

स्वाहाकारवषट्कारौ मंत्रः शूद्रे न विद्यते ।
तस्माच्छूद्रः पाकयज्ञैर्यजेतावतवान् स्वयम् ।
पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम् ॥ २६४

वानप्रस्थं भैक्ष्यचर्यं गार्हस्थ्यं च महाश्रमम् ।
ब्रह्मचर्याश्रमं प्राहुश्चतुर्थं ब्राह्मणैर्वृतम् ॥ २६५
जटाधरणसंस्कारं द्विजातित्वमवाप्य च ।
आधानादीनि कर्माणि प्राप्य वेदमधीत्य च ॥ २६६
सदारो वाऽप्यदारो वा आत्मवान् संयतेंद्रियः ।
वानप्रस्थाश्रमं गच्छेत्कृतकृत्यो गृहाश्रमात् ॥ २६७
तत्रारण्यकशास्त्राणि समधीत्य स धर्मवित् ।
उर्ध्वरेताः प्रव्रजित्वा गच्छत्यक्षरसात्मताम् ॥ २६८
चरितब्रह्मचर्यस्य ब्राह्मणस्य विशाम्पते ।
भैक्ष्यचर्या स्वधाकारः प्रशस्त इह मोक्षिणः ॥ २६९
सत्यार्जवं चातिथिपूजनं च धर्मस्तथाऽर्थश्च रतिः स्वदारैः ।
निषेवितव्यानि सुखानि लोके ह्यस्मिन् परे चैव मतं ममैतत् ॥ २७०
सर्वे धर्मा राजधर्मप्रधानाः सर्वे वर्णाः पाल्यमाना भवंति ।
सर्वस्त्यागो राजधर्मेषु राजंस्त्यागं धर्मं चाहुरग्र्यं पुराणम् ॥ २७१

---

६

यु० उ०—यवनाः किराता गांधाराश्चीनाः शबरबर्बराः ।
शकास्तुषाराः कंकाश्च पह्लवाश्चांध्रमद्रकाः॥ २७२
ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ।
कथं धर्मांश्चरिष्यति सर्वे विषयवासिनः ॥ २७३
भी०उ०—मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥ २७४
पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ।
अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम् ॥ २७५
भरणं पुत्रदाराणां शौचमद्रोह एव च ।
दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ।
पाकयज्ञा महार्हाश्च दातव्याः सर्वदस्युभिः ॥ २७६
यु० उ०—राष्ट्रस्य यत्कृत्यतमं तन्मे ब्रूहि पितामह ।
भी० उ०—राष्ट्रस्यैतत्कृत्यतमं राज्ञ एवाभिषेचनम् ॥ २७७
अराजकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम् ।
परस्परं भक्षयंतो मत्स्या इव जले कृशान् ॥ २७८

समेत्य तास्ततश्चक्रुः समयानिति नः श्रुतम् ।
वाक्शूरो दंडपरुषो यश्च स्यात्पारजायिकः ।
यः परस्वमथादद्यात्त्याज्या न ताहशा इति ॥ २७९
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश ।
यं पूजयेम संभूय यश्च नः प्रतिपालयत् ॥ २८०
ततो मनुं व्यादिदेश मनुर्नाभिननन्द ताः ।
बिभेमि कर्मणः पापाद्राज्यं हि भृशदुस्तरम् ॥ २८१
विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यदा ॥ २८२
तमब्रुवन् प्रजा मा भैः कर्तॄनेनो गमिष्यति ।
पशूनामधिपंचाशद्धिरण्यस्य तथैव च ॥ २८३
धान्यस्य दशमं भागं दास्यामः कोशवर्धनम् ।
कन्यां शुल्के चारुरूपां विवाहेषूद्यतासु च ॥ २८४
मुखेन शस्त्रपत्रेण ये मनुष्याः प्रधानतः ।
भवंतं तेऽनुयास्यंति महद्रमिव देवताः ॥ २८५
स त्वं जातबलो राजा दुष्प्रधर्षः प्रतापवान् ।
सुखे धास्यसि नः सर्वान् कुबेर इव नैर्ऋतान् ॥ २८६
यं च धर्मं चरिष्यंति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य त्वत्संस्थं वै भविष्यति ॥ २८७
एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित् ।
कुर्यू राजानमेवाग्रे प्रजानुग्रहकारणात् ॥ २८८
न हि जात्ववमंतव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ २८९
यु० उ०—कथं रक्ष्यो जनपदः कथं जेयाश्च शत्रवः ।
कथं चारं प्रयुंजीत वर्णान् विश्वासयेत्कथम् ॥ २९०
भी उ०—आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः ।
न्यसेत गुल्मान् दुर्गेषु संधौ च कुरुनन्दन ॥ २९१
नगरोपवने चैव पुरोद्यानेषु चैव ह ॥ २९२
प्रणिधींश्च ततः कुर्याज्जडान्धबधिराकृतीन् ।
पुंसः परीक्षितान् प्राज्ञान् क्षुत्पिपासाश्रमक्षमान् ॥ २९३
चारांश्च विद्यात्प्रहितान् परेण भरतर्षभ ।
आपणेषु विहारेषु समाजेषु च भिक्षुषु ॥ २९४

न च वश्यो भवेदस्य नृपो यश्चातिवीर्यवान् ।
राष्ट्रं च पीडयेत्तस्य शस्त्राग्निविषमूर्छनैः ॥ २९५
अमात्यवल्लभानां च विवादांस्तस्य कारयेत् ।
वर्जनीयं सदा युद्धं राज्यकामेन धीमता ॥ २९६
आददीत बलिं चापि प्रजाभ्यः कुरुनन्दन ।
स षड्भागमपि प्राज्ञस्तासामेवाभिगुप्तये ॥ २९७
दशधर्मगतेभ्यो यद्वसु बह्वल्पमेव च ।
तदाददीत सहसा पौराणां रक्षणाय वै ॥ २९८
यथा पुत्रास्तथा पौरा द्रष्टव्यास्ते न संशयः ।
भक्तिश्चैषा न कर्तव्या व्यवहारे प्रदर्शिते ॥ २९९
श्रोतुं चैव न्यसेद्राजा प्राज्ञान् सर्वार्थदर्शिनः ।
व्यवहारेषु सततं तत्र राज्यं प्रतिष्ठितम् ॥ ३००
आकरे लवणे शुल्के तरे नागबले तथा ।
न्यसेदमात्यान्नृपतिः स्वाप्तान् वा पुरुषान् हितान् ॥ ३०१
यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा ।
तदाऽभिसंश्रयेद्दुर्गं बुद्धिमान् पृथिवीपतिः ॥ ३०२
घोषान्न्यसेत मार्गेषु ग्रामानुत्थापयेदपि ।
प्रवेशयेच्च तान् सर्वाञ् शाखानगरकेष्वपि ॥ ३०३
ये गुप्ताश्चैव दुर्गाश्च देशास्तेषु प्रवेशयेत् ।
धनिनो बलमुख्यांश्च सांत्वयित्वा पुनः पुनः ॥ ३०४
क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन्नरान् ।
विनाशयेद्वा तत्सर्वं बलेनाथ स्वकेन वा ॥ ३०५
नदीमार्गेषु च तथा संक्रमानवसादयेत् ।
जलं विस्रावयेत्सर्वमविस्राव्यं च दूषयेत् ॥ ३०६
दुर्गाणां चाभितो राजा मूलच्छेदं प्रकारयेत् ।
सर्वेषां क्षुद्रवृक्षाणां चैत्यवृक्षान् विवर्जयेत् ॥ ३०७
प्रगंडीः कारयेत्सम्यगाकाशजननीस्तदा ।
आपूरयेच्च परिखां स्थाणुनक्रझषाकुलाम् ॥ ३०८
संकटद्वारकाणि स्युरुच्छ्वासार्थं पुरस्य च ।
तेषां च द्वारवद्गुप्तिः कार्या सर्वात्मना भवेत् ॥ ३०९

द्वारेषु च गुरूण्येव यंत्राणि स्थापयेत्सदा ।
आरोपयेच्छतघ्नीश्च स्वाधीनानि च कारयेत् ॥ ३१०
काष्ठानि चाभिहार्याणि तथा कूपांश्च खानयेत् ।
संशोधयेत्तथा कूपान् कृतपूर्वान् पयोर्थिभिः ॥ ३११
तृणच्छन्नानि वेश्मानि पंकेनाथ प्रलेपयेत् ।
निर्हरेच्च तृणं मासि चैत्रे वह्निभयात्तथा ॥ ३१२
नक्तमेव च भक्तानि पाचयेत नराधिपः ।
न दिवा ज्वालयेदग्निं वर्जयित्वाऽग्निहोत्रिकम् ॥ ३१३
कर्मारारिष्टशालासु ज्वलेदग्निः सुरक्षितः ।
गृहाणि च प्रवेश्यानि विधेयः स्याद्धुताशनः ॥ ३१४
महादंडश्च तस्य स्याद्यस्याग्निर्वै दिवा भवेत् ।
प्रघोषयेदथैवं च रक्षणार्थं पुरस्य च ॥ ३१५
भिक्षुकांश्चाक्रिकांश्चैव क्लीबोन्मत्तान् कुशीलवान् ।
बाह्यान् कुर्यान्नरश्रेष्ठ दोषाय स्युर्हि तेऽन्यथा ॥ ३१६
विशालान् राजमार्गांश्च कारयीत नराधिपः ।
प्रपाश्च विपणांश्चैव यथोद्देशं समाविशेत् ॥ ३१७
भांडागारान् युधागारान् योधागारांश्च सर्वशः ।
अश्वागारान् गजागारान् बलाधिकरणानि च ॥ ३१८
परिखाश्चैव कौरव्य प्रतोलीर्निष्कुटानि च ।
न जात्वन्यः प्रपश्येत गुह्यमेतद्युधिष्ठिर ॥ ३१९
अर्थसंनिचयं कुर्याद्राजा परबलार्दितः ॥ ३२०
औषधानि च सर्वाणि मूलानि च फलानि च ।
चतुर्विधांश्च वैद्यान् वै संगृह्णीयाद्विशेषतः ॥ ३२१
राज्ञा सप्तैव रक्ष्याणि तानि चैव निबोध मे ।
आत्माऽमात्याश्च कोशाश्च दंडो मित्राणि चैव हि ।
तथा जनापदाश्चैव पुरं च कुरुनंदन ॥ ३२२
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ ३२३
अर्थमूलोऽपि हिंसा च कुरुते स्वयमात्मनः ।
करैरशास्त्रदृष्टैर्हि मोहात्संपीडयन् प्रजाः ॥ ३२४

यो हि दोग्ध्रीमुपास्ते च स नित्यं विंदते पयः ।
एवं राष्ट्रमुपायेन भुंजानो लभते फलम् ॥ ३२५
परचक्राभियानेन यदि ते स्याद्धनक्षयः ।
अथ साम्नैव लिप्सेथा धनमब्राह्मणेषु यत् ॥ ३२६

---

७

राज्ञा पुरोहितः कार्यो भवेद्विद्वान् बहुश्रुतः ।
उभौ समीक्ष्य धर्मार्थावप्रमेयावनंतरम् ॥ ३२७
भवेयाता स्थितौ धर्मे श्रद्धेयौ सुतपस्विनौ ।
परस्परस्य सुहृदौ विहितौ समचेतसौ ॥ ३२८
ब्रह्मक्षत्रमिदं सृष्टमेकयोनि स्वयंभुवा ।
पृथग्बलविधानं तन्न लोक परिपालयेत् ॥ ३२९
तपोमंत्रबलं नित्यं ब्राह्मणेषु प्रतिष्ठितम् ।
अस्त्रबाहुबलं नित्यं क्षत्रियेषु प्रतिष्ठितम् ॥ ३३०
प्रत्याहर्तुमशक्यं स्याद्धनं चौरैर्हृतं यदि ।
तत्स्वकोशात्प्रदेयं स्यादशक्तेनोपजीवतः ॥ ३३१
चतुर्विधानि मित्राणि राज्ञा राजन् भवंत्युत ।
सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ॥ ३३२
चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शंक्यौ तथा परौ ॥ ३३३
यं मन्येत ममाभावादिममर्थागमं स्पृशेत् ।
नित्यं तस्माच्छंकितव्यममित्रं तद्विदुर्बुधाः ॥ ३३४
ज्ञातिभ्यश्चैव बुध्येथा मृत्योरिव भयं सदा ।
निकृतस्य नैररन्यैर्ज्ञातिरेव परायणम् ।
विश्वस्तवदविश्वस्तस्तेषु वर्तेत सर्वदा ॥ ३३५
शक्त्यान्नदानं सततं तितिक्षार्जवमार्दवम् ।
यथार्हप्रतिपूजा च शस्त्रमेतदनायसम् ॥ ३३६
अनायसेन शस्त्रेण मृदुना हृदयच्छिदा ।
जिह्वामुद्धर सर्वेषां परिमृज्यानुमृज्य च ॥ ३३७
राज्येनामात्यसंस्थेन राजंस्त्वं न प्रमाद्यसि ॥ ३३८
मेधावी स्मृतिमान् दक्षः प्रकृत्या चानृशंस्यवान् ।
यो मानितोऽमानितो वा न च दुष्येत् कदाचन ।
गृहे वसेदमात्यस्ते स स्यात्परमपूजितः ॥ ३३९

ह्रीनिषेवास्तथा दांताः सत्यार्जवसमन्विताः ।
शक्ताः कथयितुं सम्यक् ते तव स्युः सभासदः ॥ ३४०
अमात्यांश्चातिशूरांश्च ब्राह्मणांश्च परिश्रुतान् ।
एतान् सहायांल्लिप्सेथाः सर्वास्वापत्सु भारत ॥ ३४१
कुलीना देशजाः प्राज्ञा रूपवंतो बहुश्रुताः ।
प्रगल्भाश्चानुरक्ताश्च ते तव स्युः परिच्छदाः ॥ ३४२
यौनाः श्रौतास्तथा मौलास्तथैवाप्यनहंकृताः ।
कर्तव्या भूतिकामेन पुरुषेण बुभूषता ॥ ३४३
सत्यवाक्शीलसंपन्नो गंभीरः सत्रपो मृदुः ।
पितृपैतामहो यः स्यात् स मंत्रं श्रोतुमर्हति ॥ ३४४
दानमेव हि सर्वत्र सान्त्वेनानभिजल्पितम् ।
न प्रीणयति भूतानि निर्व्यंजनमिवाशनम् ।
तस्मात्सान्त्वं प्रयोक्तव्यं दण्डमाधित्सतापि हि ॥ ३४५
अपराधानुरूपं च दंडं पापेषु कारयेत् ।
वियोजयेद्धनैर्ऋद्धानधनानथ बंधनैः ॥ ३४६
कामकारेण दंडस्तु यः कुर्याद्विचक्षणः ।
स इहाकीर्तिसंयुक्तो मृतो नरकमृच्छति ॥ ३४७
न तु हन्यान्नृपो जातु दूतं कस्यांचिदापदि ॥ ३४८
चारान्मंत्रं च कोशं च दंडं चैव विशेषतः ।
अनुतिष्ठेत्स्वयं राजा सर्वं ह्यत्र प्रतिष्ठितम् ॥ ३४९
आत्मानं सर्वकार्याणि तापसे राष्ट्रमेव च ।
निवेदयेत्प्रयत्नेन तिष्ठेत्प्रह्वश्च सर्वदा ॥ ३५०
तापसेषु हि विश्वासमपि कुर्वंति दस्यवः ।
तस्मिन्निधीनादधीत प्रज्ञां पर्याददीत च ॥ ३५१
ग्रामस्याधिपतिः कार्यो दशग्राम्यास्तथापरे ।
द्विगुणायाः शतस्यैवं सहस्रस्य च कारयेत् ॥ ३५२
योगक्षेमं च संप्रेक्ष्य वणिजां कारयेत्करान् ।
उत्पत्तिं दानवृत्तिं च शिल्पं संप्रेक्ष्य चासकृत् ॥ ३५३
अजस्रमुपयोक्तव्यं फलं गोमिषु भारत ।
प्रभावयंति राष्ट्रं च व्यवहारं कृषिं तथा ॥ ३५४

तस्माद्गोमिषु यत्नेन प्रीतिं कुर्याद्विचक्षणः ।
दयावानप्रमत्तश्च करान् संप्रणयन् मृदून् ॥ ३५५

धर्माय राजा भवति न कामकरणाय तु ।
राजा चरति चेद्धर्मं देवत्वायैव कल्पते ॥ ३५६

कर्म शूद्रे कृषिर्वैश्ये दंडनीतिश्च राजनि ।
ब्रह्मचर्यं तपो मंत्राः सत्यं चैव द्विजातिषु ॥ ३५७

दुर्बलस्य च यच्चक्षुर्मुनेराशीविषस्य च ।
अविषह्यतमं मन्ये मा स्म दुर्बलमासदः ॥ ३५८

युक्ता यदा जानपदा भिक्षंते ब्राह्मणा इव ।
अभीक्ष्णं भिक्षुरूपेण राजानं घ्नंति तादृशः ॥ ३५९

राज्ञो यदा जनपदे बहवो राजपूरुषाः ।
अनयेनोपवर्तंते तद्राज्ञः किल्बिषं महत् ॥ ३६०

संविभज्य यथा भुंक्ते नामात्यानवमन्यते ।
निहंति बलिनं दृप्तं स राज्ञो धर्म उच्यते ॥ ३६१

धर्ममेवानुवर्तस्व न धर्माद्विद्यते परम् ।
न च कामान्न संरंभान्न द्वेषाद्धर्ममुत्सृजेत् ॥ ३६२

यु० उ०—अथ यो विजिगीषेत क्षत्रियः क्षत्रियं युधि ।
कस्तस्य विजये धर्मो ह्येतत्पृष्टो ब्रवीहि मे ॥ ३६३

भी० उ०—ससहायोऽसहायो वा राष्ट्रमागम्य भूमिपः ।
ब्रूयादहं वो राजेति रक्षिष्यामि च वः सदा ॥ ३६४

मम धर्मबलिं दत्त किं वा मां प्रतिपत्स्यथ ।
ते चेत्तमागतं तत्र वृणुयुः कुशलं भवेत् ॥ ३६५

ते चेदक्षत्रियाः सन्तो विरुध्येरन् कथंचन ।
सर्वोपायैर्नियन्तव्या विकर्मस्था नराधिप ॥ ३६६

नैवासन्नद्धकवचो योद्धव्यः क्षत्रियो रणे ।
एक एकेन योध्यश्च विसृजेदक्षमं यथा ॥ ३६७

स चेन्निकृत्या युध्येत निकृत्या प्रतियोधयेत् ।
इषुर्लिप्तो न कर्णी स्यादसतामेतदायुधम् ॥ ३६८

निष्प्राणो नाभिहंतव्यो नानपत्यः कथंचन ।
कृतांजलिं न्यस्तशस्त्रं गृहीत्वा न विहिंसयेत् ॥ ३६९

नार्वाक् संवत्सरात्कन्या प्रष्टव्या विक्रमाहृता ।
एवमेव धनं सर्वं यच्चान्यत् सहसा हृतम् ॥ ३७०
अनीकयोः संहतयोर्यदीयात् ब्राह्मणोऽन्तरा ।
शांतिमिच्छन्नुभयतो न योद्धव्यं तदा भवेत् ॥ ३७१
यत्र यत्र हतः शूरः शत्रुभिः परिवारितः ।
अक्षयांल्लभते लोकान् यदि दैन्यं न सेवते ॥ ३७२
अशोच्यो हि हतः शूरः स्वर्गलोके महीयते ।
न ह्यन्नं नोदकं तस्य न स्नानं नाप्यशौचकम् ॥ ३७३
यु० उ०—कथं दुष्टं विजानीयादेतत्पृष्टो ब्रवीहि मे ।
भी० उ०—परोक्षमगुणानाह सद्गुणानभ्यसूयते ॥ ३७४
परैर्वा कीर्त्यमानेषु तूष्णीमास्ते पराङ्मुखः ।
करोत्यभीक्ष्णं संसृष्टमसंसृष्टश्च भाषते ।
अदृष्टितो न कुरुते दृष्टो नैवाभिभाषते ॥ ३७५
आर्तिरार्ते प्रिये प्रीतिरेतावान्मित्रलक्षणम् ।
विपरीतं तु बोद्धव्यमरिलक्षणमेव तत् ॥ ३७६
यु० उ०—यथा गणाः प्रवर्धन्ते सुहृदः प्रभुवंति च ।
तथा च ते न भिद्येरंस्तच्च मे वद पार्थिव ॥ ३७७
भी० उ०—गणानां च कुलानां च राज्ञां भरतसत्तम ।
वैरसंदीपनावेतौ लोभामर्षौ नराधिप ॥ ३७८
चारमन्त्रविधानेषु कोषसंनिचयेषु च ।
नित्ययुक्ता महाबाहो वर्धन्ते सर्वतो गणाः ॥ ३७९
आभ्यंतरं भयं रक्ष्यमसारं बाह्यतो भयम् ।
आभ्यंतरं भयं राजन् सद्यो मूलानि कृंतति ॥ ३८०
भेदाच्चैव प्रधानाच्च भिद्यंते रिपुभिर्गणाः ।
तस्मात्संघातमेवाहुः गणानां शरणं महत् ॥ ३८१

---

८

यु० उ०—किं कार्यं सर्वधर्माणां गरीयो भवतो मतम् ।
यथाहं परमं धर्ममिह च प्रेत्य चाप्नुयाम् ॥ ३८२
भी० उ०—मातापित्रोर्गुरूणां च पूजा बहुमता मम ।
यच्च तेऽभ्यनुजानीयुः कर्म तात सुपूजिताः ।
धर्म्यं धर्मविरुद्धं वा तत्कर्तव्यं युधिष्ठिर ॥ ३८३

एत एव त्रयो लोका एत एवाश्रमास्त्रयः ।
एत एव त्रयो वेदा एत एव त्रयोऽग्नयः ॥ ३८४
दशैव तु सदाचार्यः श्रोत्रियानतिरिच्यते ।
पितॄन् दश तु मातैका सर्वान् वा पृथिवीमपि ॥ ३८५
गुरुर्गरीयान् पितृतो मातृतश्चेति मे मतिः ॥ ३८६
सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
यत्तु लोकेषु दुर्ज्ञानं तत्प्रवक्ष्यामि भारत ॥ ३८७
भवेत्सत्यमवक्तव्यं वक्तव्यमनृतं भवेत् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥ ३८८
यः पापैः सह संबन्धान्मुच्यते शपथादपि ।
न तेभ्योऽपि धनं देयं शक्ये सति कथंचन ॥ ३८९
प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत् ।
अर्थस्य रक्षणार्थाय परेषां धर्मकारणात् ॥ ३९०
यस्मिन् यथा वर्तते यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया बाधितव्यः साध्वाचारः साधुना प्रत्युपेयः ॥ ३९१
यु० उ०—क्लिश्यमानेषु भूतेषु तैस्तैर्भावैस्ततस्ततः ।
दुर्गाण्यतितरेद्येन तन्मे ब्रूहि पितामह ॥ ३९२
भी० उ०—आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः ।
वर्तन्ते संयतात्मानो दुर्गाण्यतितरंति ते ॥ ३९३
प्रत्याहुर्नोच्यमाना ये न हिंसंति च हिंसिताः ।
प्रयच्छंति न याचंते दुर्गाण्यतितरंति ते ॥ ३९४
मातापित्रोश्च ये वृत्तिं वर्तंते धर्मकोविदाः ।
वर्जयंति दिवा स्वप्नं दुर्गाण्यतितरंति ते ॥ ३९५
स्वेषु दारेषु वर्तन्ते नान्यवृत्तिमृतावृतौ ।
कर्माण्यकुहकार्थानि येषां वाचश्च सूनृताः ॥ ३९६
परश्रिया न तप्यंति ये संतः पुरुषर्षभाः ।
सर्वान् देवान् नमस्यंति सर्वधर्माय शृण्वते ॥ ३९७
ये न मानित्वमिच्छंति मानयंति च ये परान् ।
ये क्रोधं संनियच्छन्ति क्रुद्धान् संशमयंति च ॥ ३९८
मधुमांसं च ये नित्यं वर्जयंतीह मानवाः ।
यात्रार्थं भोजनं येषां संतानार्थं च मैथुनम् ॥ ३९९
वाक् सत्यवचनार्थाय दुर्गाण्यतितरंति ते ॥ ४००

ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम् ।
भक्ता नारायणं देवं दुर्गाण्यतितरंति ते ॥ ४०१

यु० उ०—असौम्याः सौम्यरूपेण सौम्याश्चासौम्यदर्शनाः ।
ईदृशान् पुरुषांस्तात कथं विद्यामहे वयम् ॥ ४०२

भी० उ०—नृपेणाहूयममानस्य यत्तिष्ठसि मय हृदि ।
न तत्तिष्ठति दुष्टानां वने मूलफलाशिनाम् ॥ ४०३
अपराधैर्न तावंतो भृत्याः शिष्टा नराधिपैः ।
उपघातैर्यथा भृत्या दूषिता निधनं गताः ॥ ४०४

असभ्याः सभ्यसकाशाः सभ्याश्चासभ्यदर्शनाः ।
दृश्यंते विविधा भावास्तेषु युक्तं परीक्षणम् ॥ ४०५
न चैवास्ति तलं व्योम्नि खद्योते न हुताशनः ।
तस्मात्प्रत्यक्षदृष्टोऽपि युक्तो ह्यर्थं परीक्षितुम् ॥ ४०६

युु० उ०—यद्धितं राज्यतंत्रस्य कुलस्य च सुखोदयम् ।
अन्नपाने शरीरे च हितं यत्तद्ब्रवीहि मे ॥ ४०७

भी० उ०—न च प्रशास्तुनेकेन राज्यं शक्यं युधिष्ठिर ॥ ४०८
कुलीनं शिक्षितं प्राज्ञं सहिष्णुं देशजं तथा ।
सचिवं यः प्रकुरुते न चैनमवमन्यते ।
तस्य विस्तीर्यते राज्यं जोत्स्ना गृहपतेरिव ॥ ४०९
दुष्टानां निग्रहो दंडः हिरण्य बाह्यतः क्रिया ।
व्यंगत्वं च शरीरस्य वधो नाल्पस्य कारणात् ॥ ४१०
धर्ममूलः सदैवार्थः कामोऽर्थफलमुच्यते ।
संकल्पमूलास्ते सर्वे संकल्पो विषयात्मकः ॥ ४११

धर्माच्छरीरसगुप्तिर्धर्मार्थं चार्थ उच्यते ।
कामो रतिफलश्चात्र सर्वे ते च रजस्वलाः ॥ ४१२
अपध्यानमलो धर्मो मलोऽर्थस्य निगूहनम् ।
संप्रमोदमलः कामी भूयः स्वगुणवर्धितः । ४१३
धर्मः सत्यं तथा वृत्तं बलं चैव तथाप्यहम् ।
शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः ॥ ४१४
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दान च शीलमेतत्प्रशस्यते ॥ ४१५

राज्ञः कोषक्षयादेव जायते बलसंक्षयः ।
कोषश्च जनयेद्राजा निर्जलेभ्यो यथा जलम् ॥ ४१६
क्षत्रियो वृत्तिसंरोधे कस्य नादातुमर्हति ।
अन्यत्रातापसस्वाच्च ब्राह्मणस्वाच्च भारत ॥ ४१७
भैक्ष्यचर्या न विहिता न च विट्शूद्रजीविका ॥ ४१८
सर्वं धनवता प्राप्यं सर्वं तरति कोषवान् ।
तच्च धर्मेण लिप्सेत नाधर्मेण कदाचन ॥ ४१९

## आपद्धर्मः

यु० उ०—परचक्राभियातस्य दुर्बलस्य बलीयसा ।
आपन्नचेतसो ब्रूहि किं कार्यमवशिष्यते ॥ ४२०
भी० उ०—अनुरक्तेन चेष्टेन हृष्टेन जगतीपतिः ।
अल्पेनापि हि सैन्येन महीं जयति भूमिपः ॥ ४२१
हतो वा दिवमारोहेद्धत्वा वा क्षितिमावसेत् ।
युद्धे वा संत्यजन् प्राणाञ् शक्रस्येति सलोकताम् ॥ ४२२
अपाचिक्रमिषुः क्षिप्रं साम्ना वा परिसांत्वयन् ।
विलंघयित्वा मंत्रेण ततः स्वयमुपक्रमेत् ॥ ४२३
मा वधीस्त्वं स्त्रियं भीरुं मा शिशुं मा तपस्विनम् ।
नायुध्यमानो हंतव्यो न च ग्राह्या बलात्स्त्रियः ॥ ४२४
अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेव सुखमेधेते दीर्घसूत्रो विनश्यति ॥ ४२५
अमित्रैरपि संधेयं प्राणा रक्ष्या हि भारत ।
समागमे चरेद्युक्त्वा कृतार्थो न च विश्वसेत् ॥ ४२६
अर्थतस्तु निबध्यन्ते मित्राणि रिपवस्तथा ।
पुत्रं हि मातापितरौ त्यजतः पतितं प्रियम् ॥ ४२७
गृध्रदृष्टिर्बकालीनः श्वचेष्टः सिंहविक्रमः ।
अनुद्विग्नः काकशंकी भुजंगचरितं चरेत् ॥ ४२८
यु० उ०—केनस्विद् ब्राह्मणो जीवेज्जघन्ये काल आगते ।
कथमापत्सु वर्तेत तन्मे ब्रूहि पितामह ॥ ४२९
भी० उ०—कृतं त्रेता द्वापर च कलिश्च भरतर्षभ ।
राजमूला इति मतिर्मम नास्त्यत्र संशयः ॥ ४३०

तस्मिंस्त्वभ्यागते काले प्रजानां दोषकारके ।
विज्ञानबलमास्थाय जीवितव्यं भवेत्तदा ॥ ४३१
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विश्वामित्रस्य संवादं चाण्डालस्य च पक्कणे ॥ ४३२
त्रेताद्वापरयोः संधौ तदा दैवविधिक्रमात् ।
अनावृष्टिरभूद्घोरा लोके द्वादशवार्षिकी ॥ ४३३
न ववर्ष सहस्राक्षः प्रतिलोमोऽभवद्गुरुः ।
जगाम दक्षिणं मार्गं सोमो व्यावृत्तलक्षणः ॥ ४३४
नावश्यायोऽपि तत्राभूत्कुत एवाभ्रराजयः ।
नद्यः संक्षिप्ततोयौघाः किंचिदन्तर्गतास्ततः ॥ ४३५
उपशुष्कजलन्यासा विनिवृत्तसभाप्रपा ।
निवृत्तयज्ञस्वाध्याया निर्वषट्कारमङ्गला ॥ ४३६
उच्छिन्नकृषिगोरक्षा निवृत्तविपणापणा ॥ ४३७
अस्थिसञ्चयसङ्कीर्णा महाभूतिरिवाकुला ।
शून्यभूयिष्ठनगरा दग्धग्रामनिवेशना ॥ ४३८
गोऽजाविमहिषीहीना परस्परपराहता ।
सर्वभूततरुपाया बभूव वसुधा तदा ॥ ४३९
तस्मिन्प्रतिभये काले क्षते धर्मे युधिष्ठिर ।
बभ्रमुः क्षुधिता मर्त्याः खादमानाः परस्परम् ॥ ४४०
ऋषयो नियमांस्त्यक्त्वा परित्यज्याग्निदेवताः ।
आश्रमान् संपरित्यज्य पर्यधावन्नितस्ततः ॥ ४४१
विश्वामित्रोऽथ भगवान् महर्षिरनिकेतनः ।
क्षुधापरिगतो धीमान् समन्तात्पर्यधावत् ॥ ४४२
स कदाचित्परिपतन् श्वपचानां निवेशनम् ।
हिंस्राणां प्राणिघातानामाससाद वने क्वचित् ॥ ४४३
स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः ।
चाण्डालस्य गृहे राजन् सद्यः शस्त्रहतस्य वै ॥ ४४४
संचिन्तयामास तदा स्तैन्यं कार्यमितो मया ।
न हीदानीमुपायो मे विद्यते प्राणधारणे ॥ ४४५
स विगाढां निशां दृष्ट्वा सुप्ते चाण्डालपक्कणे ।
शनैरुत्थाय भगवान् प्रविवेश कुटीमतः ॥ ४४६

सुषुप्त इव चाण्डालः श्लेष्मापिहितलोचनः ।
परिभिन्नस्वरो रूक्षः प्रोवाचाप्रियदर्शनः ॥ ४४७

कः कुतन्त्रीं घटयति सुप्ते चाण्डालपक्कणे ।
जागर्मि नात्र सुप्तोऽस्मि हतोऽसीति च दारुणः ॥ ४४८

विश्वामित्रस्ततो भीतः सहसा तमुवाच ह ।
तत्र व्रीडाकुलमुखः सोद्वेगस्तेन कर्मणा ॥ ४४९

विश्वामित्रोऽहमायुष्मंस्त्वागतोऽहं बुभुक्षितः ।
मा वधीर्मम सद्बुद्धे यदि सम्यक् प्रपश्यसि ॥ ४५०

चाण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः ।
शयनादुपसंभ्रान्त उद्ययौ प्रति तं ततः ॥ ४५१

स विसृज्याश्रु नेत्राभ्यां बहुमानात्कृताञ्जलिः ।
उवाच कौशिकं रात्रौ ब्रह्मन् किं ते चिकीर्षितम् ॥ ४५२

वि० उ०—क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम् ।
क्षुधितः कलुषं यातो नास्ति ह्रीरशनार्थिनः ॥ ४५३

अवसीदन्ति मे प्राणाः श्रुतिर्मे नश्यति क्षुधा ।
सोऽधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम् ॥ ४५४

अग्निर्मुखं पुरोधाश्च देवानां शुचिषाड्विभुः ।
यथावत्सर्वभुग् ब्रह्मा तथा मां विद्धि धर्मतः ॥ ४५५

श्व० उ०—नेदं सम्यग्व्यवसितं महर्षे धर्मगर्हितम् ।
चाण्डालस्वस्य हरणं अभक्ष्यस्य विशेषतः ॥ ४५६

वि० उ०—यथा यथैव जीवेद्धि तत्कर्तव्यमहेलया ।
जीवितं मरणाच्छ्रेयो जीवन् धर्ममवाप्नुयात् ॥ ४५७

श्व० उ०—पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै विशः ।
यथाशास्त्रं प्रमाणं ते माऽभक्ष्ये मानसं कृथाः ॥ ४५८

वि० उ०—अगस्त्येनासुरो जग्धो वातापिः क्षुधितेन वै ।
अहमापद्गतः क्षुत्तो भक्षयिष्ये श्वजाघनीम् ॥ ४५९

श्व० उ०—असता यत्समाचीर्णं न स धर्मः सनातनः ।
नाकार्यमिह कार्यं वै मा छलेनाशुभं कृथाः ॥ ४६०

वि० उ०—यद् ब्राह्मणार्थे कृतमर्थितेन तेनर्षिणा तदवस्थाधिकारे ।
स वै धर्मो यत्र न पापमस्ति सर्वैरुपायैर्गुरवो हि रक्ष्याः ॥ ४६१

मित्रं च मे ब्राह्मणस्यायमात्मा प्रियश्च मे पूज्यतमश्च लोके ।
तं भर्तुकामोऽहमिमां जिहीर्षे नृशंसानामीदृशानां न बिभ्ये ॥ ४६२

श्व० उ०—गोपनीयमिदं दुःखमिति मे निश्चिता मतिः ।
दुष्कृतोऽब्राह्मणः सत्र यस्त्वामहमुपालभे ॥ ४६३

वि० उ०—पिबन्त्येवोदकं गावो मण्डूकेषु रुवत्स्वपि ।
न तेऽधिकारो धर्मेऽस्ति मा भूरात्मप्रशंसकः ॥ ४६४

श्व० उ०—यद्येष हेतुस्तव खादनेऽस्य न ते वेदः कारणं नार्यधर्मः ।
तस्माद्भक्ष्येऽभक्षणे वा द्विजेन्द्र दोषं न पश्यामि यथेदमत्र ॥ ४६५

वि० उ०—नैवातिपापं भक्षमाणस्य दृष्टं सुरां तु पीत्वा पततीति शब्दः ।
अन्योन्यकार्याणि यथा तथैव न पापमात्रेण कृतं हिनस्ति ॥ ४६६

श्व० उ०—अस्थानतो हीनतः कात्सिताद्वा यद्विद्वांसं बाधते साधुवृत्तम् ।
श्वानं पुनर्यो लभतेभिसंगात्तेनापि दण्डः सहितव्य एव ॥ ४६७

एवमुक्त्वा निववृते मातङ्गः कौशिकं तदा ।
विश्वामित्रो जहारैव कृतबुद्धिः श्वजाघनीम् ॥ ४६८

ततोऽग्निमुपसंहृत्य ब्राह्मेण विधिना मुनिः ।
ऐंद्राग्नेयेन विधिना चरु श्रपयत स्वयम् ॥ ४६९

ततः समारभत्कर्म दैवं पित्र्यं च भारत ।
आहूय देवानिंद्रादीन् भागं भागं विधिक्रमात् ॥ ४७०

एतस्मिन्नेव काले तु प्रववर्ष स वासवः ।
संजीवयन् प्रजाः सर्वा जनयामास चौषधीः ॥ ४७१

विश्वामित्रोऽपि भगवांस्तपसा दग्धकिल्मिषः ।
कालेन महता सिद्धिमवाप परमाद्भुताम् ॥ ४७२

एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः ।
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥ ४७३

एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् ।
जीवन् पुण्यमवाप्नोति पुरुषो भद्रमश्नुते ॥ ४७४

यु० उ—पापस्य यदधिष्ठानं यतः पाप प्रवर्तते ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ ॥ ४७५

भी० उ०—एको लोभो महाग्राहो लोभात्पापं प्रवर्तते ।
अज्ञानं चातिलोभश्चाप्येकं जानीहि पार्थिव ॥ ४७६

वाग्वेगो मनसो वेगो निंदावेगस्तथैव च ।
उपस्थोदरयोर्वेगः मृत्युवेगश्च दारुणः ॥ ४७७
सुमहान्त्यपि शास्त्राणि धारयंति बहुश्रुताः ।
छेत्तारः संशयानां च क्लिश्यंतीहाल्पबुद्धयः ॥ ४७८
दर्पः क्रोधो मदः स्वप्नो हर्षः शोकोभिमानिता ।
अत एव हि कौरव्य दृश्यंते लुब्धबुद्धिषु ॥ ४७९
कामक्रोधव्यपेता ये निर्ममा निरहङ्कृताः ।
सुव्रताः स्थिरमर्यादास्तानुपास्व च पृच्छ च ॥ ४८०

## मोक्षधर्म.

यु० उ०—धर्माः पितामहेनोक्ता राजधर्माश्रिताः शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि पार्थिव ॥ ४८१
भी० उ०—सर्वत्र विहितो धर्मः सत्यं प्रेत्य तपःफलम् ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ ४८२
यस्मिन् यस्मिंस्तु विषये यो यो याति विनिश्चयम् ।
स तमेवाभिजानाति नान्यं भरतसत्तम ॥ ४८३
यथा यथा च पर्येति लोकतंत्रमसारवत् ।
तथा तथा विरागोऽत्र जायते नात्र संशयः ॥ ४८४
एवं व्यवसिते लोके बहुदोषे युधिष्ठिर ।
आत्ममोक्षनिमित्तं वै यतेत मतिमान्नरः ॥ ४८५
किन्नु मुह्यसि मूढस्त्वं शोच्यः किमनुशोचसि ।
यदा त्वामपि शोचन्तः शोच्या यास्यंति तां गतिम् ॥ ४८६
अदर्शनादापतितः पुनश्चादर्शनं गतः ।
न त्वासौ वेद न त्वं तं कः सन् किमनुशोचसि ॥ ४८७
स्नेहपाशैर्बहुधैराविष्टविषया जनाः ।
अकृतार्था विषीदंते जलैः सैकतसेतवः ।
स्नेहेन तिलवत्सर्वं सर्गचक्रे निपीड्यते ॥ ४८८
पुत्रदारकुटुंबेषु प्रसक्ताः सर्वमानवाः ।
शोकपंकार्णवे मग्ना जीर्णा वनगजा इव ॥ ४८९
ये च मूढतमा लोके ये च बुद्धेः परं गताः ।
ते नराः सुखमेधन्ते क्लिश्यत्यंतरितो जनः ॥ ४९०

सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ॥ ४९१
पूर्वदेहकृतं कर्म शुभं वा यदि वाऽशुभम् ।
प्राज्ञं मूढं तथा शूरं भजते यादृश कृतम् ॥ ४९२
एतां बुद्धिं समास्थाय सुखमास्ते गुणान्वितः ।
सर्वकामाञ्जुगुप्सेत क्रोधं कुर्वीत पृष्ठतः ॥ ४९३
पुष्पाणीव विचिन्वंतमन्यत्र गतमानसम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ ४९४
अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगादयम् ।
न हि प्रतीक्षते मृत्युः कृतमस्य न वाऽकृतम् ॥ ४९५
इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ।
एवमीहासुखासक्तं कृतान्तः कुरुते वशे ॥ ४९६
मृत्योर्वा मुखमेतद्वै या ग्रामे वसतो रतिः ।
देवानामेष वै गोष्ठो यदरण्यमिति श्रुतिः ॥ ४९७
न हिंसयति यो जंतून् मनोवाक्कायहेतुभिः ।
जीवितार्थापनयनैः प्राणिभिर्न स हिंस्यते ॥ ४९८
न मृत्युसेनामायांतीं जातु कश्चित्प्रबाधते ।
ऋते सत्यमसत्त्याज्य सत्ये ह्यमृतमाश्रितम् ॥ ४९९
तस्मात्सत्यव्रताचारः सत्ययोगपरायणः ।
सत्यागमः सदा दांतः सत्येनैवांतकं जयेत् ॥ ५००
सर्वसाम्यमनायासः सत्यवाक्यं च भारत ।
निर्वेदश्चाविधित्सा च यस्य स्यात्स सुखी नरः ॥ ५०१
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ५०२
पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ।
तद्विधास्ते मनुष्याणां येषां धर्मो न कारणम् ॥ ५०३
यु० उ०—पंचात्मके पंचरतौ पंचविज्ञानचेतने ।
शरीरे प्राणिनां जीवं वेत्तुमिच्छामि यादृशम् ॥ ५०४
मांसशोणितसंघाते मदस्नाय्वस्थिसंचये ।
भिद्यमाने शरीरे तु जीवो नैवोपलभ्यते ॥ ५०५

यद्यजीवं शरीरं तु पंचभूतसमन्वितम् ।
शारीरे मानसे दुःखे कस्तां वेदयते रुजम् ॥ ५०६
श्रृणोति कथितं जीव. कर्णाभ्यां न शृणोति सः ।
महर्षे मनसि व्यग्रे तस्माज्जीवो निरर्थकः ॥ ५०७
भी० उ०—आपोमयमिदं सर्वमापो मूर्तिः शरीरिणाम् ।
तत्रात्मा मानसो ब्रह्मा सर्वभूतेषु लोककृत् ॥ ५०८
आत्मा क्षेत्रज्ञ इत्युक्तः संयुक्तः प्राकृतैर्गुणैः ।
तैरेव तु विनिर्मुक्तः परमात्मेत्युदाहृतः ॥ ५०९
तं पूर्वापररात्रेषु युञ्जानः सततं बुधः ।
लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ॥ ५१०
मानसोऽग्निः शरीरेषु जीव इत्यभिधीयते ।
सृष्टिः प्रजापतेरेषा भूताध्यात्मविनिश्चये ॥ ५११
चक्षुरालोकनायैव संशयं कुरुते मनः ।
बुद्धिरध्यवसानाय क्षेत्रज्ञः साक्षिवत्स्थितः ॥ ५१२
यु० उ०—अस्माल्लोकात्परो लोकः श्रूयते न च लभ्यते ।
तमहं ज्ञातुमिच्छामि तद्भवान् वक्तुमर्हति ॥ ५१३
भी० उ०—उत्तरे हिमवत्पार्श्वे पुण्ये सर्वगुणान्विते ।
पुण्यः क्षेम्यश्च काम्यश्च स परो लोक उच्यते ॥ ५१४
स स्वर्गसदृशो देशस्तत्र ह्युक्ताः शुभा गुणाः ।
काले मृत्युः प्रभवति स्पृशंति व्याधयो न च ॥ ५१५
न लोभः परदारेषु स्वदारानिरतो जनः ।
नान्योन्यं बध्यते तत्र द्रव्येषु च न विस्मयः ॥ ५१६
कर्मभूमिरियं लोके इह कृत्वा शुभाऽशुभम् ।
शुभैः शुभमवाप्नोति तथाऽशुभमथान्यथा ॥ ५१७
उत्तरः पृथिवीभागः सर्वपुण्यतमः शुभ ।
इहस्थास्तत्र जायन्ते ये वै पुण्यकृतो जनाः ॥ ५१८

---

## ९

भी० उ०—हंत ते कथयिष्यामि ध्यानयोगं चतुर्विधम् ।
यं ज्ञात्वा शाश्वतीं सिद्धिं गच्छन्तीह महर्षयः ॥ ५१९

नावर्तन्ते पुनः पार्थ मुक्ताः संसारदोषतः ।
जन्मदोषपरिक्षीणाः स्वभावे पर्यवस्थिताः ॥ ५२०
असंगान्यविवादीनि मनःशांतिकराणि च ।
तत्र ध्यानेन संश्लिष्टमेकाग्रं धारयेन्मनः ।
पिंडीकृत्येन्द्रियग्राममासीनं काष्ठवन्मुनिः ॥ ५२१
विसंचारि निरालंबं पचद्वारं चलाचलम् ।
पूर्वं ध्यानपथे धीरः समादध्यान्मनोऽतरा ॥ ५२२
जलबिंदुर्यथा लोलः पर्णस्थः सर्वतश्चलः ।
एवमेवास्य चित्तं च भवति ध्यानवर्त्मनि ॥ ५२३
विचारश्च विवेकश्च वितर्कश्चोपजायते ।
मुनेः समादधानस्य प्रथम ध्यानमादितः ॥ ५२४
मनसा क्लिश्यमानस्तु समाधानं च कारयेत् ।
न निर्वेदं मुनिर्गच्छेत्कुर्यादेवात्मनो हितम् ॥ ५२५
स्वयमेव मनश्चैव पंचवर्ग च भारत ।
पूर्वं ध्यानपथे स्थाप्य नित्ययोगेन शाम्यति ॥ ५२६
न तत्पुरुषकारेण न च दैवेन केनचित् ।
सुखमेष्यति तत्तस्य यदेवं संयतात्मनः ॥ ५२७
सुखेन तेन संयुक्तो रस्यते ध्यानकर्मणि ।
गच्छन्ति योगिनो ह्येवं निर्वाणं तन्निरामयम् ॥ ५२८
साख्ययोगौ तौ यावुक्तौ मुनिभिर्मोक्षदर्शिभिः ।
सन्यास एव वेदान्ते वर्तते जपनं प्रति ।
मन.समाधिरत्रापि तथेन्द्रियजयः स्मृतः ॥ ५२९
योगजापकयोर्दृष्टं फलं समुहदय वै ।
सर्वाल्लोकानतिक्रम्य गच्छेता यत्र वांछितम् ॥ ५३०
यु० उ०—किं फलं ज्ञानयोगस्य वेदानां नियमस्य च ।
भूतात्मा च कथं ज्ञेयस्तन्मे ब्रूहि पितामह ॥ ५३१
भी० उ०—यथा हिमवतः पार्श्वं पृष्ठं चंद्रमसो यथा ।
न दृष्टपूर्व मनुजैर्न च तन्नास्ति तावता ॥ ५३२
तद्वद्भूतेषु भूतात्मा सूक्ष्मो नानात्मवानसौ ।
अदृष्टपूर्वश्चक्षुर्भ्यां न चासौ नास्ति तावता ॥ ५३३

पश्यन्नपि यथा लक्ष्म जगत्सोमे न विंदति ।
एवमस्ति न चोत्पन्नं न च तन्न परायणम् ॥ ५३४
अहिरेव ह्यहेः पादान् पश्यतीति हि नः श्रुतम् ।
तद्वन्मूर्तिषु मूर्तिस्थं ज्ञेयं ज्ञानेन पश्यति ॥ ५३५
यथा चंद्रो ह्यमावास्यामलिंगत्वान्न दृश्यते ।
न च नाशोऽस्य भवति तथा विद्धि शरीरिणम् ॥ ५३६
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथादर्शतले प्रख्ये पश्यत्यात्मानमात्मनि ॥ ५३७
प्रसृतैरिंद्रियैर्दुःखी तैरेव नियतैः सुखी ।
तस्मादिंद्रियरूपेभ्यो यच्छेदात्मानमात्मना ॥ ५३८
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ ५३९
सुखाद्बहुतरं दुःखं जीविते नात्र संशयः ।
स्निग्धस्य चेंद्रियार्थेषु मोहान्मरणमप्रियम् ॥ ५४०
यदा कर्मगुणोपेता बुद्धिर्मनसि वर्तते ।
तदा प्रज्ञायते ब्रह्म ध्यानयोगसमाधिना ॥ ५४१
यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्वजम् ।
तदा प्रज्ञायते ब्रह्म निकषं निकषे यथा ॥ ५४२
अव्यक्तस्येह विज्ञाने नास्ति तुल्यं निदर्शनम् ।
यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयात् ॥ ५४३
ज्ञानेन निर्मलीकृत्य बुद्धिं बुद्ध्या मनस्तथा ।
मनसा चेंद्रियग्राममक्षरं प्रतिपद्यते ॥ ५४४
शैशिरस्तु यथा धूमः सूक्ष्मः संश्रयते नभः ।
तथा देहाद्विमुक्तस्य पूर्वरूपं भवत्युत ॥ ५४५
अथ धूमस्य विरमे द्वितीयं रूपदर्शनम् ।
जलरूपमिवाकाशे तथैवात्मनि पश्यति ॥ ५४६
अपां व्यतिक्रमे चास्य वह्निरूपं प्रकाशते ।
तस्मिन्नुपरतेऽजोऽस्य वीतशस्त्रः प्रकाशते ॥ ५४७
अथ श्वेतां गतिं गत्वा वायव्यं सूक्ष्ममप्युत ।
अशुक्लं चेतसः सौक्ष्म्यमप्युक्तं ब्राह्मणस्य वै ॥ ५४८

एतेष्वपि हि जातेषु फलजातानि मे शृणु ।
जातस्य पार्थिवैश्वर्यैः शरीरात्सृजते प्रजाः ॥ ५४९
अंगुल्यंगुष्ठमात्रेण हस्तपादेन वा तथा ।
वर्णतो गृह्यते चापि कामात्पिबति चाशयात् ॥ ५५०
अहंकारेऽस्य विजिते पंचैते स्युर्वशानुगाः ।
षण्णामात्मनि बुद्धौ च जितायां प्रभवत्युत ॥ ५५१
निर्दोषप्रतिभा ह्येनं कृत्स्ना समभिवर्तते ।
तथैव व्यक्तमात्मानमव्यक्तं प्रतिपद्यते ॥ ५५२
प्रोक्तं तद्व्यक्तमित्येव जायते वर्धते च यत् ।
जीर्यते म्रियते चैव चतुर्भिर्लक्षणैर्युतम् ॥ ५५३
विपरीतमतो यत्तु तदव्यक्तमुदाहृतम् ।
द्वावात्मानौ च वेदेषु सिद्धांतेष्वप्युदाहृतौ ॥ ५५४
अस्पृहः सर्वकामेभ्यो ब्रह्मचर्यदृढव्रतः ।
अहिंस्रः सर्वभूतानामीदृक्सांख्यो विमुच्यते ॥ ५५५
नान्यत्र विद्यातपसो नान्यत्रेंद्रियनिग्रहात् ।
नान्यत्र सर्वसंत्यागात्सिद्धिं विंदति कश्चन ॥ ५५६
सांख्यज्ञानेन संयुक्तं यदेतत्कीर्तितं मया ।
योगकृत्यं तु ते सर्वं वर्तयिष्यामि तच्छृणु ॥ ५५७
कुर्यात्परिचियं योगे त्रैकाल्ये नियतो मुनिः ।
गिरिशृंगे तथा चैत्ये वृक्षाग्रेषु च योजयेत् ॥ ५५८
सन्नियम्येंद्रियग्रामं कोष्ठे भांडमना इव ।
एकाग्रं चिंतयेन्नित्यं योगान्नोद्विजयेन्मनः ॥ ५५९
अपि वर्णावकृष्टस्तु नारी वा धर्मकाङ्क्षिणी ।
तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ॥ ५६०
अजं पुराणमजरं सनातनं यदिंद्रियैरुपलभेत निश्चलैः ।
अणोरणीयो महतो महत्तरं तदात्मना पश्यति मुक्तपात्मवान् ॥ ५६१

---

## १०

यु० उ०—यदिदं वेदवचनं लोकवादे विरुध्यते ।
प्रमाणे वाऽप्रमाणे वा विरुद्धे शास्त्रता कुतः ॥ ५६२

भी० उ०—ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
यथोक्तचारिणः सर्वे गच्छंति परमां गतिम् ॥ ५६३
एको वाप्याश्रमानेतान् योऽनुतिष्ठेद्यथाविधि ।
अकामद्वेषसंयुक्तः स परत्र विधीयते ॥ ५६४
आयुषश्च चतुर्भागं ब्रह्मचार्यनुसूयकः ।
गुरौ वा गुरुपुत्रे वा वसेद्धर्मार्थकोविदः ॥ ५६५
जघन्यशायी पूर्वस्मादुत्थाय गुरुवेश्मनि ।
यच्च शिष्येण कर्तव्यं कार्यं दासेन वा पुनः ५६६
कर्मातिशेषेण गुरावध्येतव्यं बुभूषता ।
दक्षिणोऽनपवादी स्यादाहूतो गुरुमाश्रयेत् ॥ ५६७
वेदव्रतोपवासेन चतुर्थे चायुषे गते ।
गुरवे दक्षिणां दत्वा समावर्तेद्यथाविधि ॥ ५६८
द्वितीयमायुषो भागं गृहमेधी गृहे वसेत् ।
धर्मलब्धैर्युतो दारैरग्नीनाहृत्य सुव्रतः ॥ ५६९
गृहमेधिव्रतान्यत्र महांतीह प्रचक्षते ।
नात्मार्थे पाचयेदन्नं न वृथा घातयेत्पशून् ॥ ५७०
प्राणी वा यदि वाऽप्राणी संस्कार यजुषार्हति ।
न दिवा प्रस्वपेज्जातु न पूर्वापररात्रिषु ॥ ५७१
न भुंजीतांतरा काले नानृतावाह्वयेत्स्त्रियम् ।
नास्यानश्नन् गृहे विप्रो वसेत्कश्चिदपूजितः ॥ ५७२
विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः ।
विघसं भृत्यशेषं तु यज्ञशेषमथामृतम् ॥ ५७३
ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः ।
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबंधिबांधवैः ॥ ५७४
मातापितृभ्यां जामीभिः भ्रात्रा पुत्रेण भार्यया ।
दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥ ५७५
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः ।
छाया स्वा दासवर्गश्च दुहिता कृपणं परम् ॥ ५७६
न चार्थबद्धः कर्माणि धर्मवान् कश्चिदाचरेत् ॥ ५७७
तृतीयमायुषो भागं वानप्रस्थाश्रमे वसेत् ।
तानेवाग्नीन् परिचरेद्यजमानो दिवौकसः ॥ ५७८

सद्यः प्रक्षालकाः केचित्केचिन्मासिकसंचयाः ।
वार्षिकं संचयं केचित्केचिद्द्वादशवार्षिकम् ।
कुर्वन्त्यतिथिपूजार्थं यज्ञतंत्रार्थमेव वा ॥ ५७९

चतुर्थे चायुषः शेषे वानप्रस्थाश्रमं त्यजेत् ।
सद्यस्कारां निरूप्येष्टिं सर्ववेदसदक्षिणाम् ॥ ५८०
आत्मयाजी आत्मरतिरात्मक्रीडात्मसंशयः ।
आत्मन्यग्निं समारोप्य त्यक्त्वा सर्वपरिग्रहान् ॥ ५८१

अभयं सर्वभूतेभ्यो दत्वा यः प्रव्रजेद्द्विजः ।
लोकास्तेजोमयास्तस्य प्रेत्य चानंत्यमश्नुते ॥ ५८२

यु० उ०—कोऽयं धर्मः कुतो धर्मस्तन्मे ब्रूहि पितामह ।
धर्मः स्वयमिहार्थः किममुत्रार्थोऽपि वा भवेत् ॥ ५८३

भी० उ०—सदाचारः स्मृतिर्वेदाः त्रिविधं धर्मलक्षणम् ।
चतुर्थमर्थमित्याहुः कवयो धर्मलक्षणम् ॥ ५८४
लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः ।
उभयत्र सुखोदर्क इहैव व परत्र च ॥ ५८५

नच पापकृतः पापाद्मुच्यन्ते केचिदापदि ।
अपापवादी भवति यथा भवति धर्मकृत् ।
धर्मस्य निष्ठा त्वाचारस्तमेवाश्रित्य भोत्स्यसे ॥ ५८६

सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ॥ ५८७
न हर्तव्यं परधनं इति धर्मः सनातनः ।
मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रवर्तितम् ॥ ५८८

यदा नियतिदौर्बल्यमथैषामेव रोचते ।
न ह्यत्यंतबलवन्तो भवंति सुखिनोऽपि वा ॥ ५८९

दातव्यमित्ययं धर्म उक्तो भूतहिते रतैः ।
तं मन्यन्ते धनयुताः कृपणैः संप्रवर्तितम् ॥ ५९०

यदा नियतिकार्पण्यमथैषामेव रोचते ।
न ह्यत्यन्तधनवंतो भवान्ति सुखिनोऽपि वा ॥ ५९१

यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत्परेषु कर्तव्यं जानन्नप्रियमात्मनः ।
योऽन्यस्य स्यादुपपतिः स कं किं वक्तुमर्हति ॥ ५९२

अतिरिक्तैः संविभजेद्भोगैरन्यानकिंचनान् ।
एतस्मात्कारणाद्धात्रा कुसीदं संप्रवर्तितम् ॥ ५९३
सर्व प्रियाभ्युपगतं धर्ममाहुर्मनीषिणः ।
पश्यैतं लक्षणोद्देशं धर्माधर्मे युधिष्ठिर ॥ ५९४
धर्मलक्षणमाख्यातं एतत्ते कुरुसत्तम ।
तस्मादनार्जवे बुद्धिर्न ते कार्या कदाचन ॥ ५९५

इति श्रीसंक्षिप्तमहाभारते शान्तिपर्व समाप्तम् । श्लो सं. ५९५.



# १३ अनुशासनपर्व.

युः उ०—शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
स्वकृते का तु शान्तिः स्याच्छमाद्बहुविधादपि ॥ १
रुधिरेणावसिक्तांग प्रस्रवंतं यथाचलम् ।
त्वां दृष्ट्वा पुरुषव्याघ्र सीदेद्वर्षास्विवांबुजम् ॥ २
वयं हि धार्तराष्ट्राश्च काममन्युवशं गताः ।
कृत्वेदं निंदितं कर्म प्राप्स्यामः कां गतिं नृप ॥ ३
इदं तु धार्तराष्ट्रस्य श्रेयो मन्ये जनाधिप ।
इमामवस्थां संप्राप्तं यदसौ त्वां न पश्यति ॥ ४
अन्यस्मिन्नपि लोके वै यथा मुच्येत किल्बिषात् ।
तथा प्रशाधि मा वीर मम चेदिच्छसि प्रियम् ॥ ५
भी० उ०—परतंत्रं कथं हेतुमात्मानमनुपश्यसि ।
कर्मणा हि महाभाग सूक्ष्मं ह्येतदतींद्रियम् ॥ ६
नैतत्त्वया कृतं कर्म नापि दुर्योधनेन वै ।
कालेनैतत्कृतं विद्धि निहता येन पार्थिवाः ॥ ७
यु० उ०—दैवे पुरुषकारे च किंस्विच्छ्रेष्ठतरं भवेत् ।
भी० उ०—नाबीजं जायते किंचिन्न बीजेन विना फलम् ॥ ८
यथा बीजं विना क्षेत्रमुप्तं भवति निष्फलम् ।
तथा पुरुषकारेण विना दैवं न सिध्यति ॥ ९
क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम् ।
क्षेत्रबीजसमायोगात्ततः सस्यं समृध्यते ॥ १०
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं फलति सर्वत्र नाकृतं भुज्यते क्वचित् ॥ ११
ज्योतींषि त्रिदशा नागा यक्षाश्चंद्रार्कमारुताः ।
सर्वे पुरुषकारेण मानुष्याद्देवतां गताः ॥ १२
अर्थो वा मित्रवर्गो वा ऐश्वर्यं वा कुलान्वितम् ।
श्रीश्चापि दुर्लभा भोक्तुं तथैवाकृतकर्मभिः ॥ १३
नादातारं भजंत्यर्थी न क्लीबं नापि निष्क्रियम् ।
नाकर्मशीलं नाशूरं तथा नैवातपस्विनम् ॥ १४
अकृत्वा मानुषं कर्म यो दैवमनुवर्तते ।
वृथा श्राम्यति संप्राप्य पतिं क्लीबमिवांगना ॥ १५

आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ।
आत्मैव ह्यात्मनः साक्षी कृतस्याप्यकृतस्य च ॥ १६
दैवानां शरणं पुण्यं सर्वं पुण्यैरवाप्यते ।
पुण्यशीलं नरं प्राप्य किं दैवं प्रकरिष्यति ॥ १७

यु० उ०—कर्मणां च समस्तानां शुभानां भरतर्षभ ।
फलानि महतां श्रेष्ठ प्रब्रूहि परिपृच्छतः ॥ १८

भी० उ०—न नश्यति कृतं कर्म सदा पंचेंद्रियैः सह ।
ते ह्यस्य साक्षिणो नित्यं षष्ठ आत्मा तथैव च ॥ १९

चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
अनुव्रजेदुपासीत स यज्ञः पंचदक्षिणः ॥ २०
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ।
श्रातायादृष्टपूर्वाय तस्य पुण्यफलं महत् ॥ २१
वीरासनं वीरशय्यां वीरस्थानमुपागतः।
अक्षयास्तस्य ते लोकाः सर्वकामगमास्तथा ॥ २२
धनं लभेत दानेन मौनेनाज्ञां विशाम्पते ।
उपभोगांश्च तपसा ब्रह्मचर्येण जीवितम् ॥ २३
रूपमैश्वर्यमारोग्यमहिंसाफलमश्नुते ।
फलमूलाशिनो राज्यं स्वर्गः पर्णाशिनां भवेत् ॥ २४
अधीत्य सर्वान् वेदान् वै सद्यो दुःखाद्विमुच्यते ।
मानसं हि चरन् धर्मं स्वर्गलोकमुपाश्नुते ॥ २५
येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः ।
प्रीणाति मातरं येन पृथिवी तेन पूजिता ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ २६

यु० उ०—कीदृशे पुरुषे तात स्त्रीषु वा पुरुषर्षभ ।
श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ॥ २७

भी० उ० —नारायणस्यांकगतां ज्वलंतीं दृष्ट्वा श्रियं पद्मसमानवर्णाम् ।
कौतूहलाद्विस्मितचारुनेत्रा पप्रच्छ माता मकरध्वजस्य ॥ २८
कानीह भूतान्युपसेवसे त्वं संतिष्ठसे कानिव सेवसे त्वम् ॥ २९

श्री० उ०—वसामि नित्यं सुभगे प्रगल्भे दक्षे नरे कर्मणि वर्तमाने ।
अक्रोधने देवपरे कृतज्ञे जितेंद्रिये नित्यमुदीर्णसत्त्वे ॥ ३०

नाकर्मशीले पुरुषे वसामि न नास्तिके सांकरिके कृतघ्ने ।
न भिन्नवृत्ते न नृशंसवर्णे न चापि चौरे न गुरुष्वसूये ॥ ३१
ये चाल्पतेजोबलसत्वमानाः क्लिश्यंति कुप्यंति च यत्र तत्र ।
न चैव तिष्ठामि तथाविधेषु नरेषु संगुप्तमनोरथेषु ॥ ३२
यश्चात्मनि प्रार्थयते न किंचिद्यश्च स्वभावोपहतांतरात्मा ।
तेष्वल्पसंतोषपरेषु नित्यं नरेषु नाहं निवसामि देवि ॥ ३३
प्रकीर्णभाण्डामनपेक्षकारिणीं सदा च भर्तुः प्रतिकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जामेवंविधां स्त्री परिवर्जयामि ॥ ३४
सत्यासु नित्यप्रियदर्शनासु सौभाग्ययुक्तासु गुणान्वितासु ।
वसामि नारीषु पतिव्रतासु कल्याणशीलासु विभूषितासु ॥ ३५
दानेषु कन्यासु विभूषणेषु यज्ञेषु मेघेषु च वृष्टिमत्सु ।
वसामि फुल्लासु च पद्मिनीषु नक्षत्रवीथीषु च शारदीषु ॥ ३६
नदीषु हंसस्वननादितासु तपस्विसिद्धद्विजसेवितासु ।
मत्ते गजे गोवृषभे नरेंद्रे सिंहासने सत्पुरुषे च नित्यम् ।
नारायणे त्वेकमना वसामि तस्मिन् हि धर्मः सुमहान्निविष्टः ॥ ३७
नाहं शरीरेण वसामि देवि नैवं मया शक्यमिहाभिधातुम् ।
भावेन नित्यं निवसामि पुंसि संवर्धते धर्मयशोऽर्थकामैः ॥ ३८

---

## २

यु० उ० —अनेकांतं बहुद्वारं धर्ममाहुर्मनीषिणः ।
किं निश्चितं भवेदेतत्तन्मे ब्रूहि पितामह ॥ ३९
भी० उ० —अहिंसा सत्यमक्रोध आनृशंस्यं दमस्तथा ।
आर्जवं चैव राजेंद्र निश्चितं धर्मलक्षणम् ॥ ४०
ब्रह्मचर्यात्परं तात मधुमांसस्य वर्जनम् ।
मर्यादायां स्थितो धर्मः शमश्चैवास्य लक्षणम् ॥ ४१
कल्यमर्थं निषेवेत ततो धर्ममनंतरम् ।
पश्चात्काम निषेवेत न च गच्छेत्प्रसंगिताम् ॥ ४२
ब्राह्मणाश्चैव मन्येत गुरूंश्चाप्यभिपूजयेत् ।
सर्वभूतानुलोमः स्यान्मृदुशीलः प्रियंवदः ॥ ४३
अधिकारे यदनृतं यच्च राजसु पैशुनम् ।
गुरोश्चालीककरणं तुल्यं तद्ब्रह्महत्यया ॥ ४४

प्रहरेन्न नरेन्द्रेषु न हन्याद्गां तथैव च ।
नाग्निं परित्यजेज्जातु न च वेदान् परित्यजेत् ॥ ४५
यु० उ०—श्राद्धकाले च दैवे च पित्र्येऽपि च पितामह ।
इच्छामीह त्वयाख्यातं विहितं यत्सुरर्षिभिः ॥ ४६
भी० उ०—दैवं पूर्वाह्णिकं कुर्यादपराह्णे तु पैतृकम् ।
मनुष्याणां तु मध्यान्हे प्रदद्यादुपपत्तिभिः ॥ ४७
लंघितं चावलीढं च कलिपूर्वं च यत्कृतम् ।
केशकीटावपतितं क्षुतं श्वभिरवेक्षितम् ॥ ४८
निरोकारेण यद्भुक्त सशस्त्रेण च भारत ।
परोच्छिष्टं च यद्भुक्तं परिभुक्त च यद्भवेत् ।
रुदितं चावधूतं च भागं तं रक्षसां विदुः ॥ ४९
यावन्तः पतिना विप्रा जडोन्मत्तास्तथैव च ।
चिकित्सका देवलका वृथानियमधारिणः ॥ ५०
होतारो वृषलानां च वृषलाध्यापकास्तथा ।
तथा वृषलशिष्याश्च राजन्नार्हति केतनम् ॥ ५१
ऋणकर्ता च यो राजन् यश्च वार्धुषिको नरः ।
प्राणिविक्रयवृत्तिश्च राजन्नार्हति केतनम् ॥ ५२
क्षात्रधर्माणमप्याजौ केतयेत्कुलजं द्विजम् ।
न त्वेव वणिजं तात श्राद्धे च परिकल्पयेत् ॥ ५३
श्राद्धापवर्गे विप्रस्य स्वधा वै मुदिता भवेत् ।
क्षत्रियस्यापि यो ब्रूयात्प्रीयंतां पितरस्त्विति ।
अक्षय्यं चापि वैश्यस्य स्वस्ति शूद्रस्य भारत ॥ ५४
पुण्याहवाचन दैवे ब्राह्मणस्य विधीयते ॥ ५५
एतदेव निरोंकार क्षत्रियस्य विधीयते ।
वैश्यस्य दैवे वक्तव्यं प्रीयंतां देवता इति ॥ ५६
जातकर्मादिकाः सर्वास्त्रिषु वर्णेषु भारत ।
ब्रम्हक्षत्रे हि मंत्रोक्ता वैश्यस्य च युधिष्ठिर ॥ ५७
युं० उ०—किं राज्ञः सर्वकृत्यानां गरीयः स्यात्पितामह ।
कुर्वन् किं कर्म नृपतिरुभौ लोकौ समश्नुते ॥ ५८
भी० उ०—श्रोत्रियान् ब्राह्मणान् वृद्धान् नित्यमेवाभिपूजयेत् ।
सांत्वेन भोगदानेन नमस्कारैस्तथार्चयेत् ॥ ५९

एतत्कृत्यतमं राज्ञो नित्यमेवोपलक्षयेत् ।
यथात्मानं यथा पुत्रांस्तथैतान् प्रतिपालयेत् ॥ ६०
तेषु शांतेषु तद्राष्ट्रं सर्वमेव विराजते ।
निःशेषं कुपिताः कुर्युरुग्राः सत्यपराक्रमाः ॥ ६१
बिभ्यत्येषां साहसिका गुणास्तेषामतीव हि ।
कूपा इव तृणच्छन्ना विशुद्धा द्यौरिवापरे ॥ ६२
प्रसह्यकारिणः केचित्कार्पासमृदवः परे ।
संति चैषामतिशठास्तथैवान्ये तपस्विनः ॥ ६३
कृषिगोरक्ष्यमप्येके भैक्ष्यमन्येऽप्यनुष्ठिताः ।
चौराश्चान्येऽनृताश्चान्ये तथान्ये नटनर्तकाः ॥ ६४
नानाकर्मसु रक्तानां बहुकर्मोपजीविनाम् ।
धर्मज्ञानं सतां तेषां नित्यमेवानुकीर्तयेत् ॥ ६५
अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् ।
यमिच्छेयुः स राजा स्याद्यो नेष्टः स पराभवेत् ॥ ६६
परिवादं च ये कुर्युर्ब्राह्मणानामचेतसः ।
सत्यं ब्रवीमि ते राजन् विनश्येयुर्न संशयः ॥ ६७
यु० उ०—यन्मूलं सर्वधर्माणां स्वजनस्य गृहस्य च ।
पितृदेवातिथीनां च तन्मे ब्रूहि पितामह ॥ ६८
भी० उ०—शीलवृत्ते समाज्ञाय विद्यां योनिं च कर्म च ।
सद्भिरेवं प्रदातव्या कन्या गुणवते वरे ॥ ६९
अन्योऽप्यथ न विक्रेयो मनुष्यः किं पुनः प्रजाः ।
अधर्ममूलैर्हि धनैस्तैर्न धर्मोऽथ कश्चन ॥ ७०
यस्यां किंचिन्नाददते ज्ञातयो न स विक्रयः ।
अर्हणं तत्कुमारीणामानृशंस्यतमं च तत् ॥ ७१
पितृभिर्भ्रातृभिश्चापि श्वशुरैरथ देवरैः ।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ ७२
स्त्रियो यत्र हि पूज्यंते रमंते तत्र देवताः ।
अपूजिताश्च यत्रैताः सर्वास्तत्राफलाः क्रियाः ॥ ७३
जामीशप्तानि गेहानि निकृत्तानीव कृत्यया ।
नैव भांति न वर्धंते श्रिया हीनानि पार्थिव ॥ ७४

अबलाः स्वल्पकौपीनाः सुहृदः सत्यजिष्णवः ।
ईर्ष्यवो मानकामाश्च चंडाश्चासुहृदोऽबुधाः ॥ ७५
स्त्रियस्तु मानमर्हंति ता मानयत मानवाः ।
स्त्रीप्रत्ययो हि वै धर्मो रतिभोगाश्च केवलाः ॥ ७६
उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रीत्यर्थं लोकयात्रायाः पश्यत स्त्रीनिबंधनम् ॥ ७७
विदेहराजदुहिता चात्र श्लोकमगायत ॥ ७८
नास्ति यज्ञक्रिया काचिन्न श्राद्धं नोपवासकम् ।
धर्मः स्वभर्तृशुश्रूषा तया स्वर्गं जयंत्युत ॥ ७९
श्रिय एताः स्त्रियो नाम सत्कार्या भूतिमिच्छता ।
पालिता निगृहीता च श्रीः स्त्री भवति भारत ॥ ८०

---

## ३

यु० उ०—आरामाणां तडागानां यत्फलं कुरुपुंगव ।
तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ ॥ ८१
भी० उ०—धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः ।
तडागं सुकृतं देशे क्षेत्रमेकं महाश्रयम् ॥ ८२
निदाघकाले पानीयं तडागे यस्य तिष्ठति ।
वाजिमेधफलं तस्य फलं वै मुनयो विदुः ॥ ८३
स कुलं तारयेत्सर्वं यस्य खाते जलाशये ।
गावः पिबंति सलिलं साधवश्च नराः सदा ॥ ८४
दुर्लभं सलिलं तात विशेषेण परत्र वै ।
पानीयस्य प्रदानेन प्रीतिर्भवति शाश्वती ॥ ८५
वृक्षगुल्मलतावल्लयस्त्वक्सारास्तृणजातयः ।
स्थावराणां च भूताना जातयः षट् प्रकीर्तिताः ॥ ८६
अतीतानागते चोभे पितृवंशे च भारत ।
तारयेद्वृक्षरोपी च तस्माद्वृक्षांश्च रोपयेत् ॥ ८७
पुष्पैः सुरगणान् वृक्षाः फलैश्चापि तथा पितॄन् ।
छायया चातिथिं तात पूजयंति महीरुहाः ॥ ८८
तडागकृद्वृक्षरोपी इष्टयज्ञश्च यो द्विजः ।
एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः ॥ ८९

तस्मात्तडागं कुर्वीत आरामांश्चैव रोपयेत् ।
यजेच्च विविधैर्यज्ञैः सत्यं च सततं वदेत् ॥ ९०

यु० उ०—यत्फलं तिलदाने च भूमिदाने च कीर्तितम् ।
गोदाने चान्नदाने च तन्मे ब्रूहि पितामह ॥ ९१

भी० उ०—पितॄणां परमं भोज्यं तिलाः सृष्टाः स्वयंभुवा ।
तिलदानेन वै तस्मात्पितृपक्षः प्रमोदते ॥ ९२
प्रादेशमात्रं भूमेस्तु यो दद्यादनुपस्कृतम् ।
न सीदति स कृच्छ्रेषु न च दुर्गाण्यवाप्नुते ॥ ९३
शीतवातातपसहां गृहभूमिं सुसंस्कृताम् ।
प्रदाय सुरलोकस्थः पुण्यांतेऽपि न चाल्यते ॥ ९४
न चोखरां न निर्दग्धां महीं दद्यात्कथंचन ।
न श्मशानपरीतां च न च पापनिषेविताम् ॥ ९५
गावोऽधिकास्तपस्विभ्यो यस्मात्सर्वेभ्य एव च ।
तस्मान्महेश्वरो देवस्तेपे ताभिः सहास्थितः ॥ ९६
पयसा हविषा दध्ना शकृता चाथ चर्मणा ।
अस्थिभिश्चोपकुर्वंति शृंगैर्वालैश्च भारत ॥ ९७
नासां शीतातपौ स्यातां सदैताः कर्म कुर्वते ।
न वर्षविषयं वापि दुःखमासां भवत्युत ॥ ९८
ब्राह्मणैः सहिता यांति यस्मात्पारमकं पदम् ।
एवं गोब्राह्मणं तस्मात्प्रवदंति मनीषिणः ॥ ९९
ता इमा विप्रमुख्येभ्यो यो ददाति महीपते ।
निस्तरेदापदः कृच्छ्रां विषमस्थोऽपि पार्थिव ॥ १००
अमृतं वै गवां क्षीरममृतं स प्रयच्छति ।
अग्नीनामव्ययं ह्येतद्धौम्यं वेदविदो विदुः ॥ १०१
प्राणा वै प्राणिनामेतत्प्रोच्यते भरतर्षभ ।
तस्माद्ददाति यो धेनुं प्राणानेष प्रयच्छति ॥ १०२
न वधार्थं प्रदातव्या न कीनाशे न नास्तिके ।
न कृशा नापवत्सा वा वंध्या रोगान्विता तथा ॥ १०३
स्नाताय क्षुधितायान्नं यः प्रयच्छति भूमिप ।
स्वायंभुवं महत्स्थानं स गच्छति नराधिप ॥ १०४

न हिरण्यैर्न वासोभिर्नान्यद्दानेन भारत ।
प्राप्नुवन्ति नराः श्रेयो यथा ह्यन्नप्रदाः प्रभो ॥ १०५
अन्नं वै प्रथम द्रव्यमन्नं श्रीश्च परा मता ।
अन्नात्प्राणः प्रभवति तेजो वीर्यं बलं तथा ॥ १०६
सद्यो ददाति यश्चान्नं सदैकाग्रमना नरः ।
न स दुर्गाण्यवाप्नोतीत्येवमाह पराशरः ॥ १०७
यु० उ०—य इद तप इत्याहुरुपवासं पृथग्जनाः ।
तपः स्यादेतदेवेह तपोऽन्यद्वापि किं भवेत् ॥ १०८
भी० उ०—पासार्धमासोपवासाद्यत्तपो मन्यते जनः ।
आत्मतंत्रोपघाती यो न तपस्वी न धर्मवित् ॥ १०९
सदोपवासी च भवेद्ब्रह्मचारी तथैव च ।
मुनिश्च स्यात्सदा विप्रो वेदांश्चैव सदा जपेत् ॥ ११०
कुटुंबिको धर्मकायः सदाऽस्वप्नश्च मानवः ।
अमांसाशी सदा च स्यान्नियतश्च सदा भवेत् ।
अमृताशी सदा च स्यात्पवित्री च सदा भवेत् ॥ १११
सदोपवासी भवति यो न भुंक्तेऽतरा पुनः ।
भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति चैव हि ॥ ११२
अभक्षयन् वृथा मांसममांसाशी भवत्युत ।
दान ददत्पवित्री स्यादस्वप्नश्च दिवाऽस्वपन् ॥ ११३
भृत्यातिथिषु यो भुक्त भृक्तवत्सु नरः सदा ।
अमृत केवलं भुंक्ते इति विद्धि युधिष्ठिर ॥ ११४
यु० उ० —दातुः प्रतिग्रहीतुर्वै को विशेषः पितामह ॥ ११५
भी० उ० —अत्राप्युदाहरंतीमामितिहासं पुरातनम् ।
वृषादर्भेश्च सवादं सप्तर्षीणां च भारत ॥ ११६
कश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः ।
विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुंधती ॥ ११७
सर्वेषामथ तेषा तु गंडाभूत्कर्मकारिका ।
शूद्रः पशुसखश्चैव भर्ता चास्या बभूव ह ॥ ११८
ते च सर्वे तपस्यंतः पुरा चेरुर्महीमिमाम् ।
समाधिनोपाशिक्षंतो ब्रह्मलोकं सनातनम् ॥ ११९

अथाभवदनावृष्टिर्महती कुरुनंदन ।
कृच्छ्रप्राणोऽभवद्यत्र लोकोऽयं वै क्षुधान्वितः ॥ १२०
कस्मिंश्चिच्च पुरा यज्ञे शैब्येन शिबिसूनुना ।
दक्षिणार्थेऽथ ऋत्विग्भ्यो दत्तः पुत्रः पुरा किल ॥ १२१
अस्मिन् कालेऽथ सोऽल्पायुर्दिष्टांतमगमत्प्रभुः ।
ते तं क्षुधाभिसंतप्ताः परिवार्योपतस्थिरे ॥ १२२
निरन्ने मर्त्यलोकेऽस्मिन्नात्मानं ते परीप्सवः ।
कृच्छ्रामापेदिरे वृत्तिमन्नहेतोस्तपस्विनः ॥ १२३
अटमानोऽथ तान् मार्गे पचमानान् महीपतिः ।
राजा शैब्यो वृषादर्भिः क्लिश्यमानान् ददर्श ह ॥ १२४
वृ० उ०--प्रतिग्रहस्तारयाति पुष्टिर्वै प्रतिगृह्यताम् ।
वरान् ग्रामान् व्रीहियवान् रत्नं यच्चान्यदुर्लभम् ॥ १२५
नास्मिन्नभक्ष्ये भावमेत्र कुरुध्वं पुष्ट्यर्थं वः किंप्रयच्छाम्यहं वै ॥ १२६
ऋ० उ०—राजन् प्रतिग्रहो राज्ञो मध्वास्वादो विषोपमः ।
तज्जानमानः कस्मात्त्वं कुरुषे नः प्रलोभनम् ॥ १२७
क्षेत्रं हि दैवतमिह ब्राह्मणान् समुपाश्रितम् ।
अमलो ह्येष तपसा प्रीतः प्रीणाति देवताः ॥ १२८
कुशलं सह दानेन राजन्नस्तु सदा तव ।
अथ हित्वा ययुः सर्वे वनमाहारकांक्षिणः ॥ १२९
ततः प्रचोदिता राज्ञा वनं गत्वास्य मंत्रिणः ।
प्रतीयोदुंबराणि स्म दातुं तेषां प्रचक्रिरे ॥ १३०
उदुंबराण्यथान्यानि हेमगर्भाण्युपाहरन् ।
गुरूण्यथ विदित्वाथ न ग्राह्याण्यत्रिरब्रवीत् ॥ १३१
इह ह्येतदुपादत्तं प्रेत्यस्मात्कटुकोदयम् ।
हैमानीमानि जानीमः प्रतिबुद्धाः स्म जागृमः ॥ १३२
व० उ०—शतेन निष्कं गणितं सहस्रेण च संमितम् ।
तथा बहु प्रतीच्छन् वै पापिष्ठां यनते गतिम् ॥ १३३
क० उ०—यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
सर्वं तन्नालमेकस्य तस्माद्विद्वाञ्छमं व्रजेत् ॥ १३४
भर० उ०—उत्पन्नस्य रुरोः शृंगं वर्धमानस्य वर्धते ।
प्रार्थना पुरुषस्येव तस्य मात्रा न विद्यते ॥ १३५

गौत० उ०—न तल्लोके द्रव्यमस्ति यल्लोके प्रतिपूरयेत् ।
समुद्रकल्पः पुरुषः न कदाचन पूर्यते ॥ १३६

वि० उ०—कामं कामयमानस्य यदा कामः समृध्यते ।
अथैनमपरः कामस्तृष्णा विध्यति बाणवत् ॥ १३७

ज० उ०—प्रतिग्रहे संयमो वै तपो धारयते ध्रुवम् ।
तद्धनं ब्राह्मणस्येह लुभ्यमानस्य विस्रवेत् ॥ १३८

अ० उ०—धर्मार्थं संचयो वेह द्रव्याणां पक्षसंमतः ।
तपःसंचय एवेह विशिष्टो द्रव्यसंचयात् ॥ १३९

ग० उ०—उग्रादितो भयाद्यस्माद्बिभ्यतीमे ममेश्वराः ।
बलीयांसो दुर्बलवद्बिभेम्यहमतः परम् ॥ १४०

पशुस० उ०—यद्वै धर्मे परं नास्ति ब्राह्मणास्तद्धनं विदुः ।
विनयार्थं सुविद्वांसमुपासेयं यथातथम् ॥ १४१

ऋ० उ०—कुशलं सह दानेन तस्मै यस्य इमाः प्रजाः ।
फलान्युपधियुक्तानि य एवं नः प्रयच्छति ॥ १४२

भी० उ०—इत्युक्त्वा हेमगर्भाणि हित्वा तानि फलानि वै ।
ऋषयो जग्मुरन्यत्र सर्व एव धृतव्रताः ॥ १४३

---

## ४

यु० उ०—शतायुर्वै पुरुषः शतवीर्यश्च जायते ।
कस्मान्म्रियंते पुरुषा बाला अपि पितामह ॥ १४४
आयुष्मान् केन भवति अल्पायुर्वापि मानवः ।
केन वा लभते कीर्तिं केन वा लभते श्रियम् ॥ १४५

भी० उ०—आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥ १४६
आचारलक्षणो धर्मः संतश्चारित्रलक्षणाः ।
साधूनां च यथावृत्तमेतदाचारलक्षणम् ॥ १४७
ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलंघिनः ।
अधर्मज्ञा दुराचारास्ते भवंति गतायुषः ॥ १४८
विशाला भिन्नमर्यादा नित्यं संकीर्णमैथुनाः ।
अल्पायुषो भवंतीह नरा निरयगामिनः ॥ १४९

अक्रोधनः सत्यवादी भूतानामविहिंसकः ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥ १५०
ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिंतयेत् ।
उत्थायाचम्य तिष्ठेत पूर्वां संध्यां कृतांजलिः ॥ १५१
एवमेवापरां संध्यां समुपासीत वाग्यतः ।
ऋषयो नित्यसंध्यत्वाद्दीर्घमायुरवाप्नुवन् ॥ १५२
ये न पूर्वामुपासंते द्विजाः संध्यां न पश्चिमाम् ।
सर्वांस्तान् धार्मिको राजा शूद्रकर्माणि कारयेत् ॥ १५३
परदारा न गन्तव्या सर्ववर्णेषु कर्हिचित् ।
न हीदृशमनायुष्यं लोके किंचन विद्यते ॥ १५४
पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत्कदाचन ।
कृत्वा मूत्रपुरीषे तु रथ्यामाक्रम्य वा पुनः ।
पादप्रक्षालनं कुर्यात्स्वाध्याये भोजने तथा ॥ १५५
नित्यमग्निं परिचरेद्भिक्षां दद्याच्च नित्यदा ।
वाग्यतो दंतकाष्ठं च नित्यमेव समाचरेत् ।
न चाभ्युदितशायी स्यात्प्रायश्चित्ती तथा भवेत् ॥ १५६
मातापितरमुत्थाय पूर्वमेवाभिवादयेत् ।
आचार्यमथवाप्यन्यं तथायुर्विंदते महत् ॥ १५७
नोत्सृजेत पुरीषं च क्षेत्रे ग्रामस्य चांतिके ।
उदङ्मुखश्च सततं शौचं कुर्यात्समाहितः ॥ १५८
उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च ।
न भग्ने नावशीर्णे च शयने प्रस्वपीत च ॥ १५९
नांतर्धानेन संयुक्ते न च तिर्यक्कदाचन ।
न नग्नः कर्हिचित्स्नायात् न निशाया कदाचन ॥ १६०
स्नात्वा च नावमृज्येत गात्राणि सुविचक्षणः ।
उभे मूत्रपुरीषे तु नाप्सु कुर्यात् कदाचन ॥ १६१
अन्नं बुभुक्षमाणस्तु त्रिर्मुखेन स्पृशेदपः ।
भुक्त्वा चान्नं तथैव त्रिर्द्विः पुनः परिमार्जयेत् ॥ १६२
प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन् ।
निषण्णश्चापि खादेत न तु गच्छन् कदाचन ॥ १६३

आर्द्रपादस्तु भुंजीत नार्द्रपादस्तु संविशेत् ।
सुप्तव्यं नैव नग्नेन न चोच्छिष्टोऽपि संविशेत् ॥ १६४
न संहताभ्यां पाणिभ्यां कडूयेदात्मनः शिरः ।
न चाभीक्ष्णं शिरः स्नायात्तथास्यायुर्न रिष्यते ॥ १६५
प्रत्यादित्यं प्रत्यनलं प्रति गा च प्रति द्विजान् ।
ये मेहंति च पंथानं ते भवंति गतायुषः ॥ १६६
गुरुणा चैव निर्बंधो न कर्तव्यः कदाचन ।
अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर ॥ १६७
दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ।
उच्छिष्टोत्सर्जनं चैव दूरे कार्यं हितैषिणा । १६८
अन्यदेव भवेद्वासः शयनीये नरोत्तम ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥ १६९
प्रियंगुचंदनाभ्यां च बिल्वेन तगरेण च ।
पृथगेवानुलिंपेत केशरेण च बुद्धिमान् ॥ १७०
समानमेकपात्रे तु भुंजेन्नान्नं जनेश्वर ।
न संनिकृष्टो मेधावी नाशुचेर्न च सत्सु च ॥ १७१
पिप्पलं च वटं चैव शणशाकं तथैव च ।
उदुंबरं न खादेत भवार्थी पुरुषोत्तम ॥ १७२
आजगव्यं तथा मांसं मायूरं चैव वर्जयेत् ।
वर्जयेच्छुष्कमांसं च तथा पर्युषितं च यत् ॥ १७३
सायं प्रातश्च भुंजीत नांतराले समाहितः ।
भूमौ सदैव नाश्नीयान्नानासीनो न शब्दवत् ॥ १७४
पानीयं पायस सक्तून् दधिसर्पिर्मधून्यपि ।
निरस्य शेषमेतेषां न प्रदेयं तु कस्यचित् ॥ १७५
पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ।
वर्जनीयाश्चैव नित्यं सक्तवो निशि भारत ॥ १७६
सौहित्यं न च कर्तव्यं रात्रौ न च समाचरेत् ।
द्विजच्छेदं न कुर्वीत भक्त्वा न च समाचरेत् ॥ १७७
प्राङ्मुखः श्मश्रुकर्माणि कारयेत्सुसमाहितः ।
उदङ्मुखो वा राजेन्द्र तथायुर्विंदते महत् ॥ १७८

उपानहौ च वस्त्रं च धृतमन्यैर्न धारयेत् ।
ब्रह्मचारी च नित्यं स्यात्पादं पादेन नाक्रमेत् ॥ १७९
वृथा मांसं न खादेत पृष्ठमांसं तथैव च ।
आक्रोशं परिवादं च पैशुन्यं च विवर्जयेत् ॥ १८०
हीनांगानतिरिक्तांगान् विद्याहीनान् विगर्हितान् ।
रूपद्रविणहीनांश्च सत्यहीनांश्च नाक्षिपेत् ॥ १८१
पंथा देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ॥ १८२
महाकुले प्रसूतां च प्रशस्तां लक्षणान्विताम् ।
वयस्थां च महाप्राज्ञ कन्यामावोढुमर्हति ॥ १८३
अमावास्या पौर्णिमास्यां चतुर्दश्या च सर्वशः ।
अष्टम्या सर्वपक्षाणा ब्रह्मचारी सदा भवेत् ॥ १८४
न दिवा मैथुनं गच्छेन्न कन्या न च बंधकीम् ।
न चास्नातां स्त्रियं गच्छेत्तथायुर्विंदते महत् ॥ १८५
न चेर्ष्या स्त्रीषु कर्तव्या रक्ष्या दाराश्च सर्वशः ।
अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत् ॥ १८६
अनायुष्यं दिवा स्वप्नं तथाभ्युदितशायिता ।
अनिमंत्रितो न गच्छेत यज्ञं गच्छेत दर्शकः ॥ १८७
धनुर्वेदे च वेदे च यत्नः कार्यो नराधिप ।
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव हि ॥ १८८
यत्नवान् भव राजेन्द्र यत्नवान् सुखमेधते ।
युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत ॥ १८९
गंधर्वशास्त्रं च कलाः परिज्ञेया नराधिप ।
महात्मनां च चरितं श्रोतव्यं नित्यमेव ते ॥ १९०
ज्ञातिसंबंधिमित्राणि पूजनीयानि सर्वशः ।
यष्टव्यं च यथाशक्ति यज्ञैर्विविधदक्षिणैः ॥ १९१
अत ऊर्ध्वमरण्यं च सेवितव्यं नराधिप ।
एष ते लक्षणोद्देश आयुष्याणां प्रकीर्तितः ॥ १९२
शेषस्त्रैविद्यवृद्धेभ्यः प्रत्याहार्यो युधिष्ठिर ॥ १९३
यु० उ०—वेद. प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि ।
पृथक्त्वं लभ्यते तेषां धर्मश्चैकस्त्रयं कथम् ॥ १९४

भी० उ०—धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
यद्यवं मन्यसे राजंस्त्रिधा धर्मविचारणा ॥ १९५
एक एव हि जानीहि त्रिधा धर्मस्य धारणम् ।
पृथक्त्वे च न मे बुद्धिस्त्रयाणामपि वै तथा ॥ १९६
उक्तो मार्गस्त्रयाणां च तत्तथैव समाचर ।
जिज्ञासा तु न कर्तव्या धर्मस्य परितर्कणात् ॥ १९७
अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम् ।
अजातशत्रो सेवस्व धर्म एष सनातनः ॥ १९८
ब्राह्मणेषु च वृत्तिर्या पितृपैतामहोचिता ।
तामन्वेहि महाबाहो धर्मस्यैते हि दैशिकाः ॥ १९९

यु० उ०—अधीत्य नीतिशास्त्राणि नीतियुक्तो न दृश्यते ॥ २००
अनभिज्ञश्च साचिव्यं गमितः केन हेतुना ।
विद्यायुक्तो ह्यवित्तश्च धनवान् दुर्मतिस्तथा ॥ २०१
यदि विद्यामुपाश्रित्य नरः सुखमवाप्नुयात् ।
न विद्वान् विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत् ॥ २०२
यथा पिपासां जयति पुरुषः प्राप्य वै जलम् ।
दृष्टार्थो विद्यया ह्येवं न विद्यां प्रजहेन्नरः ॥ २०३
नाभागधेयः प्राप्नोति धनं सुबलवानपि ।
भागधेयान्वितस्त्वर्थान् कृशो बालश्च विंदति ॥ २०४

भी० उ०—ईहमानः समारंभान् यदि नासादयेद्धनम् ।
उग्रं तपः समारोहेन्नह्यनुप्तं प्ररोहति ॥ २०५
दानेन भोगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरितिप्राहुर्मनीषिणः ॥ २०६
तस्माद्दद्यान्न याचेत पूजयेद्धार्मिकानपि ।
सुभाषी प्रियकृच्छ्रांतः सर्वसत्वाविहिंसकः ॥ २०७
यदा प्रमाणं प्रसवः स्वभावश्च सुखासुखे ।
दंशकीटपिपीलानां स्थिरो भव युधिष्ठिर ॥ २०८
कार्यते यच्च क्रियते सच्चासच्च कृताकृतम् ।
तत्राश्वसीत सत्कृत्वा असत्कृत्वा न विश्वसेत् ॥ २०९
काल एव सर्वकाले निग्रहानुग्रहौ ददत् ।
बुद्धिमाविश्य भूतानां धर्माधर्मौ प्रवर्तते ॥ २१०

यदा त्वस्य भवेद्बुद्धिर्धर्मार्थस्य प्रदर्शनात् ।
तदाऽऽश्वसीत धर्मात्माऽदृढबुद्धिर्नविश्वसेत् ॥ २११
नह्यधर्मभयाद्धर्मं दद्यात्कालः कथंचन ।
तस्माद्विशुद्धमात्मानं जानीयाद्धर्मचारिणम् ॥ २१२
स्प्रष्टुमप्यसमर्थो हि ज्वलंतमिव पावकम् ।
अधर्मः संततो धर्मं कालेन परिरक्षितम् ॥ २१३
कार्यावेतौ हि धर्मेण धर्मो हि विजयावहः ।
त्रयाणामपि लोकानामालोकः कारणं भवेत् ॥ २१४
अध्रुवो हि कथं लोकः स्मृतो धर्मः कथं ध्रुवः ।
यत्र कालो ध्रुवस्तात तत्र धर्मः सनातनः ॥ २१५
एवं सति न दोषोऽस्ति भूतानां धर्मसेवने ।
तिर्यग्योनावपि सतां लोक एव मतो गुरुः ॥ २१६

---

५.

वै० उ०—अभून्मुहूर्तं स्तिमितं सर्वं तद्राजमंडलम् ।
तूर्ष्णीभूते ततस्तस्मिन् परे चित्रमिवार्पिताः ॥ २१७
मुहूर्तमिव च ध्यात्वा व्यासः सत्यवतीसुतः ।
नृपं शयानं गांगेयमिदमाह वचस्तदा ॥ २१८
राजन् प्रकृतिमापन्नः कुरुराजो युधिष्ठिरः ।
तमिमं पुरयानाय समनुज्ञातुमर्हसि ॥ २१९
भी० उ०—प्रविशस्व पुरीं राजन् व्येतु ते मानसो ज्वरः ।
यजस्व विविधैर्यज्ञैर्बह्वन्नैश्चाप्तदक्षिणैः ॥ २२०
क्षत्रधर्मरतः पार्थ पितॄन् देवांश्च तर्पय ।
रंजयस्व प्रजाः सर्वाः प्रकृतीः परिसांत्वय ॥ २२१
अनु त्वां तात जीवंतु मित्राणि सुहृदस्तथा ।
चैत्यस्थाने स्थितं वृक्षं फलवंतमिव द्विजाः ॥ २२२
आगंतव्यं च भवता समये मम पार्थिव ।
विनिवृत्ते दिनकरे प्रवृत्ते चोत्तरायणे ॥ २२३
तथेत्युक्त्वा च कौंतेयः सोऽभिवाद्य पितामहम् ।
प्रययौ सपरीवारो नगरं नागसाह्वयम् ॥ २२४

उषित्वा शर्वरीः श्रीमान् पंचाशन्नगरोत्तमे ।
समयं कौरवाग्र्यस्य सस्मार पुरुषर्षभः ॥ २२५
स निर्ययौ गजपुराद्याजकैः परिवारितः ।
प्रस्थाप्य पूर्वं कौंतेयो भीष्मसंस्करणाय वै ॥ २२६
चंदनागरुमुख्यानि तथा कालीयकान्यपि ।
माल्यानि च वरार्हाणि रत्नानि विविधानि च ॥ २२७
स्तूयमानो महातेजा भीष्मस्याग्नीननुव्रजन् ।
आससाद कुरुक्षेत्रे ततः शांतनवं नृपम् ॥ २२८
आसाद्य शरतल्पस्थमृषिभिः परिवारितम् ।
अब्रवीद्भरतश्रेष्ठो धर्मराजो युधिष्ठिरः ॥ २२९
युधिष्ठिरोऽहं नृपते नमस्ते जान्हवीसुत ।
प्राप्तोऽस्मि शयने राजन्नग्नीनादाय ते विभो ॥ २३०
ततश्च तं बली भीष्मः प्रगृह्य विपुलं भुजम् ।
उद्यन्मेघस्वरो वाग्मी काले वचनमब्रवीत् ॥ २३१
दिष्ट्या प्राप्तोऽसि कौंतेय सहामात्यो युधिष्ठिर ।
अष्टपंचाशतं रात्र्यः शयानस्याद्य मे गताः ।
शरेषु निशिताग्रेषु यथा वर्षशतं तथा ॥ २३२
माघोऽयं समनुप्राप्तो मासः सौम्यो युधिष्ठिर ।
त्रिभागशेषः पक्षोऽथ शुक्लो भवितुमर्हति ॥ २३३
धृतराष्ट्रमथामंत्र्य काले वचनमब्रवीत् ॥ २३४
राजन् विदितधर्मोऽसि सुनिर्णीतार्थसंशयः ।
वेदांश्च निखिलान् सर्वान् निखिलेनानुबुध्यसे ॥ २३५
न शोचितव्यं कौरव्य भवितव्य हि तत्तथा ।
यथा पांडोः सुता राजंस्तथैव तव धर्मतः ॥ २३६
तान् पालय स्थितो धर्मे गुरुशुश्रूषणे रतान् ।
धर्मराजो हि शुद्धात्मा निदेशे तव स्थास्यति ।
आनृशंस्यपरं ह्येतं जानामि गुरुवत्सलम् ॥ २३७
तव पुत्रा दुरात्मानः क्रोधलोभपरायणाः ।
ईर्ष्याभिभूता दुर्वृत्तास्तान्न शोचितुमर्हसि ॥ २३८
एतावदुक्त्वा वचन धृतराष्ट्रं मनीषिणम् ।
वासुदेवं महाबाहुमभ्यभाषत कौरवः ॥ २३९

भगवन् देवदेवेश सुरासुरनमस्कृत ।
त्रिविक्रम नमस्तुभ्यं शंखचक्रगदाधर ॥ २४०
अनुजानीहि मां कृष्ण वैकुंठं पुरुषोत्तम ।
रक्ष्याश्च ते पांडवेया भवान्न येषां परायणम् ॥ २४१
उक्तवानस्मि दुर्बुद्धिं मंदं दुर्योधनं तदा ॥
यतः कृष्णस्ततो धर्मो यतोधर्मस्ततो जयः ॥ २४२
कृ० उ०—अनुजानामि भीष्म त्वां वसून् प्राप्नुहि पार्थिव ।
न तेऽस्ति वृजिनं किंचिदिह लोके महाद्युते ॥ २४३
पितृभक्तोऽसि राजर्षे मार्कंडेय इवापरः ।
तेन मृत्युस्तव वशे स्थितो भृत्य इवानतः ॥ २४४
एवमुक्तस्तु गांगेयः पांडवानिदमब्रवीत् ।
धृतराष्ट्रमुखांश्चापि सर्वांश्च सुहृदस्तथा ॥ २४५
सत्येषु यतितव्यं वः सत्यं हि परमं बलम् ।
आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः ॥ २४६
ब्रह्मण्यैर्धर्मशीलैश्च तपोनित्यैश्च भारत ।
इत्युक्त्वा सुहृदः सर्वान् संपरिष्वज्य चैव ह ॥ २४७
तूष्णीं बभूव कौरव्यः स मुहूर्तमरिंदम ।
धारयामास चात्मानं धारणासु यथाक्रमम् ॥ २४८
सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु च ।
जगाम भित्त्वा मूर्धानं दिवमभ्युत्पपात च ॥ २४९
एवं स राजशार्दूल नृप. शांतनवस्तदा ।
समयुज्यत कालेन भारताना कुलोद्वह. ॥ २५०
ततस्त्वादाय दारूणि गंधांश्च विविधान् बहून् ।
चितां चक्रुर्महात्मानः पांडवा विदुरस्तथा ॥ २५१
ततोऽस्य विधिवच्चक्रुः पितृमेधं महात्मनः ।
यजन बहुशश्चाग्नौ जगु॰ सामानि सामगाः ॥ २५२
समवच्छाद्य गांगेयं सप्रज्वाल्य हुताशनम् ।
अपसव्यमकुर्वन्त धृतराष्ट्रमुखाश्चिताम् ॥ २५३
संस्कृत्य च कुरुश्रेष्ठ गांगेयं कुरुसत्तमाः ।
जग्मुर्भागीरथीं पुण्यामृषिजुष्टां सहस्त्रियः ॥ २५४
उदकं चक्रिरे चैव गांगेयस्य महात्मन ।
विधिवत्क्षात्रियश्रेष्ठाः स च सर्वो जनस्तथा ॥ २५५

इति श्रीसंक्षिप्तमहाभारते अनुशासनपर्व समाप्तम् । श्लो. सं. २५५

# १४ अश्वमेधपर्व.

## १

कृतोदक तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुरुत्ततारांऽऽकुलेंद्रियः ॥ १
उत्तीर्य तु महाबाहुर्बाष्पव्याकुललोचनः ।
पपात तीरे गंगाया व्याधविद्ध इव द्विपः ॥ २
राजा तु धृतराष्ट्रश्च पुत्रशोकाभिपीडितः ।
वाक्यमाह महाबुद्धिः प्रज्ञाचक्षुर्युधिष्ठिरम् ॥ ३
उत्तिष्ठ कुरुशार्दूल कुरु कार्यमनंतरम् ।
शोचितव्यं न पश्यामि त्वया धर्मभृतां वर ॥ ४
शोचितव्यं मया चैव गांधार्या च महीपते ।
ययोः पुत्रशतं नष्टं स्वप्नलब्धं यथा धनम् ॥ ५
यु० उ०—प्रियं तु मे स्यात्सुमहत् कृतं चक्रगदाधर ।
यदि मामनुजानीयाद्भवान् गंतुं तपोवनम् ॥ ६
नहि शांति प्रपश्यामि घातयित्वा पितामहम् ।
कर्णं च पुरुषव्याघ्रं संग्रामेष्वपलायिनम् ॥ ७
व्या० उ०—युधिष्ठिर तव प्रज्ञा न सम्यगिति मे मतिः ।
न हि कश्चित्स्वयं मर्त्यः स्ववशः कुरुते क्रियाम् ॥ ८
आत्मानं मन्यसे चाथ पापकर्माणमंततः ।
शृणु तत्र यथा पापमपकृष्येत भारत ॥ ९
यज्ञेन तपसा चैव दानेन च नराधिप ।
पूयन्ते नरशार्दूल नरा दुष्कृतकारिणः ॥ १०
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ।
बहुकामान्नवित्तेन रामो दाशरथिर्यथा ॥ ११
यु० उ०—असंशयं वाजिमेधः पावयेत्पृथिवीपतिम् ।
अभिप्रायस्तु मे कश्चित्तं त्वं श्रोतुमिहार्हसि ॥ १२
इमं ज्ञातिवधं कृत्वा सुमहान्तं द्विजोत्तम ।
दानमल्पं न शक्नोमि दातुं वित्तं च नास्ति मे ॥ १३
न तु बालानिमान् दीनानुत्सहे वसु याचितुम् ।
तथैवार्द्रव्रणान् कृच्छ्रे वर्तमानान्नृपात्मजान् ॥ १४

स्वयं विनाश्य पृथिवीं यज्ञार्थं द्विजसत्तम ।
करमाहारयिष्यामि कथं शोकपरायणः ॥ १५
व्या० उ.—विद्यते द्रविणं पार्थ गिरौ हिमवती स्थितम् ।
उत्सृष्टं ब्राह्मणैर्यज्ञे मरुत्तस्य महात्मनः ।
तदानयस्व कौंतेय पर्याप्तं तद्भविष्यति ॥ १६
मरुत्तो नाम धर्मज्ञश्चक्रवर्ती महायशाः ।
नागायुतसमप्राणः साक्षाद्विष्णुरिवापरः ॥ १७
स यक्ष्यमाणो धर्मात्मा शातकुंभमयान्युत ।
कारयायास शुभ्राणि भाजनानि सहस्रशः ॥ १८
वै० उ०—ततो धर्मसुतो राजा तत्रैवोपाविशत्प्रभुः ।
सहितो धृतराष्ट्रेण स ददौ चौर्ध्वदैहिकम् ॥ १९
ततो दत्वा बहुधनं विप्रेभ्यः पाडवर्षभः ।
धृतराष्ट्रं पुरस्कृत्य विवेश गजसाह्वयम् ॥ २०
स समाश्वास्य पितरं प्रज्ञाचक्षुषमीश्वरम् ।
अन्वशाद्वै स धर्मात्मा पृथिवीं भ्रातृभिः सह ॥ २१
समासाद्य तु राजानं वार्ष्णेयकुरुपुंगवौ ।
निषेदतुरनुज्ञातौ प्रीयमाणेन तेन तौ ॥ २२
अ० उ०—अयं चिरोषितो राजन् वासुदेवः प्रतापवान् ।
भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ॥ २३
यु० उ०—पुंडरीकाक्ष भद्रं ते गच्छ त्वं मधुसूदन ।
पुरीं द्वारवतीमद्य द्रष्टुं शूरसुतं प्रभो ॥ २४
समेत्य मातुल गत्वा बलदेवं च मानद ।
पूजयेथा महाप्राज्ञ मद्वाक्येन यथार्हतः ॥ २५
आनर्तानवलोक्य त्वं पितरं च महाभुज ।
वृष्णींश्च पुनरागच्छेर्हयमेधे ममानघ ॥ २६
स गच्छ रत्नान्यादाय विविधानि वसूनि च ।
यच्चाप्यन्यन्मनोज्ञं ते तदप्यादत्स्व सात्वत ॥ २७
इयं च वसुधा कृत्स्ना प्रसादात्तव केशव ।
अस्मानुपगता वीर निहताश्चापि शत्रवः ॥ २८
कृ० उ०—तवैव रत्नानि धनं च केवलं धरा च कृत्स्ना तु महाभुजाद्य वै ।
यदस्ति चान्यद्द्रविणं गृहे मम त्वमेव तस्येश्वर नित्यमीश्वरः ॥ २९

रथे सुभद्रामधिरोप्य भाविनी युधिष्ठिरस्यानुमते जनार्दनः ।
पितृष्वसुश्चापि तथा महाभुजो विनिर्ययौ राजजनाभिसंवृतः ॥ ३०
तमन्वयाद्वानरवर्यकेतनः ससात्यकिर्माद्रवतीसुतावपि ।
अगाधबुद्धिर्विदुरश्च माधवं स्वयं च भीमो गजराजविक्रमः ॥ ३१
निवर्तयित्वा कुरुराष्ट्रवर्धनांस्ततः स सर्वान् विदुरं च वीर्यवान् ।
ततो ययौ शत्रुगणप्रमर्दनः शिनिप्रवीरानुगतो जनार्दनः ॥ ३२

---

## २

कृत्वा तु पाडवाः सर्वे रत्नाहरणनिश्चयम् ।
सेनामाज्ञापयामासुर्नक्षत्रेऽहनि च ध्रुवे ॥ ३३
अर्चयित्वा सुरश्रेष्ठं पूर्वमेव महेश्वरम् ।
मोदकैः पायसेनाथ मासापूपैस्तथैव च ॥ ३४
ततः प्रदक्षिणीकृत्य शिरोभिः प्रणिपत्य च ।
ब्राह्मणानग्निसहितान् प्रययुः पांडुनंदनाः ॥ ३५
पांडुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
बभौ युधिष्ठिरस्तत्र पौर्णमास्यामिवोडुराट् ॥ ३६
सरांसि सरितश्चैव वनान्युपवनानि च ।
अत्यक्रामन्महाराजो गिरिं चाप्यन्वपद्यत ॥ ३७
तस्मिन् देशे च राजेंद्र यत्र तद्द्रव्यमुत्तमम् ।
चक्रे निवेशनं राजा पांडवः सह सैनिकैः ॥ ३८
षट्पदं नवसंख्यानं निवेशं चक्रिरे द्विजाः ।
मत्तानां वारणेंद्राणां निवेशं च यथाविधि ॥ ३९
ब्रा० उ०—क्रियतामुपहारोऽस्य त्र्यंबकस्य महात्मनः ।
दत्वोपहारं नृपते ततः स्वार्थं यतामहे ॥ ४०
श्रुत्वा तु वचनं तेषां ब्राह्मणानां युधिष्ठिरः ।
गिरीशस्य यथान्यायमुपहारमुपाहरत् ॥ ४१
किंकराणां ततः पश्चाच्चकार बलिमुत्तमम् ।
कृशरेणच मांसेन निवापैस्तिलसंयुतैः ॥ ४२
कृत्वा पूजां तु रुद्रस्य गणानां चैव सर्वशः ।
ययौ व्यासं पुरस्कृत्य नृपो रत्ननिधिं प्रति ॥ ४३

तेषां पुण्याहघोषेण तेजसा समवस्थितः ।
प्रीतिमान् स कुरुश्रेष्ठः खानयामास तद्धनम् ॥ ४४
ततः पात्रीः सकरका बहुरूपा मनोरमाः ।
भृंगाराणि कटाहानि कलशान् वर्धमानकान् ॥ ४५
बहूनि च विचित्राणि भाजनानि सहस्रशः ।
उद्धारयामास तदा धर्मराजो युधिष्ठिरः ॥ ४६
तेषां लक्षणमप्यासीन्महान् करपुटस्तदा ।
नद्धं च भाजनं राजंस्तुलार्धमभवन्नृप ॥ ४७
षष्टिरुष्ट्रसहस्राणि शतानि द्विगुणा हयाः ।
वारणाश्च महाराज सहस्रशतसंमिताः ॥ ४८
शकटानि रथाश्चैव तावदेव करेणवः ।
एतद्वित्तं तदभवद्यदुदग्रे युधिष्ठिरः ॥ ४९
षोडशाष्टौ चतुर्विंशत्सहस्रं भारलक्षणम् ।
एतेष्वादाय तद्द्रव्यं पुनरभ्यचर्य पांडवः ॥ ५०
महादेवं प्रतिययौ पुरं नागाह्वयं प्रति ।
द्वैपायनाभ्यनुज्ञातः पुरस्कृत्य पुरोहितम् ॥ ५१
गौयुते गोयुते चैव न्यवसत्पुरुषर्षभ ॥ ५२
सा पुराभिमुखा राजन्नुवाह महती चमूः ।
कृच्छ्राद्द्रविणभारार्ता हर्षयन्ती कुरूद्वहान् ॥ ५३
एतस्मिन्नेव काले तु वासुदेवोऽपि वीर्यवान् ।
उपायाद्वृष्णिभिः सार्धं पुरं वारणसाह्वयम् ॥ ५४
समयं वाजिमेधस्य विदित्वा पुरुषर्षभः ।
बलदेवं पुरस्कृत्य सुभद्रासहितस्तदा ॥ ५५
वसत्सु वृष्णिवीरेषु तत्राथ जनमेजय ।
जज्ञे तव पिता राजन् परीक्षित्परवीरहा ॥ ५६
स तु राजा महाराज ब्रह्मास्त्रेणावपीडितः ।
शवो बभूव निश्चेष्टो हर्षशोकविवर्धनः ॥ ५७
ततस्त्वरितमायांती ददर्श स्वां पितृष्वसाम् ।
क्रोशन्तीमभिधावन्तीं वासुदेवः पुनः पुनः ।
पृष्ठतो द्रौपदी चैव सुभद्रा च यशस्विनीम् ॥ ५८
उत्क्षिप्य बाहुं दुःखार्तास्ताश्चान्याः प्रापतन् भुवि ॥ ५९

अब्रुवंश्च महाराज सर्वाः सास्राविलेक्षणाः ।
स्वस्रीयो वासुदेवस्य मृतो जात इति प्रभो ॥ ६०
ततः स प्राविशत्तूर्णं जन्मवेश्म पितुस्तव ।
अर्चितं पुरुषव्याघ्र सितैर्माल्यैर्यथाविधि ॥ ६१
द्रौपदी त्वरीता गत्वा वैराटीं वाक्यमब्रवीत् ।
अयमायाति ते भद्रे श्वशुरो मधुसूदनः ॥ ६२
सापि बाष्पकलां वाच निगृह्याश्रूणि चैव ह ।
दृष्ट्वा गोविंदमायान्तं कृपणं पर्यदेवयत् ॥ ६३
पुंडरीकाक्ष पश्यावां बालेनेह विनाकृतौ ।
अभिमन्युं च मां चैव हतौ तुल्यं जनार्दन ॥ ६४
वार्ष्णेय मधुहन् वीर शिरसा त्वां प्रसादये ।
द्रोणपुत्रास्त्रनिर्दग्धं जीवयैनं ममात्मजम् ॥ ६५
आसीन्मम मतिः कृष्ण पूर्णोत्संगा जनार्दन ।
अभिवादयिष्ये त्वां कृष्ण तदिदं वितथीकृतम् ॥ ६६
सैवं विलप्य करुणं सोन्मादेव तपस्विनी ।
उत्तरा न्यपतद्भूमौ कृपणा पुत्रगृद्धिनी ॥ ६७
तां तु दृष्ट्वा निपतितां हतपुत्रपरिच्छदाम् ।
चुक्रोश कुंती दुःखार्ता सर्वाश्च भरतस्त्रियः ॥ ६८
मुहूर्तमिव राजेंद्र पांडवानां निवेशनम् ।
अप्रेक्षणीयमभवदार्तस्वनविनादितम् ॥ ६९
प्रतिलभ्य तु सा संज्ञामुत्तरा भरतर्षभ ।
अंकमारोप्य तं पुत्रमिदं वचनमब्रवीत् ॥ ७०
धर्मज्ञस्य सुत. स त्वमधर्मं नावबुध्यसे ।
यस्त्वं वृष्णिप्रवीरस्य कुरुषे नाभिवादनम् ॥ ७१
दुर्भरं प्राणिना वीर कालेऽप्राप्ते कथंचन ।
याहं त्वया विनाद्येह पत्या पुत्रेण चैव ह ।
मर्तव्ये सति जीवामि हतस्वस्तिरकिंचना ॥ ७२
अथवा धर्मराज्ञाहमनुज्ञाता महाभुज ।
भक्षयिष्ये विषं घोरं प्रवेक्ष्ये वा हुताशनम् ॥ ७३
श्रुत्वा स तस्या विपुलं विलाप पुरुषर्षभः ।
उपस्पृश्य ततः कृष्णो ब्रह्मास्त्रं प्रत्यसंहरत् ॥ ७४

प्रतिजज्ञे च दाशार्हस्तस्य जीवितमच्युतः ।
अब्रवीच्च विशुद्धात्मा सर्वं विश्रावयञ्जगत् ॥ ७५
नोक्तपूर्वं मया मिथ्या स्वैरेष्वपि कदाचन ।
न च युद्धात्परावृत्तस्तथा संजीवतामयम् ॥ ७६
यथा मे दयितो धर्मो ब्राह्मणाश्च विशेषतः ।
अभिमन्योः सुतो जातो मृतो जीवत्वयं तथा ॥ ७७
यथाहं नाभिजानामि विजये तु कदाचन ।
विरोधं तेन सत्येन मृतो जीवत्वयं शिशुः ॥ ७८
यथा कंसश्च केशी च धर्मेण निहतौ मया ।
तेन सत्येन बालोऽद्य पुनः संजीवतामयम् ॥ ७९
इत्युक्तो वासुदेवेन स बालो भरतर्षभ ।
शनैः शनैर्महाराज प्रास्पंदत सचेतनः ॥ ८०
ब्रह्मास्त्रं तु यदा राजन् कृष्णेन प्रतिसंहृतम् ।
तदा तद्वेश्म त्वत्पित्रा तेजसाभिविदीपितम् ॥ ८१
बभूवुर्मुदिता राजंस्ततस्ता भरतस्त्रियः ।
ब्राह्मणान् वाचयामासुर्गोविंदस्यैव शासनात् ॥ ८२
ततस्ता मुदिताः सर्वाः प्रशशंसुर्जनार्दनम् ।
स्त्रियो भरतसिंहानां नावं लब्ध्वेव पारगाः ॥ ८३
उत्थाय तु यथाकालमुत्तरा यदुनंदनम् ।
अभ्यवादयत प्रीता सह पुत्रेण भारत ॥ ८४
तस्य कृष्णो ददौ हृष्टो बहुरत्नं विशेषतः ।
तथान्ये वृष्णिशार्दूला नाम चास्याकरोत्प्रभुः ॥ ८५
सोऽवर्धत यथाकालं पिता तव जनाधिप ।
मनःप्रह्लादनश्चासीत्सर्वलोकस्य भारत ॥ ८६
मासजातस्तु ते वीर पिता भवति भारत ।
अथाजग्मुः सुबहुलं रत्नमादाय पांडवाः ॥ ८७
तान् समीपगताञ्श्रुत्वा निर्ययुर्वृष्णिपुंगवाः ।
अलंचक्रुश्च माल्यौघैः पुरुषा नागसाह्वयम् ॥ ८८
पताकाभिर्विचित्राभिर्ध्वजैश्च विविधैरपि ।
वेश्मानि समलंचक्रुः पौराश्चापि जनेश्वराः ॥ ८९

देवतायतनानां च पूजाः सुविविधास्तथा ।
संदिदेशाथ विदुरः पांडुपुत्रप्रियेप्सया ।
राजामार्गाश्च तत्रासन् सुमनोभिरलंकृताः ॥ ९०
तान् समीपगताञ्श्रुत्वा पांडवाञ्शत्रुकर्षणः ।
वासुदेवः सहामात्यः प्रयातः ससुहृद्गणः ॥ ९१
ते समेत्य यथाधर्म पांडवा वृष्णिभिः सह ।
विविशुः सहिता राजन् पुरं वारणसाह्वयम् ॥ ९२
शुश्रुवुस्ते तदा वीराः पितुस्ते जन्म भारत ॥ ९३
तदुपश्रुत्य तत्कर्म वासुदेवस्य धीमतः ।
पूजार्हं पूजयामासुः कृष्णं देवकिनंदनम् ॥ ९४
व्या० उ०—अनुजानामि राजंस्त्वां क्रियतां यदनंतरम् ।
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ॥ ९५

---

३

वै० उ०—इत्युक्तः स तु धर्मात्मा धर्मराजो युधिष्ठिरः ।
वासुदेवमथाभ्येत्य वाग्मी वचनमब्रवीत् ॥ ९६
देवकी सुप्रजा देवी त्वया पुरुषसत्तम ।
त्वत्प्रभावार्जितान् भोगानश्नीम यदुनंदन ॥ ९७
पराक्रमेण बुद्ध्या च त्वयेयं निर्जिता मही ।
दीक्षयस्व त्वमात्मानं त्वं हि नः परमो गुरुः ॥ ९८
त्वयीष्टवति दाशार्हे विपाप्मा भविता ह्यहम् ॥ ९९
कृ० उ०—त्वमेवैतन्महाबाहो वक्तुमर्हस्यरिंदम ।
त्वं गतिः सर्वभूतानामिति मे निश्चिता मतिः ॥ १००
त्वं चाद्य कुरुवीराणां धर्मेण हि विराजसे ।
गुणीभूताः स्म ते राजंस्त्वं नो राजा गुरूत्तमः ॥ १०१
यजस्व मदनुज्ञातः प्राप्य एष क्रतुस्त्वया ।
युनक्तु नो भवान् कार्ये यत्र वांच्छसि भारत ॥ १०२
एवमुक्तस्तु कृष्णेन धर्मपुत्रो युधिष्ठिरः ।
व्यासमामंत्र्य मेधावी ततो वचनमब्रवीत् ॥ १०३
यदा कालं भवान् वेत्ति हयमेधस्य तत्त्वतः ।
दीक्षयस्व तदा मां त्वं त्वय्यायत्तो हि मे क्रतुः ॥ १०४

व्या० उ—अहं पैलोऽथ कौंतेय याज्ञवल्क्यस्तथैव च ।
विधानं यद्यथाकालं तत्कर्तारो न संशयः ॥ १०५
चैत्र्यां हि पौर्णमास्यां तु तव दीक्षा भविष्यति ।
संभाराः संभ्रियंतां च यज्ञार्थं पुरुषर्षभ ॥ १०६
अश्वविद्याविदश्चैव सूता विप्राश्च तद्विदः ।
मेध्यमश्वं परीक्षन्तां तव यज्ञार्थसिद्धये ॥ १०७
तमुत्सृज्य यथाशास्त्रं पृथिवीं सागरांबराम् ।
स पर्येतु यशो दीप्तं तव पार्थिव दर्शयन् ॥ १०८
जिष्णुः सहिष्णुर्धृष्णुश्च स एनं पालयिष्यति ।
शक्तः स हि महीं जेतुं निवातकवचान्तकः ॥ १०९
भीमसेनोऽपि तेजस्वी कौंतेयोऽमितविक्रमः ।
समर्थो रक्षितुं राष्ट्रं नकुलश्च विशांपते ॥ ११०
सहदेवस्तु कौरव्य समाधास्यति बुद्धिमान् ।
कुटुंबतन्त्रं विधिवत्सर्वमेव महायशाः ॥ १११
तत्तु सर्वं यथान्यायमुक्तः कुरुकुलोद्वहः ।
चकार फाल्गुनं चापि संदिदेश हयं प्रति ॥ ११२
एह्यर्जुन त्वया वीर हयोऽयं परिपाल्यताम् ।
त्वमर्हो रक्षितुं ह्येनं नान्यः कश्चन मानवः ॥ ११३
ये चापि त्वां महाबाहो प्रत्युद्यांति नराधिपाः ।
तैर्विग्रहो यथा न स्यात्तथा कार्यं त्वयानघ ॥ ११४
आख्यातव्यश्च भवता यज्ञोऽयं मम सर्वशः ।
पार्थिवेभ्यो महाबाहो समये गम्यतामिति ॥ ११५
दीक्षाकाले तु संप्राप्ते ततस्ते सुमहर्त्विजः ।
विधिवद्दीक्षयामासुरश्वमेधाय पार्थिवम् ॥ ११६
कृत्वा स पशुबंधांश्च दीक्षितः पांडुनंदनः ।
धर्मराजो महातेजाः सहर्त्विग्भिर्व्यरोचत ॥ ११७
हयश्च हयमेधार्थं स्वयं च ब्रह्मवादिना ।
उत्सृष्टः शास्त्रविधिना व्यासेनामिततेजसा ॥ ११८
स राजा धर्मराड् राजन् दीक्षितो विबभौ तदा ।
हेममाली रुक्मकंठः प्रदीप्त इव पावकः ॥ ११९

कृष्णाजिनी दंडपाणिः क्षौमवासाः स धर्मजः ।
विबभौ द्युतिमान् भूयः प्रजापतिरिवाध्वरे ॥ १२०
तथैवास्यर्त्विजः सर्वे तुल्यवेशा विशांपते ॥ १२१
श्वेताश्वः कृष्णसारं तं ससाराश्वं धनंजयः ।
आकुमारं तदाराजन्नागमत्तत्पुरं विभो ॥ १२२
ततः शब्दो महाराज दिशः खं प्रतिपूरयन् ।
बभूव प्रेक्षतां नृणां कुंतिपुत्रं धनंजयम् ।
स्वस्ति तेऽस्तु व्रजारिष्टं पुनश्चैहीति भारत ॥ १२३
अनुजग्मुर्महात्मानं क्षत्रियाश्च विशांपते ।
विधिवत्पृथिवीपाल धर्मराजस्य शासनात् ॥ १२४
पांडवैः पृथिवीमश्वो निर्जितामस्त्रतेजसा ।
चचार स महाराज यथादेशं च सत्तम ॥ १२५
अवमृद्नन् स राष्ट्राणि पार्थिवानां हयोत्तमः ।
शनैस्तदा परिययौ श्वेताश्वश्च महारथः ॥ १२६
तत्र संगणना नास्ति राज्ञामयुतशस्तदा ।
येऽयुध्यंत महाराज क्षत्रिया हतबांधवाः ॥ १२७
किराता यवना राजन् बहवोऽपि धनुर्धराः ।
म्लेच्छाश्चान्ये बहुविधाः पूर्वं ये निकृता रणे ॥ १२८
आर्याश्च पृथिवीपालाः प्रहृष्टनरवाहनाः ।
समीयुः पांडुपुत्रेण बहवो युद्धदुर्मदाः ॥ १२९
एवं वृत्तानि युद्धानि तत्र तत्र महीपते ।
अर्जुनस्य महीपालैर्नानादेशसमागतैः ॥ १३०
तस्मिन् यज्ञे प्रवृत्ते तु वाग्मिनो हेतुवादिनः ।
हेतुवादान् बहूनाहुः परस्परजिगीषवः ॥ १३१
ददृशुस्तं नृपतयो यज्ञस्य विधिमुत्तमम् ।
देवेंद्रस्येव विहितं भीमसेनेन भारत ॥ १३२
ददृशुस्तोरणान्यत्र शातकुंभमयानि ते ।
शय्यासनविहारांश्च सुबहून् जनसंचयान् ॥ १३३
घटान् पात्रीः कटाहानि कलशान् वर्धमानकान् ।
न हि किंचिदसौवर्णमपश्यन् वसुधाधिपाः ॥ १३४

स्थलजा जलजा ये च पशवः केचन प्रभो ।
सर्वानेव समानीतानपश्यंस्तत्र ते नृपाः ॥ १३५
एवं प्रमुदितं सर्वं पशुगोधनधान्यतः ।
यज्ञवाटं नृपा दृष्ट्वा परं विस्मयमागताः ।
ब्राह्मणानां विशां चैव बहुमृष्टान्नमृद्धिमत् ॥ १३६
पूर्णे शतसहस्रे तु विप्राणां तत्र भुंजताम् ।
दुंदुभिर्मेघनिर्घोषो मुहुर्मुहुरताड्यत ॥ १३७
विननादासकृच्चापि दिवसे दिवसे गते ॥ १३८
जम्बुद्वीपो हि सकलो नानाजनपदैर्युतः ।
राजन्नदृश्यतैकस्थो राज्ञस्तस्य महामखे ॥ १३९
स्रग्विणश्चापि ते सर्वे सुमृष्टमणिकुंडलाः ।
पर्यवेशन् द्विजातींस्तान् शतशोऽथ सहस्रशः ॥ १४०
तेषां कथयतामेव पुरुषोऽर्जुनसंकथाम् ।
उपायाद्वचनाद्दूतो विजयस्य महात्मनः ॥ १४१
सोऽभिगम्य कुरुश्रेष्ठं नमस्कृत्य च बुद्धिमान् ।
उपायातं नरव्याघ्रं फाल्गुनं प्रत्यवेदयत् ॥ १४२
तच्छ्रुत्वा नृपतिस्तस्य हर्षबाष्पाकुलेक्षणः ।
प्रियाख्याननिमित्तं वै ददौ बहुधनं तदा ॥ १४३
ततो रेणुः समुद्भूतो विबभौ तस्य वाजिनः ।
अभितो वर्तमानस्य यथोच्चैःश्रवसस्तदा ॥ १४४
तत्र हर्षकरीर्वाचो नराणां शुश्रुवेऽर्जुनः ।
दिष्ट्या स पार्थः कुशली धन्यो राजा युधिष्ठिरः ॥ १४५
कोऽन्यो हि पृथिवीं कृत्स्नां जित्वा हि युधि पार्थिवान् ।
चारयित्वा हयश्रेष्ठमुपागच्छेदृतेऽर्जुनात् ॥ १४६
ये व्यतीता महात्मानो राजानः सगरादयः ।
तेषामपीदृशं कर्म न कदाचन शुश्रुम ॥ १४७
इत्येवं वदतां तेषां पुंसां कर्णसुखा गिरः ।
शृण्वन् विवेश धर्मात्मा फाल्गुनो यज्ञसंस्तरम् ॥ १४८
ततो राजा सहामात्यः कृष्णश्च यदुनंदनः ।
धृतराष्ट्रं पुरस्कृत्य तं प्रत्युद्ययतुस्तदा ॥ १४९

सोऽभिवाद्य पितुः पादौ धर्मराजस्य धीमतः ।
भीमादींश्चापि संपूज्य पर्यष्वजत केशवम् ॥ १५०
तैः समेत्यार्चितस्तांश्च प्रत्यर्च्याथ यथाविधि ।
विशश्राम महाबाहुस्तीरं लब्ध्वेव पारगः ॥ १५१

---

## ४

ततस्तृतीयदिवसे सत्यवत्यात्मजो मुनिः ।
युधिष्ठिरं समभ्येत्य वाग्मी वचनमब्रवीत् ॥ १५२
अद्य प्रभृति कौंतेय यजस्व समयो हि ते ।
मुहूर्तो यज्ञियः प्राप्तश्चोदयन्तीह याजकाः ॥ १५३
अहीनो नाम राजेन्द्र क्रतुस्तेऽयं च कल्पताम् ।
बहुत्वात्कांचनाख्यस्य ख्यातो बहुसुवर्णकः ॥ १५४
ततो यज्ञं महाबाहुर्वाजिमेधं महाक्रतुम् ।
बह्वन्नदक्षिणं राजा सर्वकामगुणान्वितम् ॥ १५५
तत्र वेदविदो राजंश्चक्रुः कर्माणि याजकाः ।
परिक्रमन्तः सर्वज्ञा विधिवत्साधु शिक्षितम् ॥ १५६
न तेषां स्खलितं किंचिदासीच्चाप्यकृतं तथा ।
क्रमयुक्तं च युक्तं च चक्रुस्तत्रद्विजर्षभाः ॥ १५७
अभिषूय ततो राजन् सोमं सोमपसत्तमाः ।
सवनान्यानुपूर्व्येण चक्रुः शास्त्रानुसारिणः ॥ १५८
न तत्र कृपणः कश्चिन्न दरिद्रो बभूव ह ।
क्षुधितो दुःखितो वापि प्राकृतो वापि मानवः ॥ १५९
भोजनं भोजनार्थिभ्यो दापयामास शत्रुहा ।
भीमसेनो महातेजाः सतत राजशासनात् ॥ १६०
ततो यूपोच्छ्रये प्राप्ते षड्बैलान् भरतर्षभ ।
खादिरान् बिल्वसमितांस्तावन्तः सर्ववर्णिनः ॥ १६१
देवदारुमयौ द्वौ तु यूपौ कुरुपतेर्मखे ।
श्लेष्मातकमयं चैकं याजकाः समकल्पयन् ॥ १६२
इष्टिकाः कांचनीश्चापि चयनार्थं कृताभवन् ।
शुशुभे चयनं तत्र दक्षस्येव प्रजापतेः ॥ १६३

चतुश्चित्यस्य तस्यासीदष्टादशकरात्मकः ।
सरुक्मपक्षो निचितस्त्रिकोणो गरुडाकृतिः ॥ १६४
ततो नियुक्ताः पशवो यथाशास्त्रं मनीषिभिः ।
तं तं देवं समुद्दिश्य पक्षिणः पशवश्च ये ॥ १६५
ऋषभाः शास्त्रपठितास्तथा जलचराश्च ये ।
सर्वांस्तानभ्ययुंजस्ते तत्राग्निचयकर्मणि ॥ १६६
अर्पयित्वा पशूनन्यान् विधिवद्द्विजसत्तमाः ।
तं तुरंगं यथाशास्त्रमालभन्त द्विजातयः ॥ १६७
ततः संज्ञाप्य तुरगं विधिवद्याजकास्तदा ।
उपसंवेशयन् राजंस्ततस्तां द्रुपदात्मजाम् ।
कलाभिस्तिसृभी राजन् यथाविधि मनास्विनीम् ॥ १६८
उद्धृत्य तु वपां तस्य यथाशास्त्रं द्विजातयः ।
श्रपयामासुरव्यग्रा विधिवद्भरतर्षभ ॥ १६९
तं वपाधूमगंधं तु धर्मराजः सहानुजैः ।
उपाजिघ्रद्यथाशास्त्रं सर्वपापापहं तदा ॥ १७०
शिष्टान्यंगानि यान्यासंस्तस्याश्वस्य नराधिप ।
तान्यग्नौ जुहुवुर्धीराः समस्ताः षोडशर्त्विजः ॥ १७१
संस्थाप्यैवं तस्य राज्ञस्तं यज्ञं शक्रतेजसः ।
व्यासः सशिष्यो भगवान् वर्धयामास तं नृपम् ॥ १७२
ततो युधिष्ठिरः प्रादाद्ब्राह्मणेभ्यो यथाविधि ।
कोटीः सहस्रं निष्काणां व्यासाय तु वसुंधराम् ॥ १७३
प्रतिगृह्य धरां राजन् व्यासः सत्यवतीसुतः ।
अब्रवीद्भरतश्रेष्ठ धर्मराजं युधिष्ठिरम् ॥ १७४
वसुधा भवतस्त्वेषा संन्यस्ता राजसत्तम ।
निष्क्रयो दीयतां मह्यं ब्राह्मणा हि धनार्थिनः ॥ १७५
युधिष्ठिरस्तु तान् विप्रान् प्रत्युवाच महामनाः ।
भ्रातृभिः सहितो धीमान् मध्ये राज्ञां महात्मनाम् ॥ १७६
अश्वमेधे महायज्ञे पृथिवी दक्षिणा स्मृता ।
अर्जुनेन जिता चेयं ऋत्विग्भ्यः प्रापिता मया ॥ १७७
वनं प्रवेक्ष्ये विप्राग्र्या विभजध्वं महीमिमाम् ।
चतुर्धा पृथिवीं कृत्वा चातुर्होत्रप्रमाणतः ॥ १७८

नाहमादातुमिच्छामि ब्रह्मस्वं द्विजसत्तमाः ।
इदं नित्यं मनो विप्रा भ्रातॄणां चैव मे सदा ॥ १७९

इत्युक्तवति तस्मिंस्तु भ्रातरो द्रौपदी च सा ।
एवमेतदिति प्राहुस्तदभूल्लोमहर्षणम् ॥ १८०

ततोऽन्तरिक्षे वागासीत्साधुसाध्विति भारत ।
तथैव द्विजसंघानां शंसतां विबभौ स्वनः ॥ १८१
द्वैपायनस्तथा कृष्णः पुनरेव युधिष्ठिरम् ।
प्रोवाच मध्ये विप्राणामिदं संपूजयन् मुनिः ।
दत्तैषा भवता मह्यं तां ते प्रति ददाम्यहम् ॥ १८२
ततोऽब्रवीद्वासुदेवो धर्मराजं युधिष्ठिरम् ।
यथाह भगवान् व्यासस्तथा त्वं कर्तुमर्हसि ॥ १८३
इत्युक्तः स कुरुश्रेष्ठः प्रीतात्मा भ्रातृभिः सह ।
कोटिकोटीकृतां प्रादाद्दक्षिणा त्रिगुणां क्रतोः ॥ १८४
तोरणानि च यूपांश्च घटाः पात्रीस्तथेष्टकाः ।
युधिष्ठिराभ्यनुज्ञाताः सर्वं तद्व्यभजन् द्विजाः ॥ १८५
ततस्ते ब्राह्मणाः सर्वे मुदिता जग्मुरालयान् ।
तर्पिता वसुना तेन धर्मराजेन धीमता ॥ १८६
स्वमंशं भगवान् व्यासः कुंत्यै प्रादाद्धि मानतः ।
प्रददौ तस्य महतो हिरण्यस्य महाद्युति ॥ १८७
श्वशुरात्प्रीतिदायं तं प्राप्य सा प्रीतमानसा ।
चकार पुण्यकं तेन सुमहत्सघशः पृथा ॥ १८८
गत्वा त्ववभृथे राजा विप्रात्मा भ्रातृभिः सह ।
संभाज्यमानः शुशुभे महेंद्रस्त्रिदशैरिव ॥ १८९
पांडवाश्च महीपालैः समेतैराभिसंवृताः ।
अशोभन्त महाराज ग्रहास्तारागणैरिव ॥ १९०
राजभ्योऽपि ततः प्रादाद्रत्नानि विविधानि च ।
गजानश्वानलंकारान् स्त्रियो वासांसि काचनम् ॥ १९१
नृपतींश्चैव तान् सर्वान् सुविभक्तान् सुपूजितान् ।
प्रस्थापयामास वशी कुरुराजो युधिष्ठिरः ॥ १९२
गोविंदं च महात्मानं बलदेवं महाबलम् ।
तथान्यान् वृष्णिवीरांश्च प्रद्युम्नाद्यान् सहस्रशः ॥ १९३

पूजयित्वा महाराज यथाविधि महाद्युतिः ।
भ्रातृभिः सहितो राजा प्रास्थापयदरिंदमः ॥ १९४
एवं बभूव यज्ञः स धर्मराजस्य धीमतः ।
बह्वन्नधनरत्नौघः सुरामैरेयसागरः ॥ १९५
सर्पिः पंका ह्रदा यत्र बभूवुश्चान्नपर्वताः ।
रसालाः कर्दमा नद्यो बभूवुर्भरतर्षभ ॥ १९६
भक्ष्यखांडवरागाणां क्रियतां भुज्यतां यथा ।
पशूनां बध्यतां चैव नान्तं ददृशिरे जनाः ॥ १९७
मत्तं प्रमत्तमुदितं सुप्रीतयुवतीजनम् ।
मृदंगशंखनादैश्च मनोरममभूत्तदा ॥ १९८
तं महोत्सवसंकाशं हृष्टपुष्टजनाकुलम् ।
कथयन्ति स्म पुरुषा नानादेशनिवासिनः ॥ १९९
वर्षित्वा धनदाराभिः कामै रत्नै रसैस्तदा ।
विपाप्मा भरतश्रेष्ठः कृतार्थः प्राविशत्पुरम् ॥ २००

इति श्रीसंक्षिप्तमहाभारते अश्वमेधपर्व समाप्तम् । श्लो सं २००.



# १५ आश्रमवासिपर्व.

## १

प्राप्य राज्यं महात्मानः पांडवा हतशत्रवः ।
धृतराष्ट्रं पुरस्कृत्य पृथिवीं पर्यपालयन् ॥ १
पाडवाः सर्वकार्याणि संपृच्छंति स्म त नृपम् ।
चक्रुस्तेनाभ्यनुज्ञाता वर्षाणि दश पंच च ॥ २
कुंतिभोजसुता चैव गांधारीमन्ववर्तत ॥ ३
द्रौपदी च सुभद्रा च याश्चान्याः पांडवस्त्रियः ।
समां वृत्तिमवर्तन्त तयोः श्वश्र्वोर्यथाविधि ॥ ४
शयनानि महार्हाणि वासांस्याभरणानि च ।
राजार्हाणि च सर्वाणि भक्ष्यभोज्यान्यनेकशः ।
युधिष्ठिरो महाराज धृतराष्ट्रेऽभ्युपाहरत् ॥ ५
व्यासाश्च भगवान्नित्यमासांचक्रे नृपेण ह । ६
एवं संपूजितो राजा पांडवैरंबिकासुतः ॥
विजहार यथापूर्वमृषिभिः पर्युपासितः ॥ ७
ब्रह्मदेयाग्रहारांश्च प्रददौ स कुरूद्वहः ।
तच्च कुन्तीसुतो राजा सर्वमेवान्वपद्यत ॥ ८
वर्तमानेषु सद्वृत्तिं पांडवेषु महात्मसु ।
प्रीतिमानभवद्राजा धृतराष्ट्रोऽम्बिकासुतः ॥ ९
सौबलेयी च गांधारी पुत्रशोकमपास्य तम् ।
सदैव प्रीतिमत्यासीत्तनयेषु निजेष्विव ॥ १०
यदा तु कौरवो राजा पुत्रं सस्मार दुर्मतिम् ।
तदा भीमं हृदा राजन्नपध्याति स पार्थिवः ॥ ११
तथैव भीमसेनोऽपि धृतराष्ट्रं जनाधिपम् ।
नामर्षयत राजेंद्रं सदैव दुष्टवद्धृदा ॥ १२
अप्रकाशान्यप्रियाणि चकारास्य वृकोदरः ।
आज्ञां प्रत्यहरच्चापि कृतकैः पुरुषैः सदा ॥ १३
अथ भीमः सुहृन्मध्ये बाहुशब्दं तथाकरोत् ।
संश्रवे धृतराष्ट्रस्य गांधार्याश्चाप्यमर्षणः ॥ १४
स्मृत्वा दुर्योधनं शत्रुं कर्णदुःशासनावपि ।
प्रोवाचेदं सुसंरब्धो भीमः स परुषं वचः ॥ १५

अंधस्य नृपतेः पुत्रा मया परिघबाहुना ।
नीता लोकममुं सर्वे नानाशस्त्रास्त्रयोधिनः ॥ १६
ताविमौ चंदनेनाक्तौ चंदनार्हौ च मे भुजौ ।
याभ्यां दुर्योधनो नीतः क्षयं ससुतबांधवः ॥ १७
वृकोदरस्य ता वाचः श्रुत्वा निर्वेदमागमत् ।
सा च बुद्धिमती देवी कालपर्यायवेदिनी ॥ १८
नावबुध्यत तद्राजा कुन्तीपुत्रो युधिष्ठिरः ।
श्वेताश्वो वाथ कुन्ती वा द्रौपदी वा यशस्विनी ॥ १९
ततः संमानयापास धृतराष्ट्रः सुहृज्जनम् ।
बाष्पसंदिग्धमत्यर्थमिदमाह च तान् भृशम् ॥ २०
विदितं भवतामेतद्यथावृत्तः कुरुक्षयः ।
ममापराधात्तत्सर्वमनुज्ञातं च कौरवैः ॥ २१
योऽहं दुष्टमतिं मंदो ज्ञातीनां भयवर्धनम् ।
दुर्योधनं कौरवाणामाधिपत्येऽभ्यषेचयम् ॥ २२
यच्चाहं वासुदेवस्य नाश्रौषं वाक्यमर्थवत् ।
बध्यतां साध्वयं पापः सामात्य इति दुर्मतिः ॥ २३
सोऽहमेतान्यलीकानि निवृत्तान्यात्मनस्तदा ।
हृदये शल्यभूतानि धारयामि सहस्रशः ॥ २४
विशेषतस्तु पश्यामि वर्षे पंचदशेऽद्य वै ।
अस्य पापस्य शुद्ध्यर्थं नियतोऽस्मि सुदुर्मतिः ॥ २५
चतुर्थे नियते काले कदाचिदपि चाष्टमे ।
तृष्णाविनयनं भुंजे गांधारी वेद तन्मम ॥ २६
करोत्याहारमिति मा सर्वः परिजनः सदा ।
युधिष्ठिरभयाद्वेत्ति भृशं तप्यति पांडवः ॥ २७
इत्युक्त्वा धर्मराजानमभ्यभाषत कौरवः ।
भद्रं ते यादवीमातर्वचश्चेदं निबोध मे ।
सुखमस्म्युषितः पुत्र त्वया सुपरिपालितः ॥ २८
द्रौपद्या ह्यपकर्तारस्तव चैश्वर्यहारिणः ।
समतीता नृशंसास्ते स्वधर्मेण हता युधि ॥ २९
आत्मनस्तु हितं पुण्यं प्रतिकर्तव्यमद्य वै ।
गांधार्याश्चैव राजेंद्र तदनुज्ञातुमर्हसि ॥ ३०

अनुज्ञातस्त्वया वीर संश्रयेयं वनान्यहम् ।
चीरवल्कलभृद्राजन् गांधार्या सहितोऽनया ॥ ३१
तवाशिषः प्रयुंजानो भविष्यामि वनेचरः ।
त्वं चापि फलभाक् तात तपसः पार्थिवो ह्यसि ॥ ३२
यु० उ०—अहोऽस्मि वंचितो मूढो भवता गूढबुद्धिना ।
विश्वासयित्वा पूर्वं मां यदिदं दुःखमश्नुथाः ॥ ३३
किं मे राज्येन भोगैर्वा किं यज्ञैः किं सुखेन वा ।
यस्य मे त्वं महीपाल दुःखान्येतान्यवाप्तवान् ॥ ३४
भवान् पिता भवान् माता भवान्नः परमो गुरुः ।
भवता विप्रहीना हि क नु तिष्ठामहे वयम् ॥ ३५
औरसो भवतः पुत्रो युयुत्सुर्नृपसत्तम ।
अस्तु राजा महाराज यमन्यं मन्यते भवान् ॥ ३६
अहं वनं गमिष्यामि भवान् राज्यं प्रशासतु ।
न मामयशसा दग्धं भूयस्त्वं दग्धुमर्हसि ॥ ३७
न मन्युर्हृदि नः कश्चित्सुयोधनकृतेऽनघ ।
भवितव्यं तथा तद्धि वयं चान्ये च मोहिताः ॥ ३८
स मां त्वं यदि राजेंद्र परित्यज्य गमिष्यसि ।
पृष्ठतस्त्वनुयास्यामि सत्यमात्मानमालभे ॥ ३९
इयं हि वसुसंपूर्णा मही सागरमेखला ।
भवता विप्रहीनस्य न मे प्रीतिकरी भवेत् ॥ ४०
धृत० उ०—तापस्ये मे मनस्तात वर्तते कुरुनंदन ।
उचितं च कुलेऽस्माकमरण्यगमनं प्रभो ॥ ४१
चिरमस्म्युषितः पुत्र चिरं शुश्रूषितस्त्वया ।
वृद्धं मामप्यनुज्ञातुमर्हसि त्वं नराधिप ॥ ४२
इत्युक्त्वा स तु धर्मात्मा वृद्धो राजा कुरूद्वहः ।
गांधारीं शिश्रिये धीमान् सहसैव गतासुवत् ॥ ४३
तं तु दृष्ट्वा समासीनो विसंज्ञमिव कौरवम् ।
आर्तिं राजागमत्तीव्रां कौंतेयः परवीरहा ॥ ४४
यु० उ०—यस्य नागसहस्रेण शतसंख्येन वै बलम् ।
सोऽयं नारीं व्यपाश्रित्य शेते राजा गतासुवत् ॥ ४५

ततोऽस्य पाणिना राजन् जलशीतेन पांडवः ।
उरो मुखं च शनकैः पर्यमार्जत धर्मवित् ॥ ४६
तेन रत्नौषधिमता पुण्येन च सुगंधिना ।
पाणिस्पर्शेन राज्ञः स राजा संज्ञामवाप ह ॥ ४७
धृ० उ०—अष्टमो ह्यद्य कालोऽयमाहारस्य कृतस्य मे ।
येनाहं कुरुशार्दूल शक्नोमि न विचेष्टितुम् ॥ ४८
व्यायामश्चायमत्यर्थः कृतस्त्वामभियाचता ।
ततो ग्लानमनास्तात नष्टसंज्ञ इवाभवम् ॥ ४९
उपलभ्य ततः प्राणान् धृतराष्ट्रो महीपतिः ।
बाहुभ्यां संपरिष्वज्य मूर्ध्न्यऽजिघ्रत पांडवम् ॥ ५०
विदुरादयश्च ते सर्वे रुरुदुर्दुःखिता भृशम् ।
अतिदुःखात्तु राजानं नोचुः किंचन पांडवम् ॥ ५१
अथाब्रवीत्पुनर्वाक्यं धृतराष्ट्रो युधिष्ठिरम् ।
अनुजानीहि मा राजंस्तापस्ये भरतर्षभ ॥ ५२
ग्लायते म मनस्तात भूयो भूयः प्रजल्पतः ।
न मामतः परं पुत्र परिक्लेष्टुमिहार्हसि ॥ ५३
यु० उ०—न कामये नरश्रेष्ठ जीवितं पृथिवीं तथा ।
यथा तव प्रियं राजंश्चिकीर्षामि परंतप ॥ ५४
यदि चाहमनुग्राह्यो भवतो दयितोऽपि वा ।
क्रियतां तावदाहारस्ततो वेत्स्याम्यहं परम् ॥ ५५
व्या० उ०—राजायं वृद्धतां प्राप्तः प्रमाणे परमे स्थितः ॥ ५६
सोऽयं मयाभ्यनुज्ञातस्त्वया च पृथिवीपतिः ।
करोतु स्वमभिप्रायं माऽस्य विघ्नकरो भव ॥ ५७
एष एव परो धर्मो राजर्षीणां युधिष्ठिर ।
समरे वा भवेन्मृत्युर्वने वा विधिपूर्वकम् ॥ ५८
ततो राजाभ्यनुज्ञातो धृतराष्ट्रः प्रतापवान् ।
ययौ स्वभवनं राजा गांधार्यानुगतस्तदा ॥ ५९
मंदप्राणगतिर्धीमान् कृच्छ्रादिव समुद्वहन् ।
पदानि स महीपालो जीर्णो गजपतिर्यथा ॥ ६०
ततो रजन्यां व्युष्टायां धृतराष्ट्रोऽबिकासुतः ।
विदुरं प्रेषयामास युधिष्ठिरनिवेशनम् ॥ ६१

स गत्वा राजवचनादुवाचाच्युतमीश्वरम् ।
युधिष्ठिरं महातेजाः सर्वबुद्धिमतां वरः ॥ ६२
धृतराष्ट्रो महाराजो वनवासाय दीक्षितः ।
गमिष्यति वनं राजन्नागतां कार्तिकीमिमाम् ॥ ६३
स त्वां कुरुकुलश्रेष्ठ किंचिदर्थमभीप्सति ।
श्राद्धमिच्छति दातुं स गांगेयस्य महात्मनः ॥ ६४
द्रोणस्य सोमदत्तस्य बाल्हीकस्य च धीमतः ।
पुत्राणां चैव सर्वेषां ये चान्ये सुहृदो हताः ।
यदि चाप्यनुजानीषे सैंधवापसदस्य च ॥ ६५
एतच्छ्रुत्वा तु वचनं विदुरस्य युधिष्ठिरः ।
हृष्टः संपूजयामास गुडाकेशश्च पांडवः ॥ ६६
न तु भीमो दृढक्रोधस्तद्वचो जगृहे तदा ।
उवाच वचनं धीमाञ् जोषमास्वेति भर्त्सयन् ॥ ६७
इदं मद्वचनात्क्षत्तः कौरवं ब्रूहि पार्थिवम् ।
यावदिच्छति पुत्राणां श्राद्धं तावद्ददाम्यहम् ॥ ६८
भीष्मादिनां च सर्वेषां सुहृदामाप्तकारिणां ।
मम कोशादिति विभो माभूद्भीमः सुदुर्मनाः ॥ ६९
भीमसेने न कोपं स नृपतिः कर्तुमर्हति ।
परिक्लिष्टो हि भीमोऽयं हिमवृष्ट्यातपादिभिः ॥ ७०
विदुरेणैवमुक्तस्तु धृतराष्ट्रो नराधिपः ।
प्रीतिमानभवद्राजन् राज्ञो जिष्णोश्च कर्मणि ॥ ७१
ततोऽभिरूपान् भीष्माय ब्राह्मणानृषिसत्तमान् ।
पुत्रार्थे सुहृदश्चैव स समीक्ष्य सहस्रशः ॥ ७२
कारयित्वान्नपानानि यानान्याच्छादनानि च ।
सुवर्णमणिरत्नानि दासीदासमजाविकम् ॥ ७३
कंबलानि च रत्नानि ग्रामान् क्षेत्राण्यजाविकम् ।
सालंकारान् गजानश्वान् कन्याश्चैव वरस्त्रियः ॥ ७४
उद्दिश्योद्दिश्य सर्वेभ्यो ददौ स नृपसत्तमः ॥ ७५
दशाहमेवं दानानि दत्वा राजांबिकासुतः ।
बभूव पुत्रपौत्राणामनृणो भरतर्षभ ॥ ७६

---

## २

ततः प्रभाते राजा स धृतराष्ट्रोऽम्बिकासुतः ।
आहूय पांडवान् वीरान् वनवासे कृतक्षणः ।
गांधारीसहितो धीमानभ्यनंदद्यथाविधि ॥ ७७
कार्तिक्यां कारयित्वेष्टिं ब्राह्मणैर्वेदपारगैः ।
अग्निहोत्रं पुरस्कृत्य वल्कलाजिनसंवृतः ॥ ७८
बंधुजनवृतो राजा निर्ययौ भवनात्ततः ॥ ७९
ततो राजा प्रांजलिर्वेपमानो
युधिष्ठिरः सस्वरं बाष्पकंठः ।
विमुच्योच्चैर्महानादं हि साधोः
क्व यास्यसीत्यपतत्तात भूमौ ॥ ८०
तथार्जुनस्तीव्रदुःखाभितप्तो
मुहुर्मुहुर्निश्वसन् भारताग्र्यः ।
युधिष्ठिरं मैवमित्येवमुक्त्वा
निगृह्याथो दीनवत्सीदमानः ॥ ८१
कुंती गांधारीं बद्धनेत्रां व्रजन्तीं
स्कंधासक्तं हस्तमथोद्वहन्ती ।
राजा गांधार्याः स्कंधदेशेऽवसज्य
पाणिं ययौ धृतराष्ट्रः प्रतीतः ॥ ८२
ततो निष्पेतुर्ब्राह्मणक्षत्रियाणां
विशां शूद्राणां चैव भार्याः समंतात् ।
तन्निर्याणे दुःखितः पौरवर्गो
गजाह्वये चैव बभूव राजन् ॥ ८३
ततो राजा राजमार्गेण नृनारीसंकुलेन च ।
कथंचिन्निर्ययौ धीमान् वेपमानः कृतांजलिः ॥ ८४
स वर्धमानद्वारेण निर्ययौ गजसाह्वयात् ।
विसर्जयामास च तं जनौघं स मुहुर्मुहुः ॥ ८५
वनं गंतुं च विदुरो राज्ञा सह कृतक्षणः ।
संजयश्च महामात्रः सूतो गावल्गणिस्तथा ॥ ८६
कृपं निवर्तयामास युयुत्सुं च महारथम् ।
धृतराष्ट्रो महीपालः परिदाप्य युधिष्ठिरे ॥ ८७

निवृत्ते पौरवर्गे च राजा सांतःपुरस्तदा ।
धृतराष्ट्राभ्यनुज्ञातो निवर्तितुमियेष ह ॥ ८८
सोऽब्रवीन्मातरं कुन्तीं वनं तमनुजग्मुषीम् ।
अहं राजानमन्विष्ये भवती विनिवर्तताम् ।
वधूपरिवृता राज्ञि नगरं गंतुमर्हसि ॥ ८९
इत्युक्ता धर्मराजेन बाष्पव्याकुललोचना ।
जगामैव तदा कुंती गांधारीं परिगृह्य ह ॥ ९०
मुहूर्तमिव तु ध्यात्वा धर्मराजो युधिष्ठिरः ।
उवाच मातरं दीनश्चिताशोकपरायणः ॥ ९१
पुरोद्यतान् पुरा ह्यस्मानुत्साद्य प्रियदर्शने ।
विदुलाया वचोभिस्त्वं नास्मान् संत्यक्तुमर्हसि ॥ ९२
निहत्य पृथिवीपालान् राज्यं प्राप्तमिदं मया ।
तव प्रज्ञामुपश्रुत्य वासुदेवान्नरर्षभात् ॥ ९३
अस्मानुत्सृज्य राज्यं च स्नुषां ह्येषां यशस्विनीं ।
कथं वत्स्यसि दुर्गेषु वनेष्वथ प्रसीद मे ॥ ९४
इति बाष्पकला वाचः कुंती पुत्रस्य शृण्वती ।
सा जगामाश्रुपूर्णाक्षी भीमस्तामिदमब्रवीत् ॥ ९५
किं वयं कारिताः पूर्वं भवत्या पृथिवीक्षयम् ।
कस्य हेतोः परित्यज्य वनं गंतुमभीप्ससि ॥ ९६
वनाच्चापि किमानीता भवत्या बालका वयम् ।
दुःखशोकसमाविष्टौ माद्रीपुत्राविमौ तथा ॥ ९७
प्रसीद मातर्मागास्त्वं वनमद्य यशस्विनि ।
श्रियं यौधिष्ठिरीं मातर्भुंक्ष्व तावद्बलार्जिताम् ॥ ९८
इति सा निश्चितैवाशु वनवासाय भाविनी ।
लालप्यतां बहुविधं पुत्रणां नाकरोद्वचः ॥ ९९
द्रौपदी चान्वयाच्छ्वश्रूं विषण्णवदना तदा ।
वनवासाय गच्छंतीं रुदती भद्रया सह ॥ १००
सा पुत्रान् रुदतः सर्वान् मुहुर्मुहुरवेक्षती ।
जगामैव महाप्राज्ञा वनाय कृतनिश्चया ॥ १०१
अन्वयुः पांडवास्तां तु सभृत्यान्तःपुरास्तथा ।
ततः प्रगृह्य साश्रूणि पुत्रान् वचनमब्रवीत् ॥ १०२

एवमेतन्महाबाहो यथा वदसि पांडव ।
कृतमुद्धर्षणं पूर्वं मया वः सीदतो नृपाः ॥ १०३
द्यूतापहृतराज्यानां पतितानां सुखादपि ।
ज्ञातिभिः परिभूतानां कृतमुद्धर्षणं मया ॥ १०४
कथं पांडोर्न नश्येत संततिः पुरुषर्षभाः ।
यशश्च वो न नश्येत इति चोद्धर्षणं कृतम् ॥ १०५
यूयमिंद्रसमाः सर्वे देवतुल्यपराक्रमाः ।
मा परेषां मुखप्रेक्षाः स्थेत्येवं तत्कृतं मया ॥ १०६
इयं च बृहती श्यामा तथा ह्यायतलोचना ।
वृथा सभातले क्लिष्टा मा भूदिति च तत्कृतम् ॥ १०७
प्रेक्षतामेव वो भीम वेपंतीं कदलीमिव ।
स्त्रीधर्मिणीमरिष्टांगीं तथा द्यूतपराजिताम् ॥ १०८
दुःशासनो यदा मौर्ख्याद्दासीवत्पर्यकर्षत ।
तदैव विदितं मह्यं पराभूतमिदं कुलम् ॥ १०९
भुक्तं राज्यफलं पुत्रा भर्तुर्मे विपुलं पुरा ।
महादानानि दत्तानि पीतः सोमो यथाविधि ॥ ११०
नाहमात्मफलार्थं वै वासुदेवमचूचुदम् ।
विदुलायाः प्रलापैस्तैः पालनार्थं च तत्कृतम् ॥ १११
नाहं राज्यफलं पुत्राः कामये पुत्रनिर्जितम् ।
पतिलोकानहं पुण्यान् कामये तपसा विभो ॥ ११२
श्वश्रूश्वशुरयोः कृत्वा शुश्रूषां वनवासिनोः ।
तपसा शोषयिष्यामि युधिष्ठिर कलेवरम् ॥ ११३
निवर्तस्व कुरुश्रेष्ठ भीमसेनादिभिः सह ।
धर्मे ते धीयतां बुद्धिर्मनस्ते महदस्तु च ॥ ११४
कुंत्यास्तु वचनं श्रुत्वा पांडवा राजसत्तम ।
व्रीडिताः संन्यवर्तंत पांचाल्या सहितानघाः ॥ ११५
ततः शब्दो महानेव सर्वेषामभवत्तदा ।
अन्तःपुराणां रुदतां दृष्ट्वा कुंतीं तथा गताम् ॥ ११६
प्रदक्षिणमथावृत्य राजानं पांडवास्तदा ।
अभिवाद्य न्यवर्तन्त पृथां तामनिवर्त्य वै ॥ ११७
ततोऽब्रवीन्महातेजा धृतराष्ट्रोऽम्बिकासुतः ।
गांधारीं विदुरं चैव समाभाष्यावगृह्य च ॥ ११८

युधिष्ठिरस्य जननी देवी साधु निवर्त्यताम् ।
यथा युधिष्ठिरः प्राह तत्सर्वं सत्यमेव हि ॥ ११९
पुत्रैश्वर्यं महदिदमपास्य च महाफलम् ।
का नु गच्छेद्वनं दुर्गं पुत्रानुत्सृज्य मूढवत् ॥ १२०
गांधारि परितुष्टोऽस्मि वध्वाः शुश्रूषणेन वै ।
तस्मात्त्वमेनां धर्मज्ञे समनुज्ञातुमर्हसि ॥ १२१
इत्युक्ता सौबलेयी तु राज्ञा कुंतीमुवाच ह ।
तत्सर्वं राजवचनं स्वं च वाक्यं विशेषवत् ॥ १२२
न च सा वनवासाय देवीं कृतमतीं तदाः ।
शक्नोत्युपावर्तयितुं कुंतीं धर्मपरां सतीम् ॥ १२३
तस्यास्तां तु स्थितिं ज्ञात्वा व्यवसायं कुरुस्त्रियः ।
निवृत्तांश्च कुरुश्रेष्ठान दृष्ट्वा प्ररुरुदुस्तदा ॥ १२४
उपावृत्तेषु पार्थेषु सर्वास्वेव वधूषु च ।
ययौ राजा महाप्राज्ञो धृतराष्ट्रो वनं तदा ॥ १२५
पांडवाश्चातिदीनास्ते दुःखशोकपरायणाः ।
यानैः स्त्रीसहिताः सर्वे पुरं प्रविविशुस्तदा ॥ १२६
तदहृष्टमनानदं गतोत्सवमिवाभवत् ।
नगरं हस्तिनपुरं सस्त्रीवृद्धकुमारकम् ॥ १२७
धृतराष्ट्रस्तु तेनाह्ना गत्वा सुमहदन्तरम् ।
ततो भागीरथीतीरे निवासमकरोत्प्रभुः ॥ १२८

---

३

द्विवर्षोपनिवृत्तेषु पांडवेषु यदृच्छया ।
देवर्षिर्नारदो राजन्नाजगाम युधिष्ठिरम् ॥ १२९
तमभ्यर्च्य महाबाहुः कुरुराजो युधिष्ठिरः ।
आसीनं परिविश्वस्तं प्रोवाच वदतां वरः ॥ १३०
वदन्ति पुरुषा मेऽद्य गंगातीरनिवासिनः ।
धृतराष्ट्रं महात्मानमास्थितं परमं तपः ॥ १३१
ना० उ०—स्थिरीभूय महाराज शृणु वृत्तं यथातथम् ।
यथा श्रुतं च दृष्टं च मया तस्मिंस्तपोवने ॥ १३२

कुरुक्षेत्रात्पिता तुभ्यं गंगाद्वारं ययौ नृप ।
गांधार्या सहितो धीमान् वध्वा कुंत्या समान्वितः ॥ १३३

आतस्थे स तपस्तीव्रं पिता तव तपोधनः ।
वीटां मुखे समादाय वायुभक्ष्योऽभवन्मुनिः ॥ १३४

गांधारी तु जलाहारी कुंती मासोपवासिनी ।
संजयः षष्ठभुक्तेन वर्तयामास भारत ॥ १३५

अनिकेतोऽथ राजा स बभूव वनगोचरः ।
ते चापि सहिते देव्यौ संजयश्च तमन्वयुः ॥ १३६

संजयो नृपतेर्नेता समेषु विषमेषु च ।
गांधार्याश्च पृथा राजंश्चक्षुरासीदनिंदिता ॥ १३७

ततः कदाचिद्गंगायाः कच्छे स नृपसत्तमः ।
गंगायामाप्लुतो धीमानाश्रमाभिमुखोऽभवत् ॥ १३८

अथ वायुसमुद्धूतो दावाग्निरभवन्महान् ।
ददाह तद्वनं सर्वं परिगृह्य समन्ततः ॥ १३९

निराहारतया राजा मंदप्राणविचेष्टितः ।
असमर्थोऽपसरणे सुकृशे मातरौ च ते ॥ १४०

ततः स नृपतिर्दृष्ट्वा वह्निमायान्तमन्तिकात् ।
इदमाह ततः सूतं संजयं जयतां वरः ॥ १४१

गच्छ संजय यत्राग्निर्न त्वां दहति कर्हिचित् ।
वयमत्राग्निना युक्ता गमिष्यामः परां गतिम् ॥ १४२
नैष मृत्युरनिष्टो नो निसृतानां गृहात्स्वयम् ॥ १४३
जलमग्निस्तथा वायुरथवापि विकर्षणम् ।
तापसानां प्रशस्यंते गच्छ संजय मा चिरम् ॥ १४४
इत्युक्त्वा संजय राजा समाधाय मनस्तथा ।
प्राङ्मुखः सहगांधार्या कुंत्या चोपाविशत्तदा ॥ १४५
सन्निरुध्येंद्रियग्राममासीत्काष्ठोपमस्तदा ।
गांधारी च महाभागा जननी च पृथा तव ।
दावाग्निना समायुक्ते स च राजा पिता तव ॥ १४६
संजयस्तु महामात्रस्तस्माद्दावादमुच्यत ।
गंगाकूले मया दृष्टस्तापसैः परिवारितः ॥ १४७

स तानामंत्र्य तेजस्वी निवेद्यैतच्च सर्वशः ।
प्रययौ संजयो धीमान् हिमवंतं महीधरम् ॥ १४८
एतच्छ्रुत्वा च सर्वेषां पांडवानां महात्मनाम् ।
निर्याणं धृतराष्ट्रस्य शोकः समभवन्महान् ॥ १४९
अहो धिगिति राजा तु विक्रुश्य भृशदुःखितः ।
ऊर्ध्वबाहुः स्मरन्मातुः प्ररुरोद युधिष्ठिरः ॥ १५०
दुर्विज्ञेया गतिर्ब्रह्मन् पुरुषाणां मतिर्मम ।
यत्र वैचित्रवीर्योऽसौ दग्ध एवं वनाग्निना ॥ १५१
तस्य पुत्रशतं श्रीमद्भवद्बाहुशालिनः ।
नागायुतबलो राजा स दग्धो हि दवाग्निना ॥ १५२
यं पुरा पर्यवीजंत तालवृन्तैर्वरास्त्रियः ।
तं गृध्राः पर्यवीजंत दावाग्निपरिकालितम् ॥ १५३
न च शोचामि गांधारीं हतपुत्रां यशस्विनीम् ।
पतिलोकमनुप्राप्तां तथा भर्तृव्रते स्थिताम् ॥ १५४
पृथामेव च शोचामि या पुत्रैश्वर्यमृद्धिमत् ।
उत्सृज्य सुमहद्दीप्तं वनवासमरोचयत् ॥ १५५
धिग्राज्यमिदमस्माकं धिग्बलं धिक् पराक्रमम् ।
क्षत्रधर्मं च धिग्यस्मान्मृता जीवामहे वयम् ॥ १५६
युधिष्ठिरस्य जननी भीमस्य विजयस्य च ।
अनाथवत्कथं दग्धा इति मुह्यामि चिंतयन् ॥ १५७
तच्छ्रुत्वा रुरुदुः सर्वे समालिंग्य परस्परम् ।
पांडवाः पंच दुःखार्ता भूतानीव युगक्षये ॥ १५८
तेषां तु पुरुषेंद्राणां रुदतां रुदितस्वनः ।
प्रासादाभोगसंवृद्धो अन्वरौत्सीत्स रोदसी ॥ १५९
ततः स पृथिवीपालः पांडवानां धुरंधरः ।
निर्ययौ सहसोदर्यैः सदारश्च नरर्षभः ॥ १६०
पौरजानपदाश्चैव राजभक्तिपुरस्कृताः ।
गंगां प्रजग्मुरभितो वाससैकेन संवृताः ॥ १६१
ततोऽवगाह्य सलिलं सर्वे ते नरपुंगवाः ।
युयुत्सुमग्रतः कृत्वा ददुस्तोयं महात्मने ॥ १६२

गांधार्याश्च पृथायाश्च विधिवन्नामगोत्रतः ।
शौचं निर्वर्तयंतस्ते तत्रोषुर्नगराद्बहिः ॥ १६३
द्वादशेऽहनि तेभ्यः स कृतशौचो नराधिपः ।
ददौ श्राद्धानि विधिवद्दक्षिणावंति पांडवः ॥ १६४
धृतराष्ट्रं समुद्दिश्य ददौ स पृथिवीपतिः ।
सुवर्णं रजतं गाश्च शय्याश्च सुमहाधनाः ॥ १६५
यानमाच्छादनं भोगान् दासीश्च समलंकृताः ।
ददौ राजा समुद्दिश्य तयोर्मात्रोर्महीपतिः ॥ १६६
ततः स पृथिवीपालो दत्वा श्राद्धान्यनेकशः ।
प्रविवेश पुरं राजा नगरं वारणाह्वयम् ॥ १६७
समाश्वास्य तु राजानं धर्मात्मानं युधिष्ठिरम् ।
नारदोऽप्यगमद्राजन् परमर्षिर्यथेप्सितम् ॥ १६८
एवं वर्षाण्यतीतानि धृतराष्ट्रस्य धीमतः ।
वनवासे तथा त्रीणि नगरे दश पंच च ॥ १६९
युधिष्ठिरस्तु नृपतिर्नातिप्रीतमनास्तदा ।
धारयामास तद्राज्यं निहतज्ञातिबांधवः ॥ १७०

इति श्रीसंक्षिप्तमहाभारते आश्रमवासिपर्व समाप्तम् । श्लो. सं. १७०



# १६ अथ मौसलपर्व.

## १

षट्त्रिंशेऽथ ततो वर्षे वृष्णीनामनयो महान् ।
अन्योन्यं मुसलैस्ते तु निजघ्नुः कालचोदिताः ॥ १
विश्वामित्र च कण्वं च नारदं च तपोधनम् ।
सारणप्रमुखा वीरा ददृशुर्द्वारकां गतान् ॥ २
ते तान् सांबं पुरस्कृत्य भूषयित्वा स्त्रियं यथा ।
अब्रुवन्नुपसंगम्य दैवदंडनिपीडिताः ॥ ३
इय स्त्री पुत्रकामस्य बभ्रोरमिततेजसः ।
ऋषयः साधु जानीत किमियं जनयिष्यति ॥ ४
इत्युक्तास्ते तदा राजन् विप्रलंभप्रधर्षिताः ।
प्रत्यब्रुवंस्तान्मुनयो यत्तच्छृणु नराधिप ॥ ५
वृष्ण्यंधकविनाशाय मुसलं घोरमायसम् ।
वासुदेवस्य दायादः सांबोऽयं जनयिष्यति ॥ ६
येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः ।
उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्दनौ ॥ ७
श्वोभूतेऽथ ततः सांबा मुशलं तदसूत वै ।
विषण्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत् ॥ ८
तच्चूर्णं सागरे चापि प्राक्षिपन् पुरुषा नृप ॥ ९
उत्पेदिरे महावाता दारुणाश्च दिने दिने ।
वृष्ण्यंधकविनाशाय बहवो लोमहर्षणाः ॥ १०
विवृद्धमूषका रथ्या विभिन्नमणिकास्तथा ।
केशा नखाश्च सुप्तानामद्यंते मूषकैर्निशि ॥ ११
वीचीकूचीति वाशंति सारिका वृष्णिवेश्मसु ।
अजाः शिवानां विरुतमन्वकुर्वत भारत ॥ १२
नापत्रपंत पापानि कुर्वंतो वृष्णयस्तदा ।
प्राद्विषन् ब्राह्मणांश्चापि पितॄन् देवांस्तथैव च ।
पत्न्यः पतीनुच्चरत पत्नीश्च पतयस्तथा ॥ १३
एवं पश्यन् हृषीकेशः संप्राप्तं कालपर्ययम् ।
त्रयोदश्याममावास्यां तान् दृष्ट्वा प्राब्रवीदिदम् ॥ १४

चतुर्दशी पंचदशी कृतेयं राहुणा पुनः ।
प्राप्ते वै भारते युद्धे प्राप्ता चाद्य क्षयाय नः ॥ १५
ततो जिगमिषंतस्ते वृष्ण्यंधकमहारथाः ।
सांतःपुरास्तदा तीर्थयात्रामैच्छन्नरर्षभाः ॥ १६
ततो भोज्यं च भक्ष्यं च पेयं चांधकवृष्णयः ।
बहु नानाविधं चक्रुर्मद्यं मांसमनेकशः ॥ १७
निविष्टांस्तान्निशम्याथ समुद्रांते स योगवित् ।
जगामामंत्र्य तान् वीरानुद्धवोऽर्थविशारदः ॥ १८
ततस्तूर्यशताकीर्णं नटनर्तकसंकुलम् ।
अवर्तत महापानं प्रभासे तिग्मतेजसाम् ॥ १९
कृष्णस्य सन्निधौ रामः सहितः कृतवर्मणा ।
अपिबद्युयुधानश्च गदो बभ्रुस्तथैव च ॥ २०
ततः परिषदो मध्ये युयुधानो मदोत्कटः ।
अब्रवीत्कृतवर्माणमवहस्यावमन्य च ॥ २१
कः क्षत्रियो हन्यमानः सुप्तान् हन्यान्मृतानिव ।
तन्न मृष्यंति हार्दिक्य यादवा यत्त्वया कृतम् ॥ २२
इत्युक्ते युयुधानेन पूजयामास तद्वचः ।
प्रद्युम्नो रथिनां श्रेष्ठो हार्दिक्यमवमन्य च ॥ २३
ततः परमसंक्रुद्धः कृतवर्मा तमब्रवीत् ।
निर्दिशन्निव सावज्ञं तथा सव्येन पाणिना ॥ २४
भूरिश्रवाश्छिन्नबाहुर्युद्धे प्रायगतस्त्वया ।
वधेन सुनृशंसेन कथं वीरेण पातितः ॥ २५
इति तस्य वचः श्रुत्वा केशवः परवीरहा ।
तिर्यक् सरोषया दृष्ट्या वीक्षाचक्रे स मन्युमान् ॥ २६
मणिः स्यमंतकश्चैव यः स सत्राजितोऽभवत् ।
तां कथां श्रावयामास सात्यकिर्मधुसूदनम् ॥ २७
तच्छ्रुत्वा केशवस्यांकमगमद्रुदती तदा ।
सत्यभामा प्रकुपिता कोपयन्ती जनार्दनम् ॥ २८
तत उत्थाय सक्रोधः सात्यकिर्वाक्यमब्रवीत् ।
पंचानां द्रौपदेयानां धृष्टद्युम्नशिखंडिनोः ॥ २९

एष गच्छामि पदवीं सत्येन च तथा शपे ।
सौप्तिके ये च निहताः सुप्ता येन दुरात्मना ॥ ३०
द्रोणपुत्रसहायेन पापेन कृतवर्मणा ।
समाप्तमायुरस्याद्य यशश्चैव सुमध्यमे ॥ ३१
इत्येवमुक्त्वा खड्गेन केशवस्य समीपतः ।
अभिद्रुत्य शिरः क्रुद्धश्चिच्छेद कृतवर्मणः ॥ ३२
एकीभूतास्ततः सर्वे कालपर्यायचोदिताः ।
भोजांधका महाराज शैनेयं पर्यवारयन् ॥ ३३
तान्दृष्ट्वा पततस्तूर्णमभिक्रुद्धाञ् जनार्दनः ।
न चुक्रोध महातेजा जानन् कालस्य पर्ययम् ॥ ३४
ते तु पानमदाविष्टाश्चोदिताः कालकर्मणा ।
युयुधानमथाभ्यघ्नन्नुच्छिष्टैर्भाजनैस्तदा ॥ ३५
हन्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः ।
तदनंतरमागच्छन् मोक्षयिष्यञ् शिनेः सुतम् ॥ ३६
बहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः ॥ ३७
हतं दृष्ट्वा तु शैनेयं पुत्रं च यदुनन्दनः ।
एरकाणां तदा मुष्टिं कोपाज्जग्राह केशवः ॥ ३८
तदभून्मुसलं घोरं वज्रकल्पमयोमयम् ।
जघान कृष्णस्तांस्तेन ये ये प्रमुखतोऽभवन् ॥ ३९
ततोऽधकाश्च भोजाश्च शैनेया वृष्णयस्तथा ।
जघ्नुरन्योन्यमाक्रंदे मुसलैः कालचोदिताः ॥ ४०
यस्तेषामेरकां कश्चिज्जग्राह कुपितो नृप ।
तृणं च मुसलीभूतमपि तत्र व्यदृश्यत ॥ ४१
अवधीत्पितरं पुत्र पिता पुत्रं च भारत ।
मत्ता परिपतंति स्म योधयंतः परस्परम् ॥ ४२
साबं च निहतं दृष्ट्वा चारुदेष्णं च माधवः ।
प्रद्युम्नं चानिरुद्धं च ततश्चुक्रोध माधवः ॥ ४३
गदं वीक्ष्य शयानं च भृशं कोपसमन्वितः ।
स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः ॥ ४४
ततः समासाद्य महानुभावं कृष्णस्तदा दारुकमन्वशासत् ।
गत्वा कुरून् सर्वमिदं महांतं पार्थाय शंसस्व वधं यदूनाम् ॥ ४५

ततोऽर्जुनः क्षिप्रमिहोपयातु श्रुत्वा मृतान् यादवान् ब्रह्मशापात् ।
इत्येवमुक्तः स ययौ रथेन कुरूंस्तथा दारुको नष्टचेताः ॥ ४६
ततो गते दारुके केशवोऽथ दृष्ट्वान्तिके बभ्रुमुवाच वाक्यम् ।
स्त्रियो भवान् रक्षितुं यातु शीघ्रं नैता हिंस्युर्दस्यवो वित्तलोभात् ॥ ४७
तं विश्रांतं संनिधौ केशवस्य दुरंतमेकं सहसैव बभ्रुम् ।
ब्रह्मानुशप्तमवधीन्महद्वै कूटे युक्तं मुसलं लुब्धकस्य ॥ ४८
ततो दृष्ट्वा निहतं बभ्रुमाह कृष्णोऽग्रजं भ्रातरमुग्रतेजाः ।
इहैव त्वं मां प्रतीक्षस्व राम यावत्स्त्रियो ज्ञातिवशाः करोमि ॥ ४९
ततः पुरीं द्वारवतीं प्रविश्य जनार्दनः पितरं प्राह वाक्यम् ।
स्त्रियो भवान् रक्षतु नः समग्रा धनंजयस्यागमनं प्रतीक्षन् ॥ ५०
रामो वनांते प्रतिपालयन्मामास्तेऽद्याहं तेन समागमिष्ये ।
दृष्टं मयेदं निधनं यदूनां राज्ञां च पूर्वं कुरुपुंगवानाम् ॥ ५१
इतीदमुक्त्वा शिरसा च पादौ संस्पृश्य कृष्णस्त्वरितो जगाम ।
ततो महान्निनदः प्रादुरासीत्सस्त्रीकुमारस्य पुरस्य तस्य ॥ ५२
ततो गत्वा केशवस्तं ददर्श रामं वने स्थितमेकं विविक्ते ।
अथापश्यद्योगयुक्तस्य तस्य नागं मुखान्निश्चरंतं महान्तम् ॥ ५३
संचिंतयन्नंधकवृष्णिनाशं कुरुक्षयं चैव महानुभावः ।
मेने ततः संक्रमणस्य कालं ततश्चकारेंद्रियसन्निरोधम् ॥ ५४
स सन्निरुद्धेंद्रियवाङ्मनास्तु शिश्ये महायोगमुपेत्य कृष्णः ।
जराथ तं देशमुपाजगाम लुब्धस्तदानीं मृगलिप्सुरुग्रः ॥ ५५
स केशवं योगयुक्तं शयानं मृगाशंकी लुब्धकः सायकेन ।
जराऽविध्यत्पादतले त्वरावांस्तं चाभितस्तज्जिघृक्षुर्जगाम ॥ ५६
ततो राजन् भगवानुग्रतेजा नारायणः प्रभवश्चाव्ययश्च ।
योगाचार्यो रोदसी व्याप्य लक्ष्म्या स्थानं प्राप स्वं महात्माऽप्रमेयम् ॥ ५७

---

## २

दारुकोऽथ कुरून् गत्वा दृष्ट्वा पार्थान् महारथान् ।
आचष्ट मौसले वृष्णीनन्योन्येनोपसंहृतान् ॥ ५८
श्रुत्वा विनष्टान् वार्ष्णेयान् सभोजांधककुकुरान् ।
पांडवाः शोकसंतप्ता वित्रस्तमनसोऽभवन् ॥ ५९
ततोऽर्जुनस्तानामंत्र्य केशवस्य प्रियः सखा ।
प्रययौ मातुलं द्रष्टुं नेदमस्तीति चाब्रवीत् ॥ ६०

स वृष्णिनिलयं गत्वा दारुकेन सह प्रभो ।
ददर्श द्वारकां वीरो मृतनाथामिव स्त्रियम् ॥ ६१
याः स्म ता लोकनाथेन नाथवत्यः पुराभवन् ।
तास्त्वनाथास्तदा नाथं पार्थं दृष्ट्वा विचुक्रुशुः ॥ ६२
षोडशस्त्रीसहस्राणि वासुदेवपरिग्रहः ।
तासामासीन्महान्नादो दृष्ट्वैवार्जुनमागतम् ॥ ६३
तां दृष्ट्वा द्वारकां पार्थस्ताश्च कृष्णस्य योषितः ।
सस्वनं बाष्पमुत्सृज्य निपपात महीतले ॥ ६४
ताश्च तं कांचने पीठे समुत्थायोपवेश्य च ।
अब्रुवंत्यो महात्मानं परिवार्योपतस्थिरे ॥ ६५
ततः संस्तूय गोविंदं कथयित्वा च पांडवः ।
आश्वास्य ताः स्त्रियश्चापि मातुलं द्रष्टुमभ्यगात् ॥ ६६
तं शयानं महात्मानं वीरमानकदुंदुभिम् ।
पुत्रशोकेन संतप्तं ददर्श कुरुपुंगवः ॥ ६७
तस्याश्रुपरिपूर्णाक्षो व्यूढोरस्को महाभुजः ।
आर्तस्यार्ततरः पार्थः पादौ जग्राह भारत ॥ ६८
वसु० उ०—यैर्जिता भूमिपाश्चैव दैत्याश्च शतशोऽर्जन ।
तान् दृष्ट्वा नेह पश्यामि जीवाम्यर्जुन दुर्मरः ॥ ६९
यौ तावर्जुन शिष्यौ ते प्रियौ बहुमतौ सदा ।
तयोरपनयात्पार्थ वृष्णयो निधनं गता ॥ ७०
ततः पुत्राश्च पौत्राश्च भ्रातॄनथ सखीनयम् ।
शयानान्निहतान् दृष्ट्वा ततो मामब्रवीदिदम् ॥ ७१
संप्राप्तोऽद्यायमस्यांतः कुलस्य भरतर्षभ ।
आगमिष्यति बीभत्सुरिमां द्वारवतीं पुरीम् ॥ ७२
योऽहं तमर्जुनं विद्धि योऽर्जुनः सोहमेव तु ॥ ७३
सस्त्रीषु प्राप्तकालासु पांडवो बालकेषु च ।
प्रतिपत्स्यति बीभत्सुर्भवतश्चौर्ध्वदेहिकम् ॥ ७४
इमां च नगरीं सद्यः प्रतियाते धनंजये ।
प्राकाराट्टालकोपेतां समुद्रः प्लावयिष्यति ॥ ७५
अहं देशे तु कस्मिंश्चित्पुण्ये नियममास्थितः ।
कालं कर्ता सत्यमेव रामेण सह धीमता ॥ ७६
सोऽहं तौ च महात्मानौ चिंतयन् भ्रातरौ तव ।
घोरं ज्ञातिवधं चैव न भुंजे शोककर्षितः ॥ ७७

न भोक्ष्ये न च जीविष्ये दिष्ट्या प्राप्तोऽसि पांडव ।
यदुक्तं पार्थ कृष्णेन तत्सर्वमखिलं कुरु ॥ ७८

अ० उ०—नाहं वृष्णिप्रवीरेण बंधुभिश्चैव मातुल ।
विहीनां पृथिवीं द्रष्टुं शक्ष्यामीह कथंचन ॥ ७९
राजा च भीमसेनश्च सहदेवश्च पांडवः ।
नकुलो याज्ञसेनी च षडेकमनसो वयम् ॥ ८०
सर्वथा वृष्णिदारास्तु बालं वृद्धं तथैव च ।
नयिष्ये परिगृह्याहमिंद्रप्रस्थमरिंदम ।
वज्रोऽयं भवता राजा शक्रप्रस्थे भविष्यति ॥ ८१
सप्तमे दिवसे चैव रवौ विमल उद्गते ।
बहिर्वत्स्यामहे सर्वे सज्जीभवत मा चिरम् ॥ ८२
तां रात्रिमवसत्पार्थः केशवस्य निवेशने ।
महता शोकमोहेन सहसाभिपरिप्लुतः ॥ ८३
श्वोभूतेऽथ ततः शौरिर्वसुदेवः प्रतापवान् ।
युक्तात्मान महातेजा जगाम गतिमुत्तमाम् ॥ ८४
ततः शब्दो महानासीद्वसुदेवनिवेशने ।
दारुणः क्रोशतीना च रुदतीनां च योषिताम् ॥ ८५
ततः शौरिं नृयुक्तेन बहुमौल्येन भारत ।
यानेन महता पार्थो बहिर्निष्क्रामयत्तदा ॥ ८६
तस्याश्वमेधिकं छत्रं दीप्यमानश्च पावकाः ।
पुरस्तात्तस्य यानस्य याजकाश्च ततो ययुः ॥ ८७
यस्तु देशः प्रियस्तस्य जीवतोऽभून्महात्मनः ।
तत्रैनमुपसंकल्प्य पितृमेधं प्रचक्रिरे ॥ ८८
तं चिताग्निगत वीरं शूरपुत्रं वरांगनाः ।
ततोऽन्वारुरुहुः पत्न्यश्चतस्रः पतिलोकगाः ॥ ८९
ततः प्रादुरभूच्छब्दः समिद्धस्य विभावसोः ।
सामगाना च निर्घोषो नराणा रुदतामपि ॥ ९०
ततो वज्रप्रधानास्ते वृष्ण्यंधककुमारकाः ।
सर्वे चैवोदकं चक्रुः स्त्रियश्चैव महात्मन. ॥ ९१
अलुप्तधर्मस्त धर्म कारयित्वा स फाल्गुनः ।
जगाम वृष्णयो यत्र विनष्टा भरतर्षभ ॥ ९२

स तान् दृष्ट्वा निपतितान् कदने भृशदुःखितः ।
बभूवातीव कौरव्यः प्राप्तकालं चकार ह ॥ ९३
ततः शरीरं रामस्य वासुदेवस्य चोभयोः ।
अन्विष्य दाहयामास पुरुषैराप्तकारिभिः ॥ ९४
स तेषां विधिवत्कृत्वा प्रेतकार्याणि पांडवः ।
सप्तमे दिवसे प्रायाद्रथमारुह्य सत्वरः ॥ ९५
अश्वयुक्तै रथैश्चापि गोखरोष्ट्रयुतैरपि ।
स्त्रियस्ता वृष्णिवीराणां रुदत्यः शोककर्षिताः ॥ ९६
अनुजग्मुर्महात्मानं पांडुपुत्रं धनंजयम् ।
भृत्यास्त्वंधकवृष्णीनां सादिनो रथिनश्च ये ॥ ९७
वीरहीनं वृद्धबालं पौरजानपदास्तथा ।
ययुस्ते परिवार्याथ कलत्रं पार्थशासनात् ॥ ९८
निर्याते तु जने तस्मिन् सागरो मकरालयः ।
द्वारकां रत्नसंपूर्णां जलेनाप्लावयत्तदा ॥ ९९
तदद्भुतमभिप्रेक्ष्य द्वारकावासिनो जनाः ।
तूर्णात्तूर्णतरं जग्मुरहो दैवमिति ब्रुवन् ॥ १००
काननेषु च रम्येषु पर्वतेषु नदीषु च ।
निवसन्नानयामास वृष्णिदारान् धनंजयः ॥ १०१
स पंचनदमासाद्य धीमानतिसमृद्धिमत् ।
देशे गोपशुधान्याढ्ये निवासमकरोत्प्रभुः ॥ १०२
ततो लोभः समभवद्दस्यूनां निहतेश्वराः ।
दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन भारत ॥ १०३
ततो यष्टिप्रहरणा दस्यवस्ते सहस्रशः ।
अभ्यधावंत वृष्णीनां तं जनं लोप्त्रहारिणः ॥ १०४
ततोऽर्जुनो धनुर्दिव्यं गांडीवमजरं महत् ।
आरोपयितुमारेभे यत्नादिव कथंचन ॥ १०५
चकार सज्जं कृच्छ्रेण संभ्रमे तुमुले सति ।
चिंतयामास चास्त्राणि न च सस्मार तान्यपि ॥ १०६
वैकल्यं तन्महद्दृष्ट्वा भुजवीर्ये तथा युधि ।
दिव्यानां महदस्त्राणां विनाशाद्व्रीडितोऽभवत् ॥ १०७
वृष्णियोधाश्च ते सर्वे गजाश्वरथयोधिनः ।
न शेकुरावर्तयितुं ह्रियमाणं च तं जनम् ॥ १०८

मिषतां सर्वयोधानां ततस्ताः प्रमदोत्तमाः ।
समंततोऽवकृष्यंत कामाच्चान्याः प्रवव्रजुः ॥ १०९
ततो गांडीवनिर्मुक्तैः शरैः पार्थो धनंजयः ।
जघान दस्यून्सोद्वेगो वृष्णिभृत्यैः सह प्रभुः ॥ ११०
क्षणेन तस्य ते राजन्क्षयं जग्मुरजिह्मगाः ।
अक्षया हि पुरा भूत्वा क्षीणाः क्षतजभोजनाः ॥ १११
स शरक्षयमासाद्य दुःखशोकसमाहतः ।
धनुष्कोट्या तदा दस्यूनवधीत्पाकशासनिः ॥ ११२
प्रेक्षतस्त्वेव पार्थस्य वृष्ण्यंधकवरस्त्रियः ।
जग्मुरादाय ते म्लेच्छाः समंताज्जनमेजय ॥ ११३
धनंजयस्तु दैवं तन्मनसाचिंतयत्प्रभुः ।
दुःखशोकसमाविष्टो निःश्वासपरमोऽभवत् ॥ ११४
ततः स शेषमादाय कलत्रस्य महामतिः ।
हतभूयिष्ठरत्नस्य कुरुक्षेत्रमवातरत् ॥ ११५
हार्दिक्यतनयं पार्थो नगरं मार्तिकावतम् ।
भोजराजकलत्रं च हतशेषं नरोत्तमः ॥ ११६
यौयुधानीं सरस्वत्यां पुत्रं सात्यकिनः प्रियम् ।
न्यवेशयत धर्मात्मा वृद्धबालपुरस्कृतम् ॥ ११७
इंद्रप्रस्थे ददौ राज्यं वज्राय परवीरहा ।
वज्रेणाक्रूरदारास्तु वार्यमाणाः प्रवव्रजुः ॥ ११८
रुक्मिणी त्वथ गांधारी शैब्या हैमवतीत्यपि ।
देवी जांबवती चैव विविशुर्जातवेदसम् ॥ ११९
सत्यभामा तथैवान्या देव्यः कृष्णस्य संमताः ।
वनं प्रविविशू राजंस्तापस्ये धृतनिश्चयाः ॥ १२०
द्वारकावासिनो ये तु पुरुषाः पार्थमभ्ययुः ।
यथार्हं संविभज्यैनान्वज्रे पर्यददज्जयः ॥ १२१
स तत्कृत्वा प्राप्तकालं बाष्पेणापिहितोऽर्जुनः ।
अनुज्ञातो ययौ पार्थो नगरं नागसाह्वयम् ॥ १२२
प्रविश्य च पुरीं वीरः समासाद्य युधिष्ठिरम् ।
आचष्ट तद्यथा वृत्तं वृष्ण्यंधककुलं प्रति ॥ १२३

इति श्रीसंक्षिप्तमहाभारते मौसलपर्व समाप्तम् । श्लो० सं० १२३.

---

# १७ अथ महाप्रास्थानिकपर्व.

## १.

श्रुत्वैवं कौरवो राजा वृष्णीनां कदनं महत् ।
प्रस्थाने मतिमाधाय वाक्यमर्जुनमब्रवीत् ।
कालः पचति भूतानि सर्वाण्येव महामते ॥ १
इत्युक्तः स तु कौंतेयः कालः काल इति ब्रुवन् ।
अन्वपद्यत तद्वाक्यं भ्रातुर्ज्येष्ठस्य धीमतः ॥ २
अर्जुनस्य मतं ज्ञात्वा भीमसेनो यमौ तथा ॥ ३
ततो युयुत्सुमानाय्य प्रव्रजन् धर्मकाम्यया ।
राज्यं परिददौ सर्वं वैश्यापुत्रे युधिष्ठिरः ॥ ४
अभिषिच्य स्वराज्ये च राजानं च परिक्षितम् ।
दुःखार्तश्चाब्रवीद्राजा सुभद्रां पांडवाग्रजः ॥ ५
परिक्षिद्धास्तिनपुरे शक्रप्रस्थे च यादवः ।
वज्रो राजा त्वया रक्ष्यो मा चाधर्मे मनः कृथाः ॥ ६
कृपमभ्यर्च्य च गुरुमथ पौरपुरस्कृतम् ।
शिष्यं परिक्षितं तस्मै ददौ भरतसत्तम ॥ ७
ततोऽनुमान्य धर्मात्मा पौरजानपदं जनम् ।
गमनाय मतिं चक्रे भ्रातरश्चास्य ते तदा ॥ ८
उत्सृज्याभरणान्यंगाज्जगृहे वल्कलान्युत ।
भीमार्जुनयमाश्चैव द्रौपदी च यशस्विनी ॥ ९
विधिवत्कारयित्वेष्टिं नैष्ठिकीं भरतर्षभ ।
समुत्सृज्याप्सु सर्वेऽग्नीन् प्रतस्तुर्नरपुंगवाः ॥ १०
ततस्तु रुरुदुः सर्वाः स्त्रियो दृष्ट्वा नरोत्तमान् ।
प्रस्थितान् द्रौपदीषष्ठान् पुरा द्यूतजितान् यथा ॥ ११
भ्रातरः पंच कृष्णा च षष्ठी श्वा चैव सप्तमः ।
आत्मना सप्तमो राजा निर्ययौ गजसाह्वयात् ॥ १२
पौरैरनुगतो दूरं सर्वैरंतःपुरैस्तथा ।
न चैनमशकत्कश्चिन्निवर्तस्वेति भाषितुम् ॥ १३
युधिष्ठिरो ययावग्रे भीमस्तु तदनंतरम् ।
अर्जुनस्तस्य चान्वेव यमौ चापि यथाक्रमम् ॥ १४
पृष्ठतस्तु वरारोहा श्यामा पद्मदलेक्षणा ।
श्वा चैवानुययावेकः प्रस्थितान् पांडवान् वनम् ॥ १५

ततस्ते नियतात्मान उदीचीं दिशमास्थिताः ।
ददृशुर्योगयुक्ताश्च हिमवंतं महागिरिम् ॥ १६
तं चाप्यतिक्रमंतस्ते ददृशुर्वालुकार्णवम् ।
अवैक्षंत महाशैलं मेरुं शिखरिणा वरम् ॥ १७
तेषां तु गच्छतां शीघ्रं सर्वेषां योगधर्मिणाम् ।
याज्ञसेनी भ्रष्टयोगा निपपात महीतले ॥ १८
यु० उ०—पक्षपातो महानस्या विशेषेण धनंजये ।
तस्यैतत्फलमद्यैषा भुंक्ते पुरुषसत्तमाः ॥ १९
सहदेवस्ततो विद्वान्निपपात महीतले ॥ २०
यु० उ०—आत्मनः सदृशं प्राज्ञं नैषोऽमन्यत कंचन ।
तेन दोषेण पतितस्तस्मादेष नृपात्मजः ॥ २१
कृष्णां निपतितां दृष्ट्वा सहदेवं च पांडवम् ।
आर्तो बंधुः प्रियः शूरो नकुलो निपपात ह ॥ २२
यु० उ०—रूपेण मत्समो नास्ति कश्चिदित्यस्य दर्शनम् ।
नकुल पतितस्तस्मादागच्छ त्वं वृकोदर ॥ २३
तांस्तु प्रपतितान् दृष्ट्वा पांडवः श्वेतवाहनः ।
पपात शोकसंतप्तस्ततोऽनु परवीरहा ॥ २४
अवमेने धनुर्ग्राहानेष सर्वांश्च फाल्गुनः ।
इत्युक्त्वा प्रस्थितो राजा भीमोऽथ निपपात ह ॥ २५
पतितश्चाब्रवीद्भीमो धर्मराजं युधिष्ठिरम् ।
भो भो राजन्नवेक्षस्व पतितोऽस्मि प्रियस्तव ॥ २६
यु० उ०—अतिभुक्तं च भवता प्राणेन च विकत्थसे ।
अनवेक्ष्य परं पार्थ तेनासि पतितः क्षितौ ॥ २७
इत्युक्त्वा तं महाबाहुर्जगामानवलोकयन् ।
श्वाप्येकोऽनुययौ यस्ते बहुशः कीर्तितो मया ॥ २८
ततः सन्नादयञ् शक्रो दिवं भूमिं च सर्वशः ।
रथेनोपययौ पार्थमारोहेत्यब्रवीच्च तम् ॥ २९
यु० उ०—भ्रातरः पतिता मेऽत्र गच्छेयुस्ते मया सह ।
न विना भ्रातृभिः स्वर्गमिच्छे गंतुं सुरेश्वर ॥ ३०
इं० उ०—निक्षिप्य मानुषं देहं गतास्ते भरतर्षभ ।
अनेन त्वं शरीरेण स्वर्गं गंता न संशयः ॥ ३१

यु० उ०—अयं श्वा भूतभव्येश भक्तो मां नित्यमेव ह ।
स गच्छेत मयासार्धमानृशंस्या हि मे मतिः ॥ ३२
इं० उ०—स्वर्गे लोके श्ववतां नास्ति धिष्ण्यमिष्टापूर्तं क्रोधवशा हरंति ।
ततो विचार्य क्रियतां धर्मराज त्यज श्वानं नात्र नृशंसमास्ति ॥ ३३
यु० उ०—भक्तत्यागं प्राहुरत्यंतपापं तुल्यं लोके ब्रह्मवध्याकृतेन ।
तस्मान्नाहं जातु कथंचनाद्य त्यक्षाम्येनं स्वसुखार्थी महेन्द्र ॥ ३४
तद्धर्मराजस्य वचो निशम्य धर्मस्वरूपी भगवानुवाच ।
युधिष्ठिरं प्रीतियुक्तो नरेंद्रं श्लक्ष्णैर्वाक्यैः संस्तवसंप्रयुक्तैः ॥ ३५
अभिजातोऽसि राजेन्द्र पितुर्वृत्तेन मेधया ।
अनुक्रोशेन चानेन सर्वभूतेषु भारत ॥ ३६
अतस्तवाक्षया लोकाः स्वशरीरेण भारत ।
प्राप्तोऽसि भरतश्रेष्ठ दिव्यां गतिमनुत्तमाम् ॥ ३७
स तं रथं समास्थाय राजा कुरुकुलोद्वहः ।
ऊर्ध्वमाचक्रमे शीघ्रं तेजसाऽऽवृत्य रोदसी ॥ ३८

इति श्रीसंक्षिप्तमहाभारते महाप्रास्थानिकपर्व समाप्तम् । श्लो. सं. ३८



*

# १८ अथ स्वर्गारोहणपर्व.

१

स्वर्गं त्रिविष्टपं प्राप्य धर्मराजो युधिष्ठिरः ।
दुर्योधनं श्रिया जुष्टं ददर्शासीनमासने ।
भ्राजमानमिवादित्यं वीरलक्ष्म्याभिसंवृतम् ॥ १
ततो युधिष्ठिरो दृष्ट्वा दुर्योधनममर्षितः ।
सहसा सन्निवृत्तोऽभूच्छ्रियं दृष्ट्वा सुयोधने ॥ २
ब्रुवन्नुच्चैर्वचस्तान् वै नाहं दुर्योधनेन वै ।
सहितः कामये लोकांल्लुब्धेनादीर्घदर्शिना ॥ ३
नेह पश्यामि विबुधा राधेयममितौजसम् ।
राजानो राजपुत्राश्च ये मदर्थे हता रणे ॥ ४
क्व ते महारथाः सर्वे शार्दूलसमविक्रमाः ।
द्रष्टुमिच्छामि तां चाहं पांचालीं धर्मचारिणीम् ॥ ५
दे० उ०—यदि वै तत्र ते श्रद्धा गम्यतां पुत्र मा चिरम् ।
इत्युक्त्वा तं ततो देवा देवदूतमुपादिशन् ॥ ६
अग्रतो देवदूतस्तु ययौ राजा च पृष्ठतः ।
पंथानमशुभं दुर्गं सेवितं पापकर्मभिः ॥ ७
तमसा संवृतं घोरं केशशैवलशाड्वलम् ।
युक्तं पापकृतां गन्धैर्मांसशोणितकर्दमम् ॥ ८
स तत्कुणपदुर्गंधमशिव लोमहर्षणम् ।
जगाम राजा धर्मात्मा मध्ये बहु विचिंतयन् ॥ ९
ददर्शोष्णोदकैः कीर्णां नदीं चापि सुदुर्गमाम् ।
असिपत्रवनं चैव निशितक्षुरसंवृतम् ॥ १०
युधिष्ठिरस्तु निर्विण्णस्तेन गंधेन मूर्छितः ।
निवर्तने धृतमनाः पर्यावर्तत भारत ॥ ११
स सन्निवृत्तो धर्मात्मा दुःखशोकसमाहतः ।
शुश्राव तत्र वदतां दीना वाचः समंततः ॥ १२
भो भो धर्मज राजर्षे पुण्याभिजन पांडव ।
अनुग्रहार्थमस्माकं तिष्ठ तावन्मुहूर्तकम् ॥ १३
आयाति त्वयि दुर्धर्षे वाति पुण्यः समीरणः ।
तव गंधानुगस्तात येनास्मान् सुखमागमत् ॥ १४

तेषां तु वचनं श्रुत्वा दयावान् दीनभाषिणाम् ।
अहो कृच्छ्रमिति प्राह तस्थौ स च युधिष्ठिरः ॥ १५
उवाच के भवतो वै किमर्थं चेह तिष्ठत ।
इत्युक्तास्ते ततः सर्वे समंतादवभाषिरे ॥ १६
कर्णोऽहं भीमसेनोऽहमर्जुनोऽहमिति प्रभो ।
नकुलः सहदेवोऽहं धृष्टद्युम्नोऽहमित्युत ॥ १७
द्रौपदी द्रौपदेयाश्च इत्येवं ते विचुक्रुशुः ।
ततो विममृषे राजा किं त्विदं दैवकारितम् ॥ १८
किं तु तत्कलुषं कर्म कृतमेभिर्महात्मभिः ।
य इमे पापगंधेऽस्मिन् देशे संति सुदारुणे ॥ १९
किं कृत्वा धृतराष्ट्रस्य पुत्रो राजा सुयोधनः ।
तथा श्रिया युतः पापैः सह सर्वैः पदानुगैः ॥ २०
किन्नु सुप्तोऽस्मि जागर्मि चेतयामि न चेतये ।
अहो चित्तविकारोऽयं स्याद्वा मे चित्तविभ्रमः ॥ २१
एवं बहुविधं राजा विममर्ष युधिष्ठिरः ।
दुःखशोकसमाविष्टश्चिंताव्याकुलितेंद्रियः ॥ २२
क्रोधमाहारयच्चैव तीव्रं धर्मसुतो नृपः ।
देवांश्च गर्हयामास धर्मं चैव युधिष्ठिरः ॥ २३
स्थिते मुहूर्तं पार्थे तु धर्मराजे युधिष्ठिरे ।
आजग्मुस्तत्र कौरव्य देवाः शक्रपुरोगमाः ॥ २४
नादृश्यत च तास्तत्र यातनाः पापकर्मिणाम् ।
नदी वैतरणी चैव कूटशाल्मलिना सह ॥ २५
ततः शक्रः सुरपतिः श्रिया परमया युतः ।
युधिष्ठिरमुवाचेदं सांत्वपूर्वमिदं वचः ॥ २६
एह्येहि पुरुषव्याघ्र कृतमेतावता विभो ।
सिद्धिः प्राप्ता महाबाहो लोकाश्चाप्यक्षयास्तव ॥ २७
न च मन्युस्त्वया कार्यः शृणु चेदं वचो मम ।
अवश्यं नरकस्तात द्रष्टव्यः सर्वराजभिः ॥ २८
शुभानामशुभानां च द्वौ राशी पुरुषर्षभ ।
यः पूर्वं सुकृतं भुंक्ते पश्चान्निरयमेव सः ।
पूर्वं नरकभाग्यस्तु पश्चात्स्वर्गमुपैति सः ॥ २९

भूयिष्ठं पापकर्मा यः स पूर्वं स्वर्गमश्नुते ।
तेन त्वमेवं गमितो मया श्रेयोर्थिना नृप ॥ ३०
व्याजेन हि त्वया द्रोण उपाचीर्णः सुतं प्रति ।
व्याजेनैव ततो राजन् दर्शितो नरकस्तव ॥ ३१
कृच्छ्रं पूर्वं चानुभूय इतःप्रभृति कौरव ।
विहरस्व मया सार्धं गतशोको निरामयः ॥ ३२
राजसूयजितांल्लोकान् स्वयमेवासिकन्द्धितान् ।
प्राप्नुहि त्वं महाबाहो तपसश्च महाफलम् ॥ ३३
उपर्युपरि राज्ञां हि तव लोका युधिष्ठिर ।
हरिश्चन्द्रसमाः पार्थ येषु त्वं विहरिष्यसि ॥ ३४
एषा देवनदी पुण्या पार्थ त्रैलोक्यपावनी ।
आकाशगंगा राजेंद्र तत्राप्लुत्य गमिष्यसि ॥ ३५
अत्र स्नातस्य भावस्ते मानुषो विगमिष्यति ।
गतशोको निरायासो मुक्तवैरो भविष्यसि ॥ ३६
गंगां देवनदीं पुण्यां पावनीमृषिसंस्तुताम् ।
अवगाह्य ततो राजा तनुं तत्याज मानुषीम् ॥ ३७
ततो ययौ वृतो देवैः कुरुराजो युधिष्ठिरः ।
धर्मेण सहितो धीमान् स्तूयमानो महर्षिभिः ॥ ३८
यत्र ते पुरुषव्याघ्राः शूरा विगतमन्यवः ।
पांडवा धार्तराष्ट्राश्च स्वानि स्थानानि भेजिरे ॥ ३९
एतत्ते सर्वमाख्यातं विस्तरेण महाद्युते ।
कुरूणां चरितं कृत्स्नं पांडवानां च भारत ॥ ४०
सौतिरुवाच—एतच्छ्रुत्वा द्विजश्रेष्ठाः स राजा जनमेजयः ।
विस्मितोऽभवदत्यर्थं यज्ञकर्मान्तरेष्वथ ॥ ४१
ततो द्विजातीन् सर्वांस्तान् दक्षिणाभिरतोषयत् ।
पूजिताश्चापि ते राज्ञा ततो जग्मुर्यथागतम् ॥ ४२
विसर्जयित्वा विप्रांस्तान् राजापि जनमेजयः ।
ततस्तक्षशिलायाः स पुनरायाद्गजाह्वयम् ॥ ४३
एतत्ते सवमाख्यातं वैशंपायनकीर्तितम् ।
व्यासाज्ञया समाज्ञातं सर्पसत्रे नृपस्पहि ॥ ४४

जयो नामेतिहासोऽयं श्रोतव्यो मोक्षमिच्छता ।
ब्राह्मणेन च राज्ञा च गर्भिण्या चैव योषिता ॥ ४
इतिहासमिमं पुण्यं महार्थं वेदसंमितम् ।
व्यासोक्तं श्रूयते येन कृत्वा ब्राह्मणमग्रतः ॥ ४
स नरः सर्वकामांश्च कीर्तिं प्राप्येह शौनक ।
गच्छेत्परमिकां सिद्धिमत्र मे नास्ति संशयः ॥ ४
मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥ ४
हर्षस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पंडितम् ॥ ४
ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ ५
न जातु कामान्न भयान्न लोभात् ।
धर्मं त्यजेज्जीवितस्यापि हेतोः ॥
नित्यो धर्मः सुखदुःखे त्वनित्ये ।
जीवो नित्यो हेतुरस्य त्वनित्यः ॥
इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् ।
स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥

इति श्रीसंक्षिप्तमहाभारते स्वर्गारोहणपर्व समाप्तम् । श्लो. सं. ५२

**समाप्तं संक्षिप्तमहाभारतम् ।**